श्रीः

# सनातनधर्मविजयम्

## महाकाव्यम्

---

कविवरश्रीमदखिलानन्दशर्मप्रणीतम्

---

तत्कृत "विजयवैजयन्तीटीकया" सहितम्

---

तस्येदं

प्रथमसंस्करणम्

---

तच्च

प्रयागस्थे हिन्दीयन्त्रालये

मुद्रितम्

---

सर्वाधिकारः प्रकाशकायत्तः

---

मूल्यं रूप्यक चतुष्टयम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# हमारे अन्य मुद्रित ग्रन्थ

## पिङ्गल छन्दः सूत्र सभाष्य

छन्दःशास्त्र के इस ग्रंथ पर संस्कृत में कोई अच्छा भाष्य नहीं था। इसलिये सर्वसाधारण के लाभार्थ सरल संस्कृत में यह भाष्य लिखा गया है। इसमें प्रस्तार, नष्ट, उद्दिष्ट, मेरु, मर्कटी, पताका, आदि दुरूह प्रयोगों का अच्छा विवेचन किया गया है। मूल्य ।।।) मात्र है।

## काव्यालङ्कार सूत्र सभाष्य

इन अलङ्कार सूत्रों पर पहले वामन की वृत्ति थी, परंतु उससे पढ़ने वालों को कुछ लाभ नहीं था इसलिये सरल संस्कृत में इसपर हमने भाष्य लिखा है। ग्रंथ पढ़ने योग्य है। मूल्य ।।) मात्र है।

## वैदिक सिद्धान्त वर्णन

दार्शनिक विषयों पर यह काव्य लिखा गया है। इसमें जीव ईश्वर प्रकृति महाप्रलय जगत्सृष्टि वेदाविर्भाव मनुष्यकर्त्तव्य गर्भवास परलोक-गमन आदि विषयों का वर्णन है। मूल्य ।।=) मात्र है।

## सत्यार्थप्रकाशालोचन

भूत दयानन्दप्रणीत समस्त ग्रंथों का युक्ति प्रमाण संगत खंडन करने के लिये हमने एक "आलोचनग्रन्थमाला" लिखी है। इस का यह पहला पुष्प है। इसमें सत्यार्थप्रकाश का समस्त इतिहास, दयानन्द की चाल-बाजियां, प्रत्येक संस्करण में इसका परिवर्तन, पूर्वापर विरोध इन सब बातों का विवेचन किया गया है। मूल्य १) मात्र है।

मिलने का पता—

अखिलानन्द शर्मा—( पाठक )

मु० पो० अनूपशहर

जि० बुलन्दशहर ( यू० पी० )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीः

# श्रीसनातनधर्मविजयम्


... वेद वेदांग विद्यालय
ग्रन्थालय
आगत क्रमांक..................
दिनांक..................


## महाकाव्यम्

---

कविवरश्रीमदखिलानन्दशर्मप्रणीतम्

---

तत्कृत "विजयवैजयन्तीटीकया" समेतम्

---

तस्येदं ..........

प्रथमसंस्करणम्

---

तच्च

प्रयागस्थे हिन्दीयन्त्रालये

मुद्रितम्

---


सर्वाधिकारः प्रकाशकायत्तः


---

मूल्यं रूप्यक चतुष्टयम्


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# महाकाव्यसम्बन्धि वैय्यासिकमैतिह्यम्

## कल्किपुराणात्

"इतिहासोद्भवं वृत्तं" समाश्रित्य महाकाव्यं प्रणेतव्यमिति साहित्यविदामाम्नायः । तत्रेदं महाकाव्यं वैय्यासिकमैतिह्यमवलम्ब्य मयोपनिबद्धम् । तच्चैतिह्यं द्वैपायनेन मुनिनाऽनुभागवते भविष्ये यथास्थलमुपवर्णितम् ।-तद्यथा—

काले तस्मिन्द्विजो भूत्वा धर्मः परजनैः सह ।
समाजगाम कलिना वलिनातिनिराकृतः ॥९॥
ऋतं प्रसादमभयं सुखं मुदमथ स्वयम् ।
योगमर्थं ततोऽदर्पं स्मृतिं क्षेमं प्रतिश्रयम् ॥ १० ॥
नरनारायणौ चोभौ हरेरंशौ तपोवलौ ।
धर्मस्तेतान्समादाय पुत्रान् स्त्रींश्चागतस्त्वरन् ॥ ११ ॥
श्रद्धा मैत्री दया शान्तिः पुष्टिस्तुष्टिः क्रियोन्नतिः ।
बुद्धिर्मेधा तितिक्षा च ह्रीर्मूर्तिर्धर्मपालकाः ॥ १२ ॥
एतास्तेन सहायाता निजवन्धुगणैः सह ।

पद्यजातमेतत्तृतीयांशे षष्ठाध्याये समुपलभ्यते । एतदवलम्ब्याऽत्र महाकाव्ये धर्मस्य पुरुषत्वेनवर्णनं श्रद्धादीनां धर्मानुगमनञ्च समुपनिवद्धम् । एवमेव—

विश्वकर्मकृतं तत्र देवराजाज्ञया महत् ।
पद्मसम्बाधममलं सर्वर्तुगुणशोभनम् ॥ १६ ॥
सप्तयोजनविस्तीर्णं चातुर्वर्ण्यजनाकुलम् ।
सूर्यरश्मिप्रतीकाशं प्रासादशतशोभितम् ॥ २० ॥
सर्वर्तु सुखदं रम्यं शम्भलं मुदितोऽविशत् २१

इति द्वितीयांशस्य षष्ठाध्यायपठितं पद्यजातमवलम्ब्याऽत्र महाकाव्ये "शम्भल" नाम्नो-भगवदाश्रमस्य वर्णनमुपनिवद्धम् । आश्रमपदमेतच्चन्द्रनगरान्नातिदूरे वर्त्तते । असाधेव धर्मावसथाद्धर्मदेवस्य दिग्विजयाय गमनं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुनः प्रत्यागमनञ्च वर्णितम्। भगवद्धर्मयोरन्योन्याश्रयतया तादात्म्यसम्बन्धेन च भगवज्जन्मभूमिरेव धर्मजन्मभूमिरिति रूपकम्। धर्मोद्यानमेतद्द्वैपायनेन तत्रैवोपनिबद्धम्। यथा—

यत्राष्टषष्ठि तीर्थानां सम्भवः शम्भलेऽभवेत्।
मृत्यामोक्षः त्रिलोकल्केरकल्कस्य पदाश्रयात् ॥४॥
वनोपवनसन्ताननानाकुसुमसङ्कुलैः ।
शोभितं शम्भलग्रामं मन्ये मोक्षपदं भुवि ॥५॥

तृतीयांशेऽष्टादशाध्याये पद्यजातमेतदुपलभ्यते । सप्तयोजनविस्तीर्णोऽयं धर्मभूपरिसरः । माहाभाग्यन्तदेतदस्माकं यद्धर्मावसथपर्यन्तभूमेः समाश्रयणम्। रामगङ्गाभागीरथ्योरन्तरालवर्ती सप्तयोजनविस्तीर्णोऽयं अनपदः पुण्यवतामेवभोगभूमिः। अतएव दिग्विजयानन्तरं पितुराज्ञया धर्मस्य गङ्गातीरे निवसनं द्वैपायनेनोपनिबद्धम्। यथा—

गङ्गायमुनयोर्मध्ये स्नात्वावभृथमादरात् ।
दक्षिणाभिः समभ्यर्च्य ब्राह्मणान्वेदपारगान् ॥६॥
भोजयामास विधिवत्सर्वकर्मसमृद्धिभिः ॥११॥
दत्त्वा दानानि पात्रेभ्यो ब्राह्मणेभ्यः स ईश्वरः ॥१४॥
उवासतीरे गङ्गायाः पितृवाक्यानुमोदितः ॥१५॥

पद्यजातमेतत्तृतीयांशे षोडषाध्याये समुपलभ्यते । एतदेवावलम्ब्यात्र राज्याभिषेकादनन्तरं स्वदेशे धर्मदेवावस्थानमुपनिबद्धम्।

वेदा धर्मः कृतयुगं देवा लोकाश्चराचराः ।
हृष्टाः पुष्टाःसुसन्तुष्टाः कल्कौ राजनि चाभवन् ॥२॥
धर्मश्चतुष्पादभवत्कृतपूर्णं जगत्त्रयम् ॥३०॥
देवा यथोक्तफलदाश्चरन्ति भुवि सर्वतः ।
सर्वसस्या वसुमती हृष्टपुष्टजनावृता ॥३१॥
शाठ्यचौर्यानृतैर्हीना आधिव्याधिविवर्जिताः ॥३२॥

पद्यजातमेतत्तृतीयांशे षोड़षाध्याये, चतुर्दशाध्यायेच समुपलभ्यते। एतन्मूलकमेवात्र महाकाव्ये दिग्विजयोत्तरं धर्मराज्यवर्णनम्। तत्र च जनानामानन्दानुभवनम्। एवमेव—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विप्रा वेदविदः सुमङ्गलरता नार्यस्तु नित्यव्रतैः
पूजाहोमपराः पतिव्रतधरा यागोद्यतःक्षत्रियाः ।
वैश्या वस्तुषु धर्मतो विनिमयैः श्रीविष्णुपूजापराः
शूद्रास्तु द्विजसेविनो हरिकथाऽऽलापाः सपर्या पराः ॥३३॥

तृतीयांशस्थ चतुर्दशाध्यायपठितमेतत्पद्यमवलम्ब्याऽत्र वर्णधर्मविवेचनं दिनचर्यावर्णनञ्चोपनिबद्धम् । एवमेव---

शृणु कल्के ! ममाख्यानं धर्मोहं ब्रह्मरूपिणः ।
तव वक्षःस्थलाज्जातः कामदः सर्वदेहिनाम् ॥१९॥
देवानामग्रणीर्हव्यकव्यानां कामधुग्विभुः ।
तवाज्ञया चराम्यत्र साधुकीर्तिकृदन्वहम् ॥२०॥
सोहं कालेन बलिना कलिनातिनिराकृतः ।
शककाम्बोजशबरैः सर्वैरायासदायिभिः ॥२१॥
अधुना तेऽखिलाधार पादमूलमुपागतः ॥२२॥
इति वाग्भिरपूर्वाभिर्धर्मेण परिबोधितः ।
कल्किः कल्कहरः श्रीमानाह तं हर्षयञ्छनैः ॥२३॥

पद्यानीमानि तृतीयांशगतषष्ठाध्याय पठितानि समवलम्ब्याऽत्र महाकाव्ये कलिक्लिन्नस्य धर्मस्य भगवत्सविधे गमनमुपवर्णितम् । एवमेव—

धर्मस्य तद्वचः श्रुत्वा ब्रह्मा तानाह विस्मितान् ।
प्रसादयित्वा तं विष्णुं साधयिष्यास्यभीप्सितम् ॥२॥
चतुर्भिर्भ्रातृभिर्देव करिष्यामि कलिक्षयम् ।
भवन्तो बान्धवा देवाः स्वांशेनावतरिष्यथ ॥५॥
यात यूयं भुवं देवाः स्वांशावतरणे रताः ॥७॥

पद्यानीमानि प्रथमांशगतद्वितीयाध्यायपठितानि समवलम्ब्य देवांशभूतानां धर्माचार्याणां वर्णनमुपनिबद्धम् । तदङ्गत्वेन च धर्मप्रचारकाणाम् । एवमेव

सरित्समुद्रा गिरयो लोकाः सस्थाणुजङ्गमाः ।
सहर्षा ऋषयो देवाः जाते विष्णौ जगत्पतौ ॥१२॥
बभूवुः सर्वसत्वानामानन्दा विविधाश्रयाः ।
नृत्यन्ति पितरो देवास्तुष्टा हृष्टाजगुर्यशः ॥१३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चक्रु र्वाद्यानि गन्धर्वा ननृतुश्चाप्सरोगणाः ॥१४॥

पद्यानीमानि तृतीयांशगतद्वितीयाध्यायपठितानि समवलम्ब्यात्रमहाकाव्ये धर्माचार्यजन्मसमये नानाविधाऽऽनन्दनिबोधकं वर्णनमुपनिबद्धम्। तदनुगामितया च शकुनशास्त्रपठितानां शुभशकुनानामत्यावश्यकं वर्णनम्।

एवमेव—

कलिना बलिना धर्मघातिना द्विजपातिना ।
निराकृता धर्मरता गतावर्षान्तरान्तरम् ॥४५॥
ये स्वल्पतपसो विप्राः स्थिताः कलियुगान्तरे ।
शिश्नोदरभतोऽधर्मपरा विहतसत्क्रियाः ॥४६॥

तृतीयांशगत द्वितीयाध्यायपठितमेतत्पद्यद्वयमवलम्ब्याऽत्र बुद्धत्रस्तानां ब्राह्मणानां गिरिगह्वरेषु पलायनमुपनिबद्धम्। बुद्धानुगामिनाञ्चावस्थानम्।

एवमेव---

इति कल्केर्वचः श्रुत्वा धर्मः परमहर्षितः ॥२८॥
सन्नद्धः साधुसत्कारैर्वेदब्रह्ममहारथः ।
नानाशास्त्रान्वेषणेषु सङ्कल्पवरकामुकः ॥३०॥
सप्तस्वराश्वो भूदेवसारथिर्वह्निसङ्गतः ।
क्रियाभेदबलोपेतः प्रययौ धर्मनायकः ।३१॥
यज्ञदानतपःश्राद्धैर्यमैश्चनियमैर्वृतः ॥३२॥

तृतीयांशगत षष्ठाध्यायपठितानीमानि पद्यान्यवलम्ब्याऽत्र महाकाव्ये शस्त्रास्त्रसम्पत्तिसहितस्य धर्मदेवस्य सेनासन्नाहवर्णनमुपनिबद्धम्। तदनुकूलं चान्यत्। एवमेव

अक्षौहिणीभिर्दशभिर्धर्मः कलिबलापहः ।
समावृतस्तथादेवैर्दिवीन्द्र इव धर्मराट् ॥७॥
भ्रातृपुत्रैः सुहृद्भिश्च मुदितैः सैनिकैर्वृतः ।
ययौ दिग्विजयाकांक्षी जगतामीश्वरः प्रभुः ॥८॥

पद्यद्वयमेतत्तृतीयांशगत षष्ठाध्यायपठितमवलम्ब्याऽत्र धर्मदेवस्य दिग्विजयार्थमुद्यमनमुपनिबद्धम्। एवमेव

अहं कृतयुगंश्रीश ! तवादेशकरं परम् ।
तवाविर्भावविभववीक्षणार्थमिहागतम् ॥४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतितद्वच आकर्ण्य कल्किर्निजजनावृतः ।
प्रहर्षमतुलं लब्ध्वा श्रुत्वा तद्वचनामृतम् ॥१८॥
अवहित्थामुपालक्ष्य युगस्याह जनान्हितान् ।
योद्धुकामः कलेः पुर्यां हृष्टो विशसने प्रभुः ॥१९॥

पद्यत्रयमेतत्तृतीयांशगतपञ्चमाध्यायपठितमवलम्ब्याऽत्र महाकाव्ये कृतावतरणे सति तदादेशमनुगतस्य धर्मस्य "विशसन" नाम्नि कलेर्नगरे युद्धाय गमनमुपनिबद्धम् । एवमेव [ यामि दिग्विजयाय भोः ] इत्युपक्रम्य

सेनागणैः परिवृतः प्रययौ कीकटं पुरम् ॥४०॥
बुद्धालयं सुविपुलं वेदधर्मबहिष्कृतम् ।
पितृदेवार्चनाहीनं परलोकविलोपनम् ॥४१॥
देहात्मवादबहुलं कुलजातिविवर्जितम् ।
धनस्त्रीभक्ष्यभोग्येषु स्वपराभेददर्शनम् ॥४२॥

द्वितीयांशगत षष्ठाध्यायपठितानीमानि त्रीणि पद्यान्यवलम्ब्याऽत्र दलबलसहितस्य धर्मदेवस्य "कीकटपुर" गमनवर्णनमुपनिबद्धम् ॥ वर्तमान समये वर्तमानस्य पाटलिपुत्रस्य वैदिक समये कीकटपुरमित्याख्यासीदिति वैदिकाः । वेदे [ किं ते कृण्वन्ति कीकटेषु गावः ३।५३।१४ ] इति ऋगवेदीयमन्त्रव्याख्यामवलम्ब्य [ कीकटो नाम देशोऽनार्यनिवास ] इति निरुक्तकारो यास्कमुनिरवदत् । तदेतद्विषयान्तरगमनमप्रासङ्गिकं विहायास्माभिः प्रकृतमेवानुगम्यते

निदर्शितमस्माभिर्धर्मदेवयुद्धाऽऽयोजनम् । विवेचितश्चबहुशस्तत्पक्षपातिनां भगवदवताराणामवतरणम् । सांप्रतं तत्प्रतिद्वन्द्विभूतस्य कलेरधर्मस्य वा प्रसिद्धतरमैतिह्यमुपपादयितुमुपक्रम्यते । यथा

कः कलिः कुत्र वा जातो जगतामीश्वरः प्रभुः ।
कथं वा नित्यधर्मस्य विनाशः कलिना कृतः ॥६॥

प्रथमांशगत प्रथमाध्यायपठितमेतत्पद्यम् । प्रश्नश्चायं नैमिषारण्यवासिनां शौनकादीनाम् एतस्योत्तरं सर्वधर्मज्ञो लोमहर्षणपुत्रः [ सूतउवाच ] यथा—

प्रलयान्ते जगत्स्रष्टा ब्रह्मालोकपितामहः ।
ससर्ज घोरं मलिनं पृष्ठदेशात्स्वपातकम् ॥१४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स चाधर्म इति ख्यातस्तस्य वंशानुकीर्तनात् ।
श्रवणान्मननाल्लोकः सर्वपापैः प्रमुच्यते ॥१५॥
अधर्मस्य प्रिया रम्या "मिथ्या" मार्जारलोचना ।
तस्य पुत्रोऽतितेजस्वी "दम्भः" परमकोपनः ॥१६॥
स "मायायां" । भगिन्यान्तु "लोभं" पुत्रञ्च कन्यकाम् ।
"निकृतिं" जनयामास तयोः "क्रोधः" सुतोऽभवत् ॥१७॥
स "हिंसायां" भगिन्यान्तु जनयामास तं "कलिम्"
बामहस्तधृतोपस्थं तैलाभ्यक्ताञ्जनप्रभम् ॥१८॥
काकोदरं करालास्यं लोलजिह्वं भयानकम् ।
पूतिगन्धं द्यूतमद्यस्त्रीसुवर्णकृताश्रयम् ॥१९॥
भगिन्यां तु "दुरुक्त्यां" स "भयं" पुत्रञ्च कन्यकाम् ।
"मृत्युं" च जनयामास तयोश्च "निरयो" ऽभवत् ॥ २० ॥
"यातनायां" भगिन्यां स लेभे पुत्रायुतायुतम् ।
इत्थं कलिकुले जाता वहवो धर्मनिन्दकाः ॥ २१ ॥
यज्ञाध्ययनदानादिवेदमार्गविनाशकाः ।
आधिव्याधिजराग्लानिदुःखशोकभयाश्रयाः ॥ २२ ॥
कलिराजानुगाश्चेरुर्यूथशो लोकनाशकाः ॥ २३ ॥

इति । पद्यजातमेतत्प्रथमांशे प्रथमाध्याये समुपलभ्यते । एतदेवावलम्ब्याऽत्र महाकाव्ये कलेस्तदनुगामिनां क्रोधादीनां च वर्णनमुपनिवद्धम् । [ पुत्राऽयुताऽयुतमिति ] सङ्केतमात्रमवलम्ब्य चार्वाकादिनास्तिकव्रातसमुद्भवनं सोत्प्रेक्षमुपनिवद्धम् । एवमेव ।

कल्केर्ज्येष्ठास्त्रयः शूराः कवि-प्राज्ञ-सुमन्त्रकाः ।
पितृमातृप्रियकरा गुरुविप्रप्रतिष्ठिताः ॥ ३१ ॥
कल्केरंशाः पुरो जाताः साधवो धर्मतत्पराः ।
गार्ग्य-भर्ग्य-विशालाद्या ज्ञातयस्तदनुव्रताः ॥ ३२ ॥
विशालयूपभूपालपालितास्तापवर्जिताः ।
ब्राह्मणाः कल्किमालोक्य परां प्रीति मुपागताः ॥ ३३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पद्यत्रितयमेतत्प्रथमांशगत-द्वितीयाध्यायपठितमवलम्ब्याऽत्र महाकाव्ये कलिकुटुम्बप्रतिद्वन्द्वी धर्मदेवकुटुम्बः समुपनिबद्धः । क्रोधादयः कलेः कुटुम्बिनः । तदवतारा दयानन्दादयः । शमदमादयो धर्मदेवकुटुम्बिनः । तदवताराः कुमारिलभट्टादयः । अधर्मप्रचारका नास्तिकाः कलिसहकारिणः । धर्मप्रचारकाः सर्वेऽपि धर्मसहकारिणः । एवमन्यदप्यत्रोह्यम् ।

अधर्मवंश्यास्तान्दृष्ट्वा जनान्धर्मक्रियापरान् ।
लोभानृतादयो जग्मुस्तद्देशाद्दुःखिता भृशम् ॥ ३५ ॥

प्रथमांशगत-तृतीयाध्यायपठितमेतत्पद्यमवलम्ब्याऽत्र महाकाव्ये धर्मत्रस्तानां कामादीनां द्वीपान्तरगमनमुपनिबद्धम् । तच्च कलेरनुरूपमेव कुत इति चेत् कलेरपि द्वीपान्तरगमनप्रमाणोपलम्भात् । वर्णितमेतद् द्वैपायनेनैव यदन्यत्रोद्धरिष्यामः प्रसङ्गात् । एवमेव ।

ततो दिग्विजये भूपान्धर्महीनान्कलिप्रियान् ।
निगृह्य बौद्धान्देवापिं मरुञ्च स्थापयिष्यसि ॥ १ ॥

इति प्रथमांशगत-तृतीयाध्यायपठितपद्यमवलम्ब्याऽत्र गौरीगुरोर्गह्वरमुपगतस्य शूलपाणेर्महाकालनाम्नो भगवतोवर्णनमुपनिबद्धम् । आशीर्वादात्मकमादेशात्मकं च शङ्करवचनम् । यदूर्ध्वमवतिष्ठते एवमेव—

रेबौद्धा ! मापलायध्वं निवर्तध्वं रणाङ्गणे ।
युध्यध्वं पौरुषं साधु दर्शयध्वं पुनर्मम ॥ ३ ॥

द्वितीयांशगत-सप्तमाध्यायपठितमेतत्पद्यमवलम्ब्याऽत्र महाकाव्ये युद्धघोषणा प्रदानं धर्मदेवकृतमुपनिबद्धम् । एवमेव—

श्रुत्वा जिनो निजगणैः कल्केरागमनं क्रुधा ।
अक्षौहिणीभ्यां सहितः संबभूव पुराद्बहिः ॥ ४४ ॥

द्वितीयांशगत-षष्ठाध्यायपठितमेतत्पद्यमवलम्ब्याऽत्र-विहारदेशे-पाटलिपुत्रपरिसरे धर्मदेवशिबिरागतजैनश्रावकाणां वर्णनमुपनिबद्धम् । एषां रूपकालङ्कारवर्णन्नतु—

भस्मना गुण्ठितमुखा रक्तवस्त्रा निवारिताः ।
विकीर्णकेशाः परितो यान्ति सन्न्यासिनो यथा ॥ ६ ॥

पद्येऽस्मिन्नुपलभ्यते । पद्यमिदं तृतीयांशगतप्रथमाध्यायपठितम् । एतदवलम्ब्यैवाऽत्र महाकाव्ये जैनश्रावकपलायनमुपनिबद्धम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिनो हीनबलः कोपात्कल्केराक्रण्यं तद्वचः ।
प्रतियोद्धुं वृषारूढः खड्गचर्मधरो ययौ ॥ ४ ॥
जिनो विश्वम्भरं ज्ञात्वा क्रोधाकुलितलोचनः ।
चिच्छेदास्य तनुत्राणं कल्केः शस्त्रं च दारुवत् ॥ ७ ॥
जिनं प्राह हसन्कल्किस्तिष्ठाग्रे मम दुर्मते ।
दैवं मां विद्धि सर्वत्र शुभाशुभफलप्रदम् ॥ १५ ॥
कल्केरितीरितं श्रुत्वा जिनः प्राह हसन्बली ।
दैवन्त्वदृश्यं शास्त्रे ते वधोऽयमुररीकृतः ॥ १६ ॥
प्रत्यक्षवादिनो बौद्धा वयं यूयं वृथा श्रमाः ।
यदि वा दैवरूपस्त्वं तथाप्यग्रे स्थिता वयम् ॥ १७ ॥
यदि भेत्तासि वाणौघैस्तदा बौद्धैः किमत्र ते ॥ १८ ॥
ततः कल्किर्महायोगी पादाघातेन तस्कटिम् ।
विभज्य पातयामास तालं मत्तगजोयथा ॥ २६ ॥
जिनं निपतितं दृष्ट्वा बौद्धा हाहेति चुक्रुशुः ।
कल्केः सेनागता विप्रा जहृषुर्विहतारयः ॥ २७ ॥
जिने निपतिते भ्राता तस्य शुद्धोदनो बली ।
पादचारी गदापाणिः कल्किं हन्तुं द्रुतं ययौ ॥ २८ ॥
कविस्तु तं वाणवर्षैः परिवार्य समन्ततः ।
जगर्ज परवीरघ्नो गजमावृत्य सिंहवत् ॥ २९ ॥
शुद्धोदनस्तमालोक्य महासारं रथायुतैः ।
प्रावृतं तरसा मायां देवीमानेतुमाययौ ॥ ३६ ॥
बौद्धाः शौद्धोदनाद्यास्तां कृत्वा भगवतीं पुरः ।
योद्धुं समागता म्लेच्छकोटिलक्षशतैर्वृताः ॥ ३८ ॥
सा प्रियेव तमालोक्य प्रविष्टा तस्य विग्रहे ॥ ४३ ॥
निरीक्ष्य कल्किं ते बौद्धास्तत्रसुर्धर्मनिन्दकाः ॥ ५० ॥

पद्यजातमेतद्द्वितीयांशगतसप्तमाध्यायपठितम् । एतदवलम्ब्याऽत्र महाकाव्ये जैनपलायनानन्तरं बौद्धप्रधनमुपनिबद्धम् । प्रत्यक्षागतभगवतीस्तवनञ्च स्वेष्टफलदमिति मत्वा तत्रैवोपनिबद्धम् । कविरयं भगवतःकल्केर्ज्येष्ठः सहोदर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति द्वैपायनः। जैनादिषु स्वांशावतारेषु धर्मपरिचारकैर्निहतेषु कलिः स्वयमेव महतीं सेनामादाय धर्मेण सहयोद्धुमभ्यायर्यौ। यथा—

कलिः श्रुत्वोद्यमं कल्केः पुत्रपौत्रवृतः क्रुधा ॥ ३५ ॥
पुराद्विशसनात्प्रायात्पेचकाढ्रथोपरि।
धर्मः कलिं समालोक्य ऋषिभिः परिवारितः ॥ ३६ ॥
युयुधे तेन सहसा कल्किवाक्यप्रचोदितः ॥ ३७ ॥

पद्यजातमेतत्तृतीयांशगते षष्ठाध्याये वरीवर्ति। एतदवलम्ब्यैवाऽत्राधर्मरूपस्य कलेर्युद्धाय गमनमुपनिबद्धम्। एवमेव—

एवं प्रवृत्ते सङ्ग्रामे धर्मः परमकोपनः।
कृतेन सहितो घोरं युयुधे कलिना सह ॥ १ ॥
कलिर्दमित्रवाणौघैर्धर्मस्याथ कृतस्य च।
पराभूतः पुरीं प्रायात्त्यक्त्वा गर्दभवाहनम् ॥ २ ॥
विच्छिन्नपेचकरथः स्रवद्रक्ताङ्गसञ्चयः।
करालास्योतिदुर्गन्धः स्त्रीस्वामिकमगाद् गृहम् ॥ ३ ॥
दम्भः सम्भोगरहितो बहुवाणगणाहतः।
व्याकुलः स्वकुलाङ्गारो निःसारः प्राविशद् गृहम् ॥ ४ ॥
लोभः प्रसादाभिहतो गदया छिन्नमस्तकः।
सारमेयरथं छिन्नं त्यक्त्वाऽग्राद्रुधिरं बमन् ॥ ५ ॥
अभयेन जितः क्रोधः कषायीकृतलोचनः।
गंधाम्बुवाहं विच्छिन्नं त्यक्त्वा विशसनंगतः ॥ ६ ॥
भयं सुखतलाघाताद्गतासु न्यपतद् भुवि।
निरयो मुदमुष्टिभ्यां पीडितो यममाययौ ॥ ७ ॥
आधिव्याध्यादयः सर्वे हित्वा वाहनमाव्रजन्।
नानादेशान्भयोद्विग्नाः कृतबाणनिपीडिताः ॥ ८ ॥
धर्मः कृतेन सहितो गत्वा विशसनं कलेः।
नगरं वाणदहनैर्ददाह कलिना सह ॥ ९ ॥
कलिर्विसुष्टसर्वाङ्गो मृतदारो मृतप्रजः।
जगामैको रुदन्दीनो द्वीपान्तरमलक्षितः ॥ १० ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तृतीयांशगत-सप्तमाऽध्यायपठितानीमानि पद्यान्यवलम्ब्याऽत्र महाकाव्ये धर्माधर्मयोर्युद्धवर्णनमुपनिबद्धम्। प्रसङ्गतः पराजितस्य कलेर्द्वीपान्तरगमन-वर्णनमानुषङ्गिकम्। युद्धे पराजितस्य निभृतं पलायनमेव श्रेयसे भवतीति नीतिविदां मतम्। एवमेव—

ऋतेन दम्भः सङ्ग्रामे प्रसादो लोभमाह्वयत्॥ ३७॥
समयादभयं क्रोधो भयं सुखमुपाययौ।
निरयो मुदमासाद्य युयुधे विविधायुधैः॥ ३८॥
आधिर्योगेन च व्याधिः क्षेमेण च बलीयसा।
प्रश्रयेण तथा ग्लानिर्जरा मृत्युमुपाह्वयत्॥ ३९॥
एवं वृत्तो महाघोरो युद्धः परमदारुणः।
यं द्रष्टुमागता देवा ब्रह्माद्याः खे विभूतिभिः॥ ४०॥

तृतीयांशगत-षष्ठाऽध्यायपठितानीमानि पद्यान्यवलम्ब्याऽत्र महाकाव्ये तुमुलयुद्धवर्णनमुपनिबद्धम्। तदर्थमेव धर्माङ्गत्वेन यमादीनां पापाङ्गत्वेन कामादीनाञ्च वर्णन मुपनिबद्धम्। पात्रादि परिवर्तनं-देशकालाद्यपेक्षया कवेर-धीनमिति मत्वात्र तथाविधमकारि साहसम्। यदावश्यकमासीत्। वैय्या-सिकस्यास्य दिव्यस्यैतिह्यस्य परिपोषणार्थे वेदादिसत्यशास्त्राणामाश्रयणं प्रधानतयास्मदीयं कर्तव्यम्। नेताऽत्र भगवान्सनातनो धर्मः। प्रधानतया वीरो रसः। शमदमादीनां तदङ्गत्वेन वर्णनम्। नास्तिकजनानां दर्पदलनं सनातनधर्मप्रचारश्चास्य फलम्। सर्वमप्येतदस्मत्काव्ये सहृदयैरवलोक-नीयमिति सादरं सप्रश्रयं सानुनयञ्च निवेदयति सनातनधर्मोपदेशकेष्वन्य-तमो—

—ग्रन्थकारः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अन्यदावश्यकम्

न स शब्दो न तद्वाच्यं न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गमहो भारो महान्कवेः ॥ १॥

रुद्रटोक्तिरियम् । कवेर्भारोद्वहनक्षमत्वमस्यां व्यादिश्यते । काव्यस्य च महत्वम् । तदङ्गानां विश्वव्यापकत्वात् । तत्र शब्दमात्रं काव्यस्यविषयः ॥

शब्दश्च द्विधा । ध्वनि वर्णभेदात् । तत्र ध्वन्यात्मकशब्दव्यापार-स्थलं वादित्रमात्रम् । तौर्यत्रिके तस्योपयुक्तत्वात् । तौर्यत्रिकस्य च कलान्तः पातितया काव्याङ्गत्वम् । नादविद्याविदां मते तन्त्री कण्ठोत्थिताः षड्जादयः सप्तस्वरास्तदनुगामिनो भैरवीप्रभृतयो रागाश्च ध्वन्यात्मकशब्दस्यैव पारेपरार्द्धगणना विषयाः ॥

वर्णात्मकः शब्दः संस्कृतप्राकृतरूपः । स च व्युत्पन्नाव्युत्पन्नभेदेन द्विविधः । तत्र प्रकृतिप्रत्ययविशिष्टत्वं व्युत्पन्नत्वम् । प्रकृतिप्रत्ययशून्यत्वमव्यु-त्पन्नत्वम् । एतदेव

चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य ।

इति यजुर्वेदीयमन्त्रे [ द्वे शीर्षे ] इतिपदाभ्यामुपपादितम् । भाष्यका-रैश्च द्वे शीर्षे इत्युपक्रम्य "द्वौशब्दात्मानौ नित्यः कार्यश्चेति" मान्त्रिकं मत-मेवानुमतम् । तत्राऽव्युत्पन्नो नित्यः । व्युत्पन्नश्च कार्यत्वादनित्य इति प्राचां मतम् । वैय्याकरणानां मते [ नित्याः शब्दाः सिद्धश्च शब्दार्थ सम्बन्ध ] इति निर्विवादएव मार्गः । नैय्यायिकानां मते तु सर्वथाऽनिवार्यं शब्दानां कार्यत्वम् । अतएव

वीचीतरङ्गन्यायेन तदुत्पत्तिः प्रकीर्तिता ॥
कदम्ब गोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥२॥

इति विश्वनाथपञ्चाननभट्टाचार्यैरुपपादितं स्वप्रणीतायां सिद्धान्त-मुक्तावल्याम् । उभयविधोप्ययं शब्दः काव्याङ्गम् । अपभ्रंशानामपि तदङ्ग-त्वात् । अतएव


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संस्कृतेनैव कोप्यर्थः प्राकृतेनैव चापरः ॥
शक्यो रचयितुं कश्चिदपभ्रंशेन जायते ॥३॥

पैशाच्या शौरसेन्याऽन्यो मागध्याऽन्यो निबध्यते ॥
द्वित्राभिः कोऽपि भाषाभिः सर्वाभिरपि कश्चन ॥४॥

नात्यन्तं संस्कृतेनैव नात्यन्तन्देशभाषया ॥
कथां गोष्ठीषु कथयँल्लोके बहुमतो भवेत् ॥५॥

इत्याद्याहुः कण्ठाभरणकाराः । तत्र प्राकृतं प्रकृतिनिष्ठम् । ग्राम्यभाषितमितियावत् । अपभ्रंशा गावीगोणी-गोता-गोपोतलिकेत्येवमादयः । पैशाची पिशाचानां भाषा । शौरसेनी व्रजभाषा । मागधी विहारप्रान्तीया । सर्वा अप्येताः काव्याङ्गभूताः । कर्पूरमञ्जरीसट्टकप्रभृति तदुदाहरणम् । तत्परिज्ञानाय वाररुचः प्राकृतप्रकाशः ॥

न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् ॥
सङ्कीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥६॥
देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः ॥
पैशाचाद्यं पिशाचाद्या मागधं हीनजातयः ॥७॥

इति । [म्लेच्छ अव्यक्ते शब्दे] म्लेच्छितमपभाषितम् [ म्लेच्छो ह वा एष यदपशब्द इति भाष्यकाराः ] यज्ञादौ तन्निषेधः । तदितरस्थलेतु विवक्षा प्रमाणम् । स्त्रीणां वेदाध्ययनानधिकारात्प्राकृतभाषाभाषित्वम् । अभिजाताः कुलीनाः । अप्रबुद्धा मूर्खाः ॥

शृण्वन्ति लटभं लाटाः प्राकृतं संस्कृतद्विषः ॥
अपभ्रंशेन तुष्यन्ति स्वेन नान्येन गुर्जराः ॥८॥

ब्रह्मन्विज्ञापयामि त्वां स्वाधिकारजिहासया ॥
गौड़स्त्यजतु वा गाथामन्यावाऽस्तु सरस्वती ॥९॥

इत्यपिच । तत्र लाटानुद्दिश्यैव लाटानुप्रासः । गुर्जराणामपभ्रंशप्रियत्वम् । गौडगाथाप्रसङ्गे मातुः स्त्रयं विज्ञप्तिः । गौड़ाः कामरूपदेशवासिनः । गौडविषयाद्दक्षिणेन वङ्गः । पूर्वेण कलिङ्गः । अपरमालवात्पश्चिमेन लाटविषयः । इत्थमेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्णाटी कौन्तली कौङ्की कौङ्कणी वानवासिका ॥
द्राविड़ी माथुरी मात्सी मागधी ताम्रलिप्तिका ॥
औरड्री पौरड्रीति विद्वद्भिः सा द्वादशविधेष्यते ॥१०॥

इति प्राचां व्यवस्थितिः । तत्र नर्मदाया दक्षिणेन कर्णाटकः । कुङ्कणविषयात्पूर्वेण वनवासविषयः । कर्णाटविषयाद्दक्षिणेन द्रविड़विषयः ॥ [ मध्यदेशवाल्हीकावन्तिमालवाऽभीरसिन्धुमद्रापरान्तस्त्रीराज्यकोशलान्ध्रमहाराष्ट्रनागरप्राच्याहिच्छत्रसाकेतवत्सगुल्मविदर्भहैमवतवङ्गा अप्येवम् ] ॥ तत्रगङ्गायमुनयोरन्तरालं मध्यदेश इति वसिष्ठ स्मृतिः । अयमेव शास्त्रकृतां प्राधान्येनाभिप्रेतः । वाल्हीक उत्तरापथः । उज्जयिनीप्रान्तमवन्तिविषयः । स एवापरमालवः । आभीरदेशः श्रीकण्ठकुरुक्षेत्रादिभूमिः । सिन्धुनामा नदस्तस्य पश्चिमेन सिन्धुदेशः । मद्रः प्रसिद्धः । पश्चिमसमुद्रतीरेऽपरान्तदेशः । वज्रवन्तदेशात्पश्चिमेन स्त्रीराज्यम् । कर्णाटविषयात्पूर्वेणान्ध्रविषयः । नर्मदाकर्णाटकयोर्मध्ये महाराष्ट्रदेशः । नागरः पाटलिपुत्रदेशः । दक्षिणापथे सोदर्यौ राजपुत्रौ वत्सगुल्मौ ताभ्यामध्यासितो देशो वात्सगुल्मकः । हैमवताः पर्वतीयाः । महानद्याः पूर्वेणाङ्गः । रीतिनिरूपणप्रसङ्गमुद्दिश्यैतत् । सर्वा अपीमास्तत्तद्देशरीतयः प्रायशोऽपभ्रंशप्रधानाः । सिद्धमेतावाऽस्माकं मतं यत्प्रागुपस्थापितमस्माभिः ।

या क्लिष्टम्लेच्छितादीनां पददोषेष्वसाधुता ॥
निरूपितानुकरणे गुणत्वं सा प्रपद्यते ॥ ११ ॥

इत्यादिना दोषगुणप्रतिपादनपरेण प्राचांमतेन म्लेच्छिताद्यपभ्रंशवत्पदानामपि काव्योपयोगित्वमुपपाद्यते । तस्माच्छब्दमात्रं काव्यस्य विषयइति निर्विवादम् ॥

वाच्यमित्यनेन सकलार्थोपसम्पत्तिरनुगृह्यते—या शब्दशक्तिमूला प्रागुपदर्शिताऽस्माभिः । न्यायो दण्डनीतिः । दण्डनीतेतेर्नयापनययोरिति काव्याङ्गनिरूपणे यास्कसूत्रम् । कामसूत्रनिर्दिष्टा गीतादयश्चतुःषष्ठिकलाः । सर्वमेतत्साकल्येन सम्विदित्वैव लोके कविर्भवतीति महामहिम्नो रुद्रटाचार्यस्याभिप्रायः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"सप्तद्वीपा वसुमती त्रयोलोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा विभिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा वाह्वृच्यं नवधाऽथर्वणो वेदो वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ताः शब्दा इति वचनं केवलं साहसमात्रम्" ।

तस्मादसाधुरयं प्रयोगः—पुंलिङ्गः स्त्रीलिङ्गो नपुंसकलिङ्गोवा स शब्दः—प्रक्रमविरुद्धा सेयं क्रियेति प्रभृतयः साहसिकानामेव प्रवादाः । शब्दप्रयोगविदां मते तु—सर्वमेवावदातम् । अतएव [ अस्त्यप्रयुक्त ] इत्यादिना वाक्यजातेन पूर्वपक्षमवस्थाप्य [ अस्त्यप्रयुक्त इतिचेन्न । अर्थे शब्द प्रयोगात् । अप्रयोगः प्रयोगान्यत्वात् । अप्रयुक्ते दीर्घसत्रवत् । सर्वे देशान्तरे ] इत्यन्तेन वाक्यजातेन तदुत्तरपक्षमुपपादयद्भिर्भाष्यकारैः प्रत्याख्यातः स्वप्रतिपादितः पूर्वपक्षः ॥

महाभाष्यकृतः कोसावनुमान इति स्मृतेः ॥
नपुंसकोपि पुंलिङ्गो मानशब्दो न दुष्यति ॥ १२ ॥

ल्युडन्तं नपुंसकमिति पाणिनेर्मतं व्याहन्तुमेष पतञ्जलेरुपक्रमः । प्रत्याख्यातमेतावता लिङ्गानामनुशासम् । सिद्धश्चपुनर्लिङ्गमशिष्यं लोकाश्रयत्वालिङ्गस्येति प्राचां नियमः ॥

धातवश्चोपसर्गाश्च निपाताश्चेति ते त्रयः ॥
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥१३॥

पद्यमेतद्धाररुचम् । तस्मादेव [ शमोदर्शने ] इति भौवादिकस्यधातोर्विवरणमातन्वानेन दीक्षितप्रवरेण निशामयेत्यस्य श्रवणार्थकत्वमुररीकृतम् ॥ [ आख्यातान्युपसर्गैः संसृज्यन्ते कदाचिदर्थायेति ] रुद्रटमतम् । कदाचिदित्यनेन न सर्वदेत्यर्थादापद्यते । पाणिनिनाप्यतएव निजग्रन्थे [ अधिपरी अनर्थका—] विति सूत्रितम् । एतावता [ उपसर्गास्त्वर्थविशेषस्यद्योतका ] इति दीक्षितमतं प्रत्याख्यातम् ॥

इमाङ्घ्रिमाचामयसे न चक्षुषी चिरं चकोरस्य भवन्मुखस्पृशि ।
[ इति श्रीहर्षः ]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उदयति यदि भानुः पश्चिमे दिग्विभागे—

[ इति भर्तृहरिः ]

गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः।

[ इति भारविः ]

रक्षांसीति पुरापि संशृणुमहे वीरस्तुकस्तादृश इति मुरारिः

सर्वेऽपीमे स्वनामधन्यास्तत्रभवन्तो महाकवयः। एष्वाद्येन परस्मैपदिषु पठितस्य चमुधातोरात्मनेपदित्वमङ्गीकृतम्। तदितरेणत्वात्मनेपदिषु पठितस्यायतेः परस्मैपदित्वमुररीकृतम्। एतद्विधमेवान्याभ्याम्। तदेतत्सर्वमप्याकलय्य दीक्षितेनाप्यनुदात्तेत्वलक्षणमात्मनेपदमनित्यमिति नियमितम्। तस्मात्प्रभुः प्रभुत्वमापन्नो यदिच्छति करोतितदित्येव सिद्धम्। साम्प्रतं योऽयं लोके "निरङ्कुशाः कवयः—" इति प्राचां प्रवादस्तमुद्दिश्य मनागुच्यते। पशूनामन्ववाये विद्यमानो हस्ती हस्तिपकैरङ्कुशेन लोके सञ्चाल्यते। तस्य बुद्धिशून्यत्वात्। अत एव—

मतिरेव वलाद्गरीयसी यदभावे करिणामियन्दशा।

इति समुदाहृतं महाकविभिः। तथाविधो वृथापुष्टः कश्चिन्नरपुङ्गवो-नरपशुरिति मत्वा यद्यन्येन सञ्चाल्यते तदा सञ्चाल्यतां नाम। सह्यमेतत्। परं क्रान्तदर्शी सदसन्मार्गविवेचकः कविरपि यद्यङ्कुशपारतन्त्र्यमनुभवति तदा गतमेवास्मन्मते बुद्धिवैभवेन, कृतं विद्यया, पलायितं मनुष्यत्वेन, स्वर्यातं सरस्वतीसेवनेन।

अनन्यपरतन्त्रा नियतिकृतनियमरहिता येषां भारती जगन्मात्रप्रतिष्ठितं नियतेरपि पारतन्त्र्यं न सहते सर्वमान्यास्ते पाणिन्यादिपारतन्त्र्यमङ्गीकरिष्यन्तीति वालोन्मत्ततरधिया केनान्येन वक्तुमपि शक्यम्। तस्मादयं प्रवादो न भावुकानामित्येवमत्वास्माभिरस्यते—

—ग्रन्थकारेण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# वृत्त विवरणम्

| सर्गाङ्कः वृत्तनामानि | | | | पद्यसंख्या |
|---|---|---|---|---|
| १—प्रहर्षिणी वृत्तम् | ... | ... | ... | ४५ |
| २—बसन्ततिलकंवृत्तम् | ... | ... | ... | ५७ |
| ३—मालिनीवृत्तम् | ... | ... | ... | ४७ |
| ४—वंशस्थंवृत्तम् | ... | ... | ... | ५७ |
| ५—अनुष्टुव्वृत्तम् | ... | ... | ... | ६४ |
| ६—उपेन्द्रवज्रावृत्तम् | ... | ... | ... | ५८ |
| ७—आर्यावृत्तम् | ... | ... | ... | ७८ |
| ८—स्वागतावृत्तम् | ... | ... | ... | ६५ |
| ९—सिंहोद्धतावृत्तम् | ... | ... | ... | ७३ |
| १०—पुष्पिताग्रावृत्तम् | ... | ... | ... | ७२ |
| ११—अनुष्टुव्वृत्तम् | ... | ... | ... | १७५ |
| १२—उद्धर्षिणीवृत्तम् | ... | ... | ... | ९० |
| १३—वियोगिनीवृत्तम् | ... | ... | ... | १११ |
| १४—उपजातिवृत्तम् | ... | ... | ... | १०४ |
| १५—अनुष्टुव्वृत्तम् | ... | ... | ... | २३० |
| १६—रथोद्धतावृत्तम् | ... | ... | ... | ९५ |
| १७—वृत्तसमुच्चयः | ... | ... | ... | ८४ |
| १८—द्रुतविलम्बितंवृत्तम् | ... | ... | ... | ६५ |
| १९—वंशस्थं वृत्तम् | ... | ... | ... | १५२ |
| २०—मधुमाधवीवृत्तम् | ... | ... | ... | १०० |
| २१—आर्य्यावृत्तम् | ... | ... | ... | १०० |
| २२—वंशस्थं वृत्तम् | ... | ... | ... | ६६ |
| २३—अनुष्टुव्वृत्तम् | ... | ... | ... | १४० |
| २४—आर्यावृत्तम् | ... | ... | ... | १४६ |
| २५—आर्यावृत्तम् | ... | ... | ... | १०० |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

५८

# महाकाव्य के सर्गों का श्लोकशः

विषयानुक्रमणिका

## पहला सर्ग-धर्मविवेचन

१—६ मङ्गलाचरण। ७—१६ धर्मचर्चा। २०—२५ श्रौतस्मार्त्त धर्म-लक्षण तथा सामान्य धर्म एवं विशेष धर्म का विवेचन। २६—२८ अधर्म का लक्षण और फल। २६—३० स्वरूप शब्द का अर्थ निर्णय—तथा भेद। ३१—३२ पातक शब्द का निर्वचन। ३३—३५ स्वरूप शब्दार्थ का तीन रूपों में विभाजन। ३६—४० स्वरूपानुसार धर्म का महत्त्व समझने पर उसमें मनुष्यों की प्रवृत्ति, और भारतवर्ष का धर्म प्राण होना। ४१—४५ महाकाव्य का प्रयोजन और भगवान से प्रार्थना। पृ० १—१४।

## दूसरा सर्ग-धर्म का महत्त्व

१—५ धर्म का ईश्वर के द्वारा धारण होना। ६—६ धर्म शब्द का निर्वचन तथा अर्थ निर्धारण। १० धृञ्-धातु के आधार पर धर्म शब्द का उभयतोगामी निर्वचन। ११—२४ धर्म की व्यापकता, और सनातनता। २५—धर्म की सर्वोपकारकता। २६—३० धर्म की स्वरूप रक्षकता-तथा सत्त्वादि गुण भेद से उसका विभाग। ३१-३८ धर्म की प्रेरणा से मनुष्यों का अपने अपने कर्मों में प्रवृत्त होना ३६-५३ गुण भेद से उपासना का भेद और भगवान के अवतारों का सहेतुक वर्णन। ५४-५७ मनुष्य कर्त्तव्य और हमारा आदेश। पृ० १५-३१।

## तीसरा सर्ग-धर्माङ्ग निरूपण

१-५ धृति का लक्षण, और फल। ५-८ क्षमा का लक्षण-और फल। ६-१३ दम का लक्षण और फल। १४-१७ अस्तेय का लक्षण और फल। १८-२१ पवित्रता का लक्षण और फल। २२-२४ धी का लक्षण और फल। २५-२८ विद्या का स्वरूप और फल। २६-३२ सत्य का प्रयोजन और फल।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

३३-३६ अक्रोध का लक्षण और फल। ३७-४१ अहिंसा व्रत का विवेचन। ४२-४४ ब्रह्मचर्य की आवश्यकता और उसका फल। ४५-४७ अपरिग्रह का फल और मंगऽऽशंसन। पृ० ३२-४५।

## चौथा सर्ग-भारतवर्ष

१-५ भारतवर्ष का महत्त्व। ६-१० भारत का गुणोत्कर्ष। ११-१२ भारत की कला और इतिहास। १३-२२ भारत के महापुरुष। २३-२७ भारत के धार्मिक भाव। २८-३३ भारत का अधःपतन। ३४-४७ अधःपतन का कारण। ४८-५७ अतीत भारत का वर्तमान भारत से अन्तर और उसके उद्धारार्थ धर्म की रक्षा में मनुष्यों को प्रवृत्त होने का आदेश। पृ० ४६-६१।

## पांचवां सर्ग-कर्त्तव्य निश्चय

१-२ अपने में शिथिलता देख कर धर्म का भगवान के पास जाना और अपना वृत्तान्त कहना। ३-४८ भारत की वर्त्तमान अवस्था का निवेदन। ४९-६४ भगवान के द्वारा धर्म के प्रश्नों का उत्तर और दिग्विजय के लिये आदेश। पृ० ६२-७१।

## छटा सर्ग-प्रतिद्वन्द्वी दल

१-१४ भारत में कलि का आगमन और अधर्म के साथ वार्तालाप। १५-२६ अधर्म सभा में कामदेव का आगमन और उसके प्रति कलिका आदेश। २७-३६ क्रोध का सभा में प्रवेश और उसके प्रति कलि का आदेश। ३७-४२ लोभ का आगमन और उसके प्रति कलिका आदेश। ४३-४६ मोह का आगमन और कलिका आदेश। ४७-५२ मृत्यु का आगमन और कलि का आदेश। ५३-५८ अहङ्कार का सभा में प्रवेश और कलि का आदेश। पृ० ७२-८७।

## सातवां सर्ग-पापावतार

१-१३ भारत में पापावतारों का उद्भव और अधर्म वृद्धि का सूत्रपात। १४-२५ बुद्ध का सिद्धान्त और उसका प्रचार। २६-३८ चार्वाक का सिद्धान्त और उसका प्रचार ३९-४८ वृहस्पति का तर्कवाद और उसका प्रभाव। ४९-७८ दयानन्द का सिद्धान्त और नास्तिकवाद। पृ० ८८-१००।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## आठवां सर्ग-युद्ध घोषणा



## नवां सर्ग-धर्माचार्य



## दसवां सर्ग-धर्मबल



## ग्यारहवां सर्ग-विजय संरंभ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## बारहवां सर्ग-बुद्ध पराजय



## तेरहवां सर्ग-चार्वाकपराजय



## चौदहवां सर्ग-वृहस्पति दर्पदलन



## पन्द्रहवां सर्ग-दयानन्द दर्पदलन



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## सोलहवां सर्ग-तुमुलयुद्ध



## सत्रहवां सर्ग-राज्याभिषेक



## अठारहवां सर्ग-धर्मराज्य



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## उन्नीसवां सर्ग-धर्मोपदेश

१-३६ गोरक्षाकामहत्व ३७-४१ धार्मिक विषय में संशोधन की अनावश्यकता तथा शास्त्राज्ञा का पालन ४२-४६ संकीर्णवर्णों के साथ भोजनादि-व्यवहार निषेध। ४७-५६ प्रचलित शुद्धि कार्य की अशास्त्रीयता। ६०-७५ विधवा विवाह खंडन। ७६-९०स्पृश्यास्पृश्यव्यवस्था पर शास्त्रीय आलोचन। ९१-९५ मन्दिरों की पवित्रता पर विचार। ९६-१०१ जात्यभिमानरक्षा। १०२-१०६ पूर्वजों के इतिहास की रक्षा। १०७-१२१ संस्कृत साहित्य पर विचार। १२२-१३३ आयुर्वेदीय चिकित्सा पर विचार। १३४-१५२ भगवन्नामस्मरणमाहात्म्य। पृ० ३५८-३९९

## बीसवां सर्ग-वर्णधर्मविवेचन

१-५ प्रकृतिकी नित्यता पर शास्त्रीय विवेचन ६-१० जातिविवेचन। और उसका नित्यत्त्व। ११-१५ गुणकर्मविवेचन। १६-२० स्वभाव शब्दार्थ विचार। २१-२६ जन्मगत वर्ण व्यवस्था का वैदिकत्व-तथा जन्मांतर के जाति परिवर्तन में मतंगोपाख्यान एवं इस जन्म में परिवर्तन मानने वालों पर आपत्ति। २७-३५ जन्मगत वर्णव्यवस्था का समर्थन। ३६-४० "जन्मना-जायतेशुद्रः" पर विचार। ४१-४८ जातिविपर्ययका नियत समय क्रम ४९-६० वर्णव्यवस्था का प्राधान्य, संस्कारों की आवश्यकता, विवाह समय, समान जातीयविवाह, विवाहवयोविचार, बालवृद्ध विवाह निषेध, कन्या विक्रय निषेध। ६१-१०० आचार स्थापन, पवित्रता पर विचार, भक्ष्याभक्ष्य निर्णय, शास्त्राज्ञापालन, द्विजकर्म विभाग और आपद्धर्म,। पृ० ४००-४२८

## इकीसवां सर्ग-दिनचर्या

१-१७ ब्राह्ममुहूर्त में उठकर स्नान करनेतक का शास्त्रीय कर्त्तव्य १८-२२ प्रातः संध्या प्रयोग। २३-२९ समिदाधान और षोडषोपचार से भगवत्पूजन ३०-३२ मध्यान्ह संध्या प्रयोग। ३३-३७ पंचमहायज्ञ। ३८-४७ भोजन से लेकर व्यवहार निरीक्षणान्तकर्तव्य। ४८-५५ सायं संध्या प्रयोग और भोजन। ५६-६३ शयनागार में शयनादि व्यवहार। ६४-७५ स्त्रियों की दिनचर्या। ७६-७८ रजोवती कर्त्तव्य। ७९-८० प्रोषितपत्नी कर्तव्य। ८१-८४ विधवा कर्त्तव्य। ८५-१०० विधवा विवाह निरसन। पृ० ४२९-४५३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## बाईसवां सर्ग-भविष्यकथन

१-५ भविष्य के विषय में प्रश्न। ६-१३ उत्तर। १४-२० अनागत राजाओं का शासन काल निर्णय। २१-४४ कलियुग व्यवहार। ४५-५२ भगवदवतार समय निर्णय और अवतार कर्त्तव्य। ५३-६० भूत राजाओं का शासनकाल। ६१-६६ गौराङ्गों का राज्यकाल और उसमें सनातनधर्मी मात्र का कर्त्तव्य। पृ० ४५४-४७१

## तेईसवां सर्ग दंडधारा निर्णय

१-५ प्रत्येक नगर में सनातनधर्म सभा। ६-१० देवमंदिर निर्माण और धर्मप्रचार। ११-१५ वार्षिकोत्सव और धर्मोदय। १६-५८ धर्मादेशसे विद्यालय और ब्रह्मचर्याश्रम आदि का स्थापन ५९-७५ सभा में वरुण का आगमन और दंडधारा पर विचार। ७६-१०० चार्वाक दंड धारा निर्णय १०१-१०६ बृहस्पति का दंड धारा निर्णय। १०७-१२२ दयानंद का दंड धारा निर्णय १२३-१२९ शेष को दंड प्रदान। १३०-१४० संयमनी पुरी का मार्ग और धर्मादेश। पृ० ४७२-४९०

## चौबीसवां सर्ग धर्मसहायक

१-८ सरस्वती का आदेश और उसका पालन। ९-४२ यशोवशिष्ट धर्म प्रचारकों की नामावलि। ४३-११२ वर्त्तमान धर्म प्रचारकों का वर्णन। ११३-१२८ धार्मिक नरपति वर्णन १२९-१४३ धर्मवीर वैश्यों का वर्णन। १४४-१४६ इन सब के लिये सरस्वती का आशीर्वाद और सर्वदा के लिये भारत में इनकी कीर्ति का स्मरण। पृ० ४९१-५२१

## पचीसवां सर्ग सरस्वतीवरलाभ

१-८ सरस्वती के प्रश्न पर वंशवृत्तांतकथन। ९-११ सृष्टिका पूर्वरूप और ब्रह्मा की उत्पत्ति। १२-१७ सनाढ्यवंश का प्रादुर्भाव और विस्तार १८-३० ब्राह्मणत्त्व पर विचार। ३१-३८ सनाढ्य ऋषियों का वर्णन ३९-४२ श्रीविजयदेव वर्णन। ४३-४४ श्रीजवाहरलालजी का वर्णन। ४५-४८ श्रीभगीरथावतरण। ४९-८३ श्रीतातपादचरित, मातृवर्णन, सुबोधचन्द्र और शांति का जन्म निर्देश। ८४-९५ ग्रंथकार परिचय, ग्रंथसमर्पण, ९६-१०० भगवतीवरदान, धर्माशीर्वाद, ग्रंथफलादेश, और ग्रंथ समाप्ति सूचना। पृ० ५२२-५४१

[ पद्यसंख्या२२७५ ]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अशुद्धशोधनपत्रम्

| पृष्ठे | पंङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५७ | २३ | प्रथम | प्रथमं |
| ७२ | १६ | परस्परपृष्ट | परस्परा ऽऽपृष्ट |
| ८१ | ६ | आद्रेन | आद्रेण |
| ६४ | १५ | शस्यम् | सस्यम् |
| १३८ | ४ | भ्रगण | भ्रमण. |
| १४१ | २५ | ( नहीं रहता है ) | (रहता है) |
| १४४ | १४ | निपतिना | निपतिता |
| २०७ | १२ | शेकवशोन | शोकवशेन |
| ३२३ | १२ | महामान्यो | महामात्यो |
| ३७२ | २० | दार्गन्ध्य | दौर्गन्ध्य |
| ३७३ | २५ | स्वभावता | स्वभावतो |
| ३७७ | ६ | कुलस्त्रा | कुलस्त्री |
| ४०८ | १३ | अधीता | अधीतौ |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# भ्रमण-वृत्तान्त

यह जो "महाकाव्य" आज आपके समक्ष में उपस्थित है इसका सम्पादन विक्रम संवत् १९७७ में हुआ। आश्विनशुक्ला दशमी शुक्रवार को इसका आरम्भ करके माघ शुक्ला तृतीया को यह समाप्त किया गया। इसके अनन्तर इसकी "विजय वैजयन्ती" टीका लिखी गई। इस प्रकार समस्त ग्रन्थ की रचना सात मास में समाप्त हुई। सबसे प्रथम इस ग्रन्थ को लेकर मैं "संस्कृत-साहित्य-सम्मेलन" के उस अधिवेशन में पहुंचा जिसमें महामहोपाध्याय श्री पं० हरनारायणशास्त्रीजी प्रधान बने थे। आगरे के इस वार्षिक महाधिवेशन में भारत के सभी गण्यमान्य विद्वान एकत्रित हुए थे। ऐसा सुन्दर और सरस महाधिवेशन दूसरा न हुआ। मैंने भी "आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्" यह कालिदास की सूक्ति चरितार्थ करने के लिये यह ग्रन्थ "विद्वत्सभा" में उपस्थित किया। देखकर विद्वान सभी प्रसन्न हुए। विद्वन्मण्डली के देखने पर मैं ने अपनी मित्रमण्डली से परामर्श लेकर श्री पं० विष्णुदत्तजी तथा अपने प्रियमित्र श्री पं० रामदत्तजी से बाहर निकलने का मुहूर्त पूंछा, इन दोनों के आदेशानुसार भगवन्नामस्मरण करके घरसे प्रस्थान किया। बाहर निकल कर हमने बरेली, पीलीभीत, कमालपुर, (सीतापुर) नैनीताल, सेहड़ा (पटना), हरद्वार, देहरादून, मन्सूरी, फैजाबाद, रायबरेली, कानपुर, इटावा, हाथरस, खुर्जा, लाखनू, कलकत्ता, नासिक, मुम्बई, रावलपिण्डी, आदि नगरों में क्रमशः भ्रमण करके जो धन प्राप्त किया उसके प्रतिफल में आज यह ग्रन्थ आपकी भेट है। इस भ्रमण में तथा ग्रन्थ के प्रूफ पढ़ने में जो मेरा अमूल्य समय व्यय हुआ है उसकी चर्चा करनी व्यर्थ है। इस कार्य में बड़ी उदारता के साथ जिन्होंने मुझे सहायता दी उनकी नामावली इसी ग्रंथ में अन्यत्र छपी है। कुछ महानुभावों का परिचय उनके चित्रों के साथ छपा हुआ है। कुछ महानुभावों ने सहायता देकर भी नाम प्रकाशित करने को मना किया है। कुछ महानुभावों ने सहायता देते समय धन्यवाद के बदले हमसे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आशीर्वाद के लिये प्रार्थना की, इस प्रकार इस विचित्र यात्रा में हमको अनेक प्रकार के महानुभावों से मिलने का सौभाग्य प्राप्त हुआ। अब हम यहां पर उन महानुभावों की नामावली उपस्थित करते हैं जिन्होंने भिन्न भिन्न नगरों में मेरे साथ चल कर मेरे कार्य में सहयोग दिया। उनमें श्री० पं० कन्हैयालालजी बी० ए० प्राईवेट सेक्रेटरी महारानी बलरामपुर, श्री पं० मोहनलालजी बी० ए० वकील लखीमपुर, श्री पं० मुरलीधरजी मिश्र वकील, श्री० ठा० प्रभुदयालसिंहजी वकील, श्री० पं० नैनसिंहजी पटवारी देहरादून, श्री० पं० चन्द्रशेखरजी व्याकरणाचार्य कानपुर श्री० पं० सत्यदेवजी पांडे वैद्यराज कानपुर, श्री पं० ब्रह्मदेवशास्त्री इटावा, श्री पं० मनसारामजी शास्त्री राजवैद्य, श्री पं० रायजादा बेलीराम ( वाली ) जी रावलपिण्डी सदर, श्री पं० आनंदीलालजी खंडेलवाल सीकर, श्री पं० जयनारायणजी मिश्र फतेपुर, श्री पं० राधाकृष्णजी मिश्र मण्डावा, श्री पं० नाथूरामजी ज्योतिर्विद रामगढ़, श्री पं० वृद्धिचन्द्रजी वैद्य तथा श्री पं० रामलालजी त्रिवेदी लक्ष्मणगढ़, श्री पं० माधवप्रसादजी मिश्र एम० ए० रतनगढ़, श्री पं० यादवजी त्रीकमजी आचार्य मुम्बई, श्री० बाबू ब्रह्मनारायणजी वकील बरेली; ये महानुभाव प्रधान हैं। इन्होंने अपना अत्यावश्यक काम छोड़कर मेरे परिश्रम को सफल बनाया। मेरे पास ऐसे शब्द नहीं हैं जिनके द्वारा इनको धन्यवाद देकर मैं सर्वदा के लिये निश्चिन्त बनूं इसलिये भगवान से इनके लिये मङ्गलकामना करता हुआ अब आवश्यक सूचना देकर इस लेख से अलग होता हूं।

## आवश्यक सूचना

जबसे यह ग्रन्थ छपने के लिये प्रेस में दिया गया तब से अनिवार्य कारणों से विवश होकर मुझे अनेक स्थानों में जाना पड़ा इस कारण इसमें प्रेस-सम्बन्धी भूलों का होना अनिवार्य है। मुझे जहां तक विदित होता गया वहां तक मैंने ऊपर दिये हुए "अशुद्धशोधन पत्र" में गलतियों का संशोधन किया है। जो गलतियां मेरे देखने से रह गई हों उनको विद्वान् स्वयं ठीक करलें।

—ग्रन्थकार

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# श्रीसनातनधर्मविजयम्

## महाकाव्यम्

## प्रथमः सर्गः

आरम्भे नमनमभीष्टदं यदीयं
विश्वानि प्रथयति मङ्गलानि लोके ।
वेदज्ञैः प्रणतमनोज्ञपादपद्मं
भावज्ञन्तमिह गजाननन्नमामः ॥ १ ॥

जिनका नमन समस्त कार्यों के आरम्भ में अभीष्ट-फलप्रद होता है और संसार में समस्त मंगलों का दाता है, जिनके सुन्दर चरण-युगलों को वेदज्ञ विद्वान् प्रणाम करते हैं उन अन्तर्यामी श्रीगणेशजी को हम यहाँ पर प्रणाम करते हैं। यह मंगलाचरण "निषुसीद गणपते गणेषु" इस मंत्र के आधार पर किया गया है ॥ १ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वामाङ्के निवसति यस्य बालगौरी
बालेन्दुर्विलसति भव्यभालदेशे ।
संपूर्त्यै नवनवसन्मनोरथाना-
मात्मस्थं सपदि तमीश्वरन्नमामः ॥ २ ॥

जिनके वाम भाग में बालगौरी और सुन्दर ललाट में बालेन्दु विराजमान हैं, नवीन नवीन अच्छे मनोगत भावों की पूर्ति के लिए सर्वदा हृदय में विद्यमान उन भगवान् शंकर को हम बार बार प्रणाम करते हैं ॥ २ ॥

यामाद्यां निगमविदो वदन्ति शक्तिं
सर्गस्थित्यवसितिकारणस्वभावाम् ।
तामेकां गुणगतभेदतस्त्रिरूपां
सर्वार्तिप्रशमनकारिणीन्नमामः ॥ ३ ॥

जिसका स्वभाव जगत् की उत्पत्ति, स्थिति और प्रलय का कारण रूप है, जिस आद्या शक्ति को, वेदज्ञ विद्वान् एक होने पर भी गुणगत भेद होने के कारण महाकाली-महालक्ष्मी महासरस्वती इन तीन नामों से मानते हैं, समस्त कष्टों का शमन करनेवाली उस भगवतीजी को हम प्रणाम करते हैं ॥ ३ ॥

सौवर्णं रथमधिरुह्य यः स्वगत्या
विश्वस्थं तिमिरचयं निराकरोति ।
वेदान्तर्गतमनुभिः प्रगीयमानं
भास्वन्तं कमपि तमद्भुतन्नमामः ॥ ४ ॥

सुवर्ण से बने हुए रथ पर चढ़ कर जो अपनी गति से संसार के अंधकार को नष्ट करते हैं, वेद मंत्रों से गीयमान उन अनिर्वचनीय सूर्य भगवान् को हमारा प्रणाम है । यह मंगलाचरण "आकृष्णेन रजसा" इस मंत्र के आधार पर किया है ॥ ४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्पादप्रभवसरिज्जलं स्वभावा-

त्सम्बद्धान्निजनिजकर्मबन्धयोगैः ।

निर्बन्धानिव विदधाति तस्य विष्णोः

पादाब्जं स्वकृतिसमाप्तये नमामः ॥ ५ ॥

जिनके चरण-कमल से निकली हुई भगवती भागीरथी का पवित्र जल स्वभाव से अपने अपने कर्म बंधनों में फंसे हुए मनुष्यों को मुक्त बंधन कर देता है उन श्रीविष्णु भगवान् के चरणकमल को हम अपनी कृति की निर्विघ्न समाप्ति के लिए प्रणाम करते हैं ॥ ५ ॥

मीनाद्याः समवतरन्ति यस्य लोके

रक्षायै सनकसनन्दनादयोपि ।

कल्क्यन्ताः समयमुपेत्य सार्वभौमं

धर्मन्तं सपदि सनातनन्नमामः ॥ ६ ॥

जिसकी रक्षा के लिये समय समय में सनकादि ऋषि तथा मत्स्याव-तार से लेकर कल्किपर्यंत भगवान भी अवतार लेते हैं उस सार्वभौम सनातन धर्म को हम बार बार प्रणाम करते हैं ॥ ६ ॥

यो रक्षत्यवनितले स्वरक्षकं द्रा-

गत्यन्तं व्यथयति यः स्वयं स्वभक्षम् ।

तं धर्मं विधृतसमस्तशक्तिपुञ्जं

को लोके न भजति सभ्यतामुपेतः ॥७॥

जो अपने रक्षक को पृथिवी पर सुरक्षित रखता हुआ अपने विरोधी को स्वयं नष्ट कर देता है उस समस्त शक्तिशाली सनातन धर्म को कौन सभ्य पुरुष नहीं मानता है ॥ ७ ॥

तर्कास्त्रप्रतिहतसत्प्रमाणपक्षे

कालेस्मिन्कलियुगशासनानुकूले ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दैवाद्यः समवति वैदिकं स्वधर्मं
धर्मज्ञः स भवति विप्रकृष्टशक्तिः ॥ ८ ॥

तर्करूपी अस्त्र के द्वारा प्रमाणवाद को समूल नष्ट करनेवाले इस कराल कलिकाल में भाग्योदय से जो महानुभाव अपने सनातन वैदिक धर्म की रक्षा करता है वही धार्मिक माना जाता है ॥ ८ ॥

धन्यास्ते धरणितले तएव वन्द्या
मान्यास्ते गुणिगणनासु वर्णनीयाः ।
धर्मार्थे सकलसुखोपभोगभव्यं
सन्त्यक्तं वनमधिगत्य यैः स्वराज्यम् ॥९॥

इस अवनीतल में वही धन्य हैं, वही बंदनीय हैं, और गुणिजनों की गणना में वही वर्णनीय हैं जिन्होंने धर्म की रक्षा के लिये समस्त सुखपूर्ण स्वराज्य को भी धर्मविरुद्ध होने के कारण छोड़कर वन में रहना स्वीकार कर लिया है ॥ ९ ॥

तेप्यासन्भुवि मनुजाः पुरा महान्तो
धर्मार्थे वपुरिदमर्पितं बलाद्यैः ।
सन्त्येके प्रभवति वर्तमानकाले
यैस्त्यक्तो धनजनलिप्सया स्वधर्मः ॥१०॥

पहिले समय में एक वे सज्जन हुए जिन्होंने धर्म की रक्षा में अपना शरीर तक दे दिया। वर्तमान काल में एक ऐसे भी हैं जो धन और जन के लालच से धर्म को तिलांजलि दे देते हैं ॥ १० ॥

अद्यापि श्रुतिपथरक्षणे प्रवृत्ताः
केचित्ते समवतरन्ति भारते यैः ।
सर्वस्वं परमतमर्दने प्रदत्तं
नोपात्तं मरणभयेपि पापकृत्यम् ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आजकल भी इस भारतवर्ष में वैदिक मार्ग के रक्षक कोई कोई सज्जन अवतीर्ण होते हैं जो धर्म की रक्षा में अपना सर्वस्व तक देकर पाप में कदापि तत्पर नहीं होते ॥ ११ ॥

ये मन्दाः प्रतिपदमुन्नतौ प्रवृत्ता
मन्यन्ते निजसुखबाधकं स्वधर्मम् ।
न ज्ञातं जगति महत्त्वमस्य मन्ये
तैरात्मम्भरिभिरपास्तधर्ममार्गैः ॥१२॥

त्यक्तधर्ममार्ग जो मूढ़जन सनातन धर्म को अपनी उन्नति का बाधक मानते हैं, उन्होंने इस वैदिक धर्म का महत्त्व नहीं जाना—यही कहा जा सकता है ॥ १२ ॥

आनन्दो जगति भवत्यधर्मनाशा-
द्धर्मस्य प्रतिपदमुन्नतौ महत्त्वम् ।
मत्वेदं मुनिजनवाक्यजातमारा-
देकान्तं श्रुतिपथरक्षणं विधेयम् ॥ १३ ॥

संसार में अधर्म के नाश और धर्म की उन्नति होने पर मनुष्यों को आनन्द तथा महत्त्व प्राप्त होता है। इस बात के बतलानेवाले मुनियों के वाक्यों पर विश्वास रखते हुए सर्वदा वैदिक मार्ग की रक्षा करनी चाहिये ॥ १३ ॥

विद्या तं व्रजति नरोत्तमं प्रसादा-
त्पद्मापि श्रयति तदीयपादपद्मम् ।
देवास्तं प्रतिदिनमर्चयन्ति सेन्द्रा
धर्मं यश्चरति चरित्रवान्मनुष्यः ॥ १४ ॥

जो सच्चरित्र मनुष्य धर्म की सेवा करता है उसको प्रसन्न होकर विद्या वरदान देती है, लक्ष्मी सदा उसके यहां रहती है, देवतागण सर्वदा उसका आदर करते हैं ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नामुत्र व्रजति नरेण साकमम्बा
नो योषा तमयति नैव तातपादाः ।
साहाय्यं विदधति धर्मएव पश्चा-
देकाकी तमनुसरत्यनन्तकालम् ॥ १५ ॥

परलोक में मनुष्य के साथ न तो माता जाती है, न पिता जाते हैं, न स्त्री जाती है, केवल धर्म ही उसका साथ देता है ॥ १५ ॥

यो नैव त्यजति कदापि जीवनान्तं
लोकेस्मिन्मनुजमथापरत्र साकम् ।
रक्षार्थं व्रजति तमद्वितीयसार्थं
धर्मं यो न भजति मन्मते स मन्दः ॥१६॥

जीवनपर्यंत साथ रहनेवाले और जीवन के अन्त में भी जीव के साथ साथ जानेवाले सनातन धर्म का जो सेवन नहीं करता है वह मेरी अनुमति में सर्वथा मंद है ॥ १६ ॥

सर्वस्वं यदि लयमेति यातु यान्तु
प्राणास्तेप्यनुपदमर्थनीयपोषाः ।
किन्त्वेकः सहचर एष धर्मएव
प्राणान्तेप्यहह न नाशमेतु दैवात् ॥१७ ॥

सर्वस्व नष्ट होता हो तो होने दो, सर्वदा रक्षणीय प्राण भी यदि जाते हों तो जाने दो, परंतु सर्वदा साथ रहनेवाला धर्म नष्ट न हो ॥१७॥

एवं ये प्रतिदिनमुत्तमोत्तमाशा-
श्चेष्टन्ते जगति कदापि नैव तेषाम् ।
वैफल्यं श्रयति मनोरथः प्रसिद्धिं
ते यान्ति प्रतिपदमुत्तमाश्च सिद्धिम् ॥१८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इस प्रकार जो मनुष्य प्रतिदिन चिंता रखते हैं, उनका कोई भी मनोरथ विफल नहीं होता है, और प्रसिद्धि के साथ साथ उनको उत्तम सिद्धि भी प्राप्त होती है। १८॥

ये ऽप्यत्वे नरपशवः प्रमादवश्या-
दर्थार्थं विदधति कामसिद्धये वा।
धर्मं ते कथमपि नैव धर्मतत्त्वं
जानन्ति प्रतिलवमर्थकामबद्धाः ॥१६॥

अर्थ और काम के वशीभूत, जो मंद प्रमादवश अर्थ की सिद्धि अथवा काम की सिद्धि के लिये धर्म का सेवन करते हैं, वे अभी तक धर्म का तत्त्व नहीं समझे हैं॥ १९॥

सर्वत्र प्रभवति यः स्वरूपरत्तां
सन्धातुं प्रथयति यो जगत्सु भक्तम्।
धर्मज्ञैर्निगमकथाकलापविद्भि-
र्निर्दिष्टः सुरनरवन्दितः स धर्मः ॥२०॥

स्वरूपरक्षा में सर्वदा समर्थ रह कर अपने भक्त को जगत् में जो बड़ा बनाता है, निगमागमप्रवीण धर्मज्ञ उसी को धर्म कहते हैं॥ २०॥

वेदानां विधिमयवाक्यमूलकत्वा-
न्मंत्राणां तदनु सुकर्मनोदकत्वात्।
मीमांसाप्रणयनपण्डितोऽप्यवादी-
त्तं धर्मं प्रभवति नोदनार्थको यः॥ २१॥

विधिमूलक होने के कारण वेदमंत्र का और क्रियामात्र में प्रवृत्ति दिलाने के कारण मंत्रमात्र का सार्थक्य देख कर मीमांसक जैमिनि ने भी उसी को धर्म माना है जिसका प्रयोजन केवल प्रेरणा ही हो [ चोदनालक्षणोऽर्थोधर्मः ] इति जैमिनिः॥ २१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुत्यर्थानुगमनमेव कार्यमेकं
येषां ते स्मृतिपथसंप्रवर्तका यम् ।
सन्मार्गं जगदुरुदारभावनद्धाः
स्मार्ताख्यो जगति निगद्यते स धर्मः ॥२२॥

श्रुति के अनुकूल कथन करना ही जिनका मुख्य कर्तव्य है वे उदार महर्षि जिस धर्म को कहते हैं वह स्मार्त धर्म कहाता है ॥ २२ ॥

एवं द्वौ जगति यथाक्रमं प्रवृत्तौ
सद्धर्मौ श्रुतिगतवर्णावर्णनीयः ।
तत्राद्यः स्मृतिशतपद्यपूगबद्धः
सम्भूतानवति ततोऽपरः प्रमादात् ॥२३॥

इस प्रकार जगत् में दो प्रकार से वैदिक धर्म प्रवृत्त हुआ है, उन में पहिला श्रुतिप्रतिपादित होने के कारण श्रौतधर्म है, दूसरा स्मृतिप्रतिपादित स्मार्त धर्म है, ये दोनों धर्म मनुष्यों को प्रमाद से हटाते हैं ॥ २३ ॥

अस्तेयप्रभृति मनुस्मृतौ यदुक्तं
सामान्यं स्मृतिगतधर्मलक्षणं तत् ।
वेदान्तः पतितसुवर्णसम्प्रसूतं
वैशिष्ट्याद्वति विशेषतां तदेव ॥ २४ ॥

मनुस्मृति में धृति आदि जो धर्म के दश लक्षण कहे हैं वे सब सामान्य लक्षण हैं, धर्म का विशेष लक्षण वही है जो मन्त्रब्राह्मणानुमोदित है ॥ २४ ॥

सामान्यं यदुदितमस्य लक्षणं त-
त्साधर्म्यं भजति मनुष्यमात्रएव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वंरूपं यदवति तद्विशेषरूपं

संप्रोक्तं शतपथतत्त्वपारदृग्भिः ॥२५॥

धर्म का सामान्य लक्षण मनुष्य मात्र में घट सकता है, परन्तु प्रत्येक जाति का स्वरूपरक्षक, धर्म का विशेष लक्षण ही होता है। इस रहस्य को शतपथज्ञ विद्वान् ही जान सकते हैं ॥ २५ ॥

धर्माद्यो झटिति निपातयत्यशक्ता-

नेकान्तं प्रसरति यः प्रवृत्तिमार्गे।

संसारे बलवति पातको नराणां

सोऽधर्मः श्रुतिपथवेदिभिः समुक्तः ॥ २६॥

दुर्बल आत्माओं को बलपूर्वक धर्म से हटा कर जो केवल प्रवृत्ति मार्ग में लगाता है वह चरित्र से गिराने वाला अधर्म कहाता है ॥ २६ ॥

संसर्गाज्जन इह वृद्धिमेति पूर्वं

पापानाञ्जयति रिपूनशङ्कमेव।

भद्राणि प्रतिदिनमीक्षते परस्ता-

त्सर्वान्तं व्रजति समूलनष्टशक्तिः ॥२७॥

अधर्म के योग से मनुष्य पहिले बढ़ता है, फिर शत्रुओं को जीत लेता है, उसके अनन्तर आनंद भोग लेता है और अंत में समूल नष्ट हो जाता है २७

आरम्भेऽमृतमिव यत्फलं प्रदिष्टं

पश्चाद्यत्फलमतिदारुणं तमारात्।

सन्त्यक्त्वा समलमधर्ममत्र लोके

स्वं रूपं कथमपि रक्षणीयमुच्चैः ॥ २८ ॥

आरंभ में अमृत के समान और परिणाम में विष के समान जिसका फल आचार्यों ने कहा है उस अधर्म को छोड़ कर सबको अपने अपने स्वरूप की रक्षा करनी चाहिये ॥ २८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केषाञ्चिद्भवति मते स्वरूपभावः
स्वे देहे यशसि ततोऽधिकः परेषाम् ।
अन्येषां सकलमुदारकल्पनानां
विस्तीर्णं जगदपि नैजरूपमेव ॥ २९ ॥

कोई मनुष्य तो स्वरूप शब्द का अर्थ केवल अपना शरीर ही समझते हैं, कोई उससे अधिक कीर्ति को अपना स्वरूप मानते हैं और कोई सब से अधिक जगन्मात्र को अपना स्वरूप समझते हैं ॥ २९ ॥

आनन्त्यं व्रजति बहुस्वरूपभेदैः
स्वे धर्मे भवति सदैव धर्मभेदः ।
लोके यः प्रतिदिनमीक्ष्यते मनुष्यैः
प्रत्यक्षं मुखभुजजानुपादजेषु ॥ ३० ॥

स्वरूपों की अनंतता से धर्म के भी अनेक भेद बन जाते हैं। ब्राह्मणादि चार वर्णों में तथा वर्णसंकरों में उसका भेद प्रत्यक्षरूप से प्रतिदिन अनुभव होता है ॥ ३० ॥

ब्राह्मण्यं प्रभवति जन्मतः प्रसूतं
यैरत्र प्रतिपदमुन्नतं तपोभिः ।
यैर्वाऽन्यैः शुभतरकर्मभिः स धर्म-
स्तद्रूपानुगइव पातकं ततोऽन्यत् ॥ ३१ ॥

जन्मगत ब्राह्मणत्व जिन शमदमादि से प्रतिक्षण बढ़ता है, वे ही ब्राह्मण के लिये धर्म हैं, इसके विरुद्ध जो ब्राह्मणत्व से गिराने वाले हैं वे पातक हैं। इसी प्रकार क्षत्रियादि में भी समझना चाहिये ॥ ३१ ॥

इत्थं यैर्जगति मता स्वरूपरक्षा
धर्मास्ते मुखभुजजानुपादजानाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैधर्म्यं प्रभवति यैः स्वरूपभेदे
तेऽधर्माः श्रुतिपथवेदिभिः प्रदिष्टाः ॥३२॥

इस प्रकार जगत् में जिससे स्वरूप की रक्षा हो वह ब्राह्मणादि के लिये धर्म है और जिससे अपना अपना स्वरूप नष्ट होता हो वह उनके लिये अधर्म है ॥ ३२ ॥

देहोऽयं जगति मतः स्वरूपवादे
सर्वस्वं प्रतिपदमुत्पथं गतानाम् ।
येषां ते निजनिजदेहमात्ररक्ता-
संसक्ताः प्रतिपुरमापरःसहस्राः ॥३३॥

प्रवृत्तिमार्ग में प्रवृत्त जिन मनुष्यों के मत में, स्वरूप शब्द का अर्थ केवल देहमात्र है, ऐसे नास्तिक जन संसार में कम नहीं हैं ॥ ३३ ॥

ये देहं भुवि गणयन्ति नैव शूराः
स्वं रूपं यशसि निमग्नचेतसस्ते ।
धर्मज्ञाः सगर-दिलीप-कर्ण-पादा
यैर्दत्तं निजवपुरन्यकार्यसिद्ध्यै ॥ ३४ ॥

देहमात्र को स्वरूप न मानकर जो अपनी कीर्ति को अपना स्वरूप मानते हैं वे सगर दिलीप कर्ण आदि महानुभाव हैं, जिन्होंने अपना शरीर तक परकार्य में दे दिया ॥ ३४ ॥

संपूर्णं जगदपि यैः स्वरूपमात्रं
विज्ञातं प्रथितदधीचिभोजकल्पैः ।
तैरिन्द्रोपकृतिपरायणैः प्रदत्तं
लोकानामुपकृतये निजास्थि तूर्णम् ॥३५॥

जिनके मत में समस्त संसार अपना स्वरूप है, उनमें दधीचि आदि प्रथमगण्य हैं, जिन्होंने इंद्र के उपकार के लिये अपने शरीर की अस्थितक निकाल कर देदी ॥ ३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्माकं जगति किमस्ति सत्स्वरूपं
यैरेवं निजहृदि चिन्तितं सुधीभिः ।
ते भूयो जनिमृतिचक्रपाशमध्ये
नैवास्मिन्महति कदापि सम्पतन्ति ॥३६॥

हमारा स्वरूप क्या है ? इस प्रश्न पर विचार करते करते जिन्होंने अपना स्वरूप समझ लिया है, वे जन्म-मरण-रूप चक्र में आने के लिये कदापि इच्छा नहीं करते हैं ॥ ३६ ॥

सर्वोऽयं विलसति यस्य लोकमध्ये
विस्तारः श्रुतिशतभूरिवर्णनीयः ।
विख्यातः स किल सनातनोस्ति धर्मो
यः सर्वं जगदिदमादरेण धत्ते ॥ ३७ ॥

इतना बड़ा जिसका विस्तार संसार में दृष्टिगोचर हो रहा है, वह सत् का धारण करनेवाला वेदप्रतिपादित एक सनातन धर्म ही है ॥ ३७ ॥

धर्मं तं बहुमतमर्थकामशून्याः
संसारे कतिचन भावुकाः स्तुवन्ति ।
नो सर्वे ततइदमस्ति धर्मतत्त्वं
प्राचीनैर्विनिहितमादराद्गुहायाम् ॥३८॥

उस धर्म को अर्थ काम में अप्रसक्त कोई भावुक ही जानते हैं, सब नहीं, इसी लिये इस धर्म का तत्त्व प्राचीन आचार्यों ने गुहा में छिपा हुआ बतलाया है [ धर्मस्य तत्त्वं निहितं गुहायाम् ] ॥ ३८ ॥

तौ हेयावतिशयतोऽत्र भारतीयैः
संसारे प्रतिपदपातमर्थकामौ
वेदोक्तः स्मृतिशतसम्मतोपि याभ्या-
मेकान्तं प्रपतति सर्वदः स्वधर्मः ॥३९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेद एवं स्मृतियों के द्वारा प्रतिपादित सनातन धर्म जिन अर्थ और काम के वश में पड़ कर सर्वथा छूट जाता है, ऐसे अर्थकाम के बंधन में भारतीयों को नहीं पड़ना चाहिये ॥ ३९ ॥

देशेऽस्मिन्भरतमहीभुजा प्रसिद्धे
प्राधान्यं न मिलति तद्विलासितायाः ।
नार्थस्य श्रुतिपरिपन्थिनः प्रभुत्त्वं
धर्मस्य प्रतिपुरमस्ति तारतम्यम् ॥ ४० ॥

इस भारतभूमि में विलासिता का प्राधान्य नहीं है और वेदमार्ग-विघातक अर्थ का भी प्रभुत्व नहीं है। धर्मप्राण भारत में तो केवल धर्म का ही प्राधान्य है ॥ ४० ॥

मत्त्वेदं निजहृदये मयापि धर्मे
दत्तान्तःकरणकलेन धर्मभूत्यै ।
यत्काव्यं परमतमर्दनं प्रणीतं
तत्सर्वैः प्रतिदिनमादरेण वीक्ष्यम् ॥ ४१ ॥

इस बात को मन में विचार कर अपना मन धर्म में लगाना चाहिये और धर्म की वृद्धि के लिये जो मैंने यह महाकाव्य लिखा है उसे आदर से देखना चाहिये ॥ ४१ ॥

काव्येऽस्मिन्परमतदर्पशान्तिमूले
धर्मस्य प्रतिपदमुन्नतिः प्रसादात् ।
विन्यस्ता बहुविधवृत्तबद्धपद्यैः
पापानां विदलनमाहितं परस्तात् ॥ ४२ ॥

दूसरों के मत का दर्पदलन करने वाले इस महाकाव्य में, अनेक वृत्तांकित पद्यों द्वारा, मैंने सनातन वैदिक धर्म की रक्षा तथा अधर्म का यथाक्रम खंडन किया है ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संसार में धर्म का अवलंब लिये बिना सुख प्राप्त होना असंभव है। इसलिए मनुष्यमात्र को उचित है कि वह पूर्वजों के द्वारा अनुमोदित सनातन धर्म का अनुगमन करे ॥ ५१ ॥

नलस्य राज्ञः समयेऽत्र धार्मिके
दरिद्रदारिद्र्यमभूदिति श्रुतम् ।
परं दरिद्रेण वशीकृता मही
निरुद्यमानां कृपयाऽद्य लभ्यते ॥ ५२ ॥

महाराजा नल के धार्मिक राज्य में दरिद्र का दारिद्र्य था। कोई दरिद्री ढूँढ़ने पर भी नहीं मिलता था। आजकल कलियुग में निरुद्यम मनुष्यों के अनुग्रह से घर घर दरिद्र आ गया है ॥ ५२ ॥

पुरे पुरे वार्षिकसत्रसम्भवा-
द्ववर्ष देवः समये पुरातने ।
अखण्डदुर्भिक्षकथाऽद्य भारते
भिनत्ति कर्णौ रसवत्कथाजुषाम् ॥ ५३ ॥

पहले समय में, सर्वत्र वर्षा के निमित्त बड़े बड़े यज्ञ होते थे। आजकल उनके अभाव से, भारतवर्ष में दुर्भिक्ष का अखंड पाठ चल रहा है ॥ ५३ ॥

अभूत्पुरा यन्मुनिवर्यसेवितं
बुधप्रधानं समयेन भारतम् ।
तदेव मन्दैरभितः समावृतं
विलोक्यते किन्न भवद्भिरुच्यताम् ॥ ५४ ॥

जिस भारतवर्ष में ढूँढ़ने पर भी पहले मूर्ख नहीं मिलता था, उसमें आज यत्रतत्र एक आध कोई पंडित मिलता है ॥ ५४ ॥

पदे पदे भारतवर्षसम्भवाः
समस्तरोगैरधुना वशीकृताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न ये प्रतिश्यायभवामपि व्यथां
पुरान्वभूवन्नुदितेऽत्र भारते ॥ ५५ ॥

जिस भारत में पहले मनुष्य प्रतिश्याय को भी नहीं जानते थे आज उसमें बड़े बड़े भयंकर रोगों ने सर्वदा के लिए अपना स्थान बना लिया है ॥ ५५ ॥

पुराऽवहन्यत्र पयस्विनीपयः
परम्पराभिः प्रथिताः पुरे पुरे ।
गृहेषु नद्यस्तदिदं विलोक्यतां
जलेन हीनं समयेन भारतम् ॥ ५६ ॥

जिस भारतवर्ष में पहले घर घर दूध की नदियाँ बहा करती थीं आज उसमें यथेष्ट पानी भी नहीं मिलता है ॥ ५६ ॥

चित्ते सर्वैरिदमनुदिनं भारतीयं चरित्रं
ध्यायं ध्यायं तदुपकृतये धर्मरक्षा विधेया ।
धर्मप्राणा जगदधिपतेर्जन्मना वन्दनीया
मन्दाक्रान्ता न भवतु मही भारतीया यथेयम् ॥५७॥

इन सब बातों पर विचार कर के, भारत के उद्धारार्थ, मनुष्यमात्र को सनातन धर्म की रक्षा में कटिबद्ध होना चाहिए। जिस से भगवान् के अवतारों से पवित्रित धर्मप्राण यह भारत भूमि, फिर "मन्दाक्रान्ता" न हो यही इस ग्रन्थ के पाठकों से सर्गान्त में हमारा नम्र निवेदन है ॥५७॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये
धर्मजन्मभूमिवर्णनं नाम चतुर्थः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# पञ्चमः सर्गः

अथ स्वगतमालोक्य शैथिल्यं बलवत्तरम् ।
धर्मः सनातनश्चिन्तामाजगाम यथोचिताम् ॥१॥
यथोचितेन विधिना समुपेत्य महेश्वरम् ।
स तत्पुरत एवेदमुवाच समयोचितम् ॥२॥
मदीया जन्मभूरेषा भरतेनाभिपालिता ।
विद्यमाने मयि कथं विधवेव विपद्यते ॥३॥
आसं पुरा कृतयुगे चतुष्पादहमुन्नतः ।
कृपया कस्य मन्दस्य पुनरेकपदोऽभवम् ॥४॥

इतने समय के अनंतर अपने में आया हुआ दौर्बल्य देखकर सनातन-धर्म चिन्तित हुआ ॥ १ ॥ चिन्ता के उपस्थित होते ही सनातन धर्म ने जगन्मात्र के एकमात्र स्वामी भगवान् के पास जाकर अपना वृत्तांत इस प्रकार उपस्थित किया ॥ २ ॥ हे भगवन् ! भरत के द्वारा सुरक्षित यह भारत भूमि मेरे रहते हुए भी विधवा जैसी क्यों नष्ट हो रही है ॥ ३ ॥ मैं पहले सतयुग में चार चरणों पर विद्यमान था, आज किसकी कृपा से एक चरण बन गया हूँ ॥ ४ ॥

यज्ञाध्ययनदानाख्यास्त्रयः पादाः पदे पदे ।
प्रकम्पिताः प्रदृश्यन्ते हेतुना केन भारते ॥५॥
दमादीनां मदङ्गानां विद्यमानेऽपि सौष्ठवे ।
कः सारमहरत्पापः प्रक्रमेण पदे पदे ॥६॥
पुरे पुरे मम कथा यथाऽऽसीत्पूर्वमादृता ।
न वर्तते तथेदानीमत्र को हेतुरुच्यताम् ॥७॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मदर्थे दत्तसर्वस्वा येऽभवन्नत्र भारते।
चर्चाऽपि मम नास्त्यद्य तत्कुलेषु यथोत्तरम् ॥८॥

यज्ञ, अध्ययन, दान, यह तीन मेरे चरण आज किस कारण से नष्ट हो रहे हैं ॥ ५ ॥ शम दम आदि मेरे अंगों के होने पर भी आज उनके अन्दर से किसने सार खींच लिया है ॥ ६ ॥ मेरी कथा का जिस प्रकार पहले समय में आदर था वैसा अब नहीं है। इसका क्या कारण है ? ॥ ७॥ पहले समय में मेरे लिए जो अपना तन, मन, धन अर्पण करते थे आज उनके वंश में मेरी चर्चा भी नहीं होती है ॥ ८ ॥

नाभिमानं मनुष्येषु मदीयं विद्यतेऽधुना।
न देशजं न कुलजं नात्मजं न च जातिजम् ॥९॥
आक्षिपन्ति मदङ्गेषु प्रसक्तान् पुरुषोत्तमान्।
परापवादकुशला बहवोऽद्य मदोद्धताः ॥१०॥
मदाज्ञापालनपरान्मद्भक्तान्मयि सङ्गतान्।
प्रसभं वद लोकेश ! को वञ्चयति मानवान् ॥११॥
प्रचारे सत्यपि जवात्सज्जनानवनीगतान्।
कः प्रापयत्यवनतिं मद्गतान्मांश्च सुस्थिरम् ॥१२॥

मनुष्यों में आजकल न धर्म का अभिमान रहा है, न देश का, न कुल का, न अपनी जाति का और न अपना ॥ ९ ॥ जो मेरी आज्ञा का पालन करते हैं उन पर आजकल अनेक प्रकार के आक्षेप हो रहे हैं ॥ १० ॥ मेरी रक्षा में तत्पर मनुष्यों को आज कौन सा बलवान् शत्रु बलपूर्वक ठग रहा है ॥ ११ ॥ भारत में मेरे रहने पर भी कौन सा बलवान् शत्रु मुझको तथा मेरे भक्तों को अवनति की ओर ढकेल रहा है ॥ १२ ॥

औदासीन्यं कथमभून्मयि भूतलवासिनाम्।
अनास्था च कथं तेषां मत्कथासु समुद्गता ॥१३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वरूपविस्मृतिः कस्माद्भारतीये जनव्रजे ।
विलोक्यते कथञ्चास्याः पुनर्जन्म भविष्यति ॥१४॥
कथं कामः पदमदात्सज्जनेषु गृहे गृहे ।
दम्भेन कथमाक्रान्तं जगदेतच्चराचरम् ॥१५॥
उन्नतं पदमापन्ने लोभेऽत्र विलयं गता ।
दृश्यते दानमानानां चर्चाऽपि न भुवस्तले ॥१६॥

भारतीय मनुष्यों की मेरे विषय में और मेरी कथा में अनास्था क्यों हो गई है ? ॥ १३ ॥ भारतीय मनुष्य अपना स्वरूप क्यों भूले हुए हैं ? और किस प्रकार वे फिर उस अपने स्वरूप को पा सकेंगे ? ॥ १४ ॥ भारतीय मनुष्यों में कामदेव ने और दंभ ने क्यों अपना प्रभुत्व जमाया है ? ॥ १५ ॥ भारत में आजकल लोभ बढ़ रहा है। दान-मान की चर्चा भी कानों में नहीं आती है ॥ १६ ॥

सचेतना अपि जना यत्प्रभावादचेतनाः ।
प्रभवन्ति स पापीयान् क्रोधः सर्वानुपाविशत् ॥१७॥
देशभाषाप्रभावेण संस्कृतं विलयं गतम् ।
तत्पदेषु समायाता वामाङ्गी यावनी लिपिः ॥१८॥
कीराङ्गना अप्यवदन्यत्र देवगिरं शिवाम् ।
मनुजा अपि तत्राद्य न वदन्ति विलोक्यताम् ॥१९॥
अमीमांस्याऽद्य मीमांसा दर्शनानामदर्शनम् ।
श्रुतेरश्रवणं लोके भवता किन्न दृश्यते ॥२०॥

जिस के प्रभाव से चेतन भी अचेतन बन जाते हैं वह क्रोध सब में आकर प्रविष्ट हो गया है ॥ १७ ॥ संस्कृत भाषा का स्थान आजकल देश भाषाओं ने ले लिया है। और उनके स्थान पर उलटी चलनेवाली उर्दू आकर उपस्थित हुई है ॥ १८ ॥ जिस देश में पहले तोता और मैना तक संस्कृत बोलते थे आज उसमें सब ब्राह्मण भी उस वाणी को नहीं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जानते हैं ॥ १९ ॥ भारत में आज न कहीं मीमांसा का विचार है, न दर्शनों की चर्चा है, रही वेद की बात, उसका तो कहना ही क्या है ॥२०॥

अभूवन् वानरा यत्र पाणिनीयपरायणाः ।
नरा अपि न विद्यन्ते तत्राद्य तदुपासिनः ॥२१॥
श्रीहर्षबाणमाघादिकवीनां पदमुन्नतम् ।
भाषाकवनमात्रेण समाक्रान्तं महोदयैः ॥२२॥
कटूनि काकभोग्यानि निम्बद्रुमफलान्यपि ।
स्पर्धन्ते द्राक्षया सार्धं करीराश्चन्दनद्रुमैः ॥२३॥
अपूजनाद् गवां लोके बहवो गृहमेधिनः ।
नष्टवंशाः प्रतिपुरं विलोक्यन्ते धनोन्नताः ॥२४॥

जिस देश में पहले वानर भी व्याकरण के पंडित होते थे उस में आज सब नर भी व्याकरणज्ञ नहीं हैं ॥ २१ ॥ श्रीहर्ष, बाण, माघ आदि कवियों के पद पर आज हिन्दी के सद्यः कवियों ने आसन जमा दिया है ॥ २२ ॥ कौवों के खाने योग्य कड़ुवे नीम के फल, अंगूरों से स्पर्धा रखते हैं और करील चन्दन की बराबरी करने चले हैं ॥ २३ ॥ गो पूजा के अभाव से बहुत से सज्जन गृहस्थ प्रत्येक स्थल में नष्टवंश हो रहे हैं ॥२४॥

अनुरागः पुरा योऽभूद् गोषु भारतवासिनाम् ।
स एवाद्य शुनां वृन्दे पश्य भारतवासिनाम् ॥२५॥
बाहुजानां विलासेषु दृश्यते बहुधा रुचिः ।
न प्रजारञ्जने नापि शत्रूणां परिपीडने ॥२६॥
कुसीदभोजनपरा वणिजोऽपि पुरे पुरे ।
द्विगुणं धनमाहृत्य पीडयन्ति दरिद्रितान् ॥२७॥
आक्षिपन्ति न सेवन्ते द्विजान् पदसमुद्भवाः ।
धनं भाग्यवशादाप्य स्पर्धन्ते वर्णसङ्कराः ॥२८॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भारत वासियों का जो अनुराग पहले गोसेवा में था आज वह कुत्तों के पालने में लगा हुआ है ॥ २५ ॥ क्षत्रियों की प्रवृत्ति आजकल प्रायः विलासिता में लगी है, प्रजारंजन और शत्रुभंजन करना वे भूल गए हैं ॥ २६ ॥ वैश्य प्रायः सूद में धन लगा कर निश्चिन्त बैठे हुए हैं। कृषि, गोरक्षा और वाणिज्य करना अब उनका अच्छा नहीं लगता है ॥ २७ ॥ शूद्र आज कल द्विजों की निन्दा में लगे हुए हैं, सेवा करना जो उनका धर्म था उसको वे भूल गए हैं ॥ २८ ॥

सङ्कीर्णा भूसुरपदं वणिजां पदमागताः ।
प्रत्यक्षे किन्न दृश्यन्ते चर्मम्नाः पश्यतोहराः ॥२९॥
अनादृत्य मदोन्मत्तैः पातिव्रत्यं प्रतिष्ठितम् ।
तत्पदे प्रस्तुतं कामाद्विधवाकरपीडनम् ॥३०॥
विधवाःसधवा जाताःसधवा विधवाः क्रमात् ।
पातिव्रत्यविनाशेन सतीत्वमगमल्लयम् ॥३१॥
श्रीमद्भागवतादीनां कथाऽद्य विलयं गता ।
दैनिकादीनि पत्राणि पठ्यन्ते तत्पदे जनैः ॥३२॥

ब्राह्मणों के पद पर बढ़ई, लुहार, नाई आदि शूद्र चढ़ने लगे हैं। वैश्यों का स्थान तेली, चमार सुनार आदि ने ले लिया है ॥ २९ ॥ मदमत्त मनुष्यों ने पातिव्रत्य धर्म को नीचे गिरा कर उसके स्थान में विधवा विवाह चला दिया है ॥ ३० ॥ पातिव्रत्य धर्म के नष्ट होने से आज विधवा सधवा हो गई है और सधवा विधवा के समान हो रही है ॥३१॥ श्रीमद्भागवत की चर्चा आज लुप्तप्राय हो गयी है, उसके स्थान पर दैनिक साप्ताहिक और मासिक पत्र पढ़े जाते हैं ॥ ३२ ॥

वेदव्याख्यानरूपाणि पुराणानि गृहे गृहे ।
तन्महत्त्वमजानद्भिर्निन्द्यन्ते नास्तिकैर्जनैः ॥३३॥
श्राद्धादि वैदिकं कृत्यमनादृत्य मदोद्धतैः ।
क्रियते तत्र विषये विवादस्तर्कमूलकः ॥३४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्माकं स पिता योगाद्दिवमत्र विवेचने ।
प्रमाणं दीयतामित्थं प्रवदन्त्यसतोसुताः ॥३५॥
तीर्थानि यानि विद्यन्ते भारतीयानि भूतले ।
वेश्यावनपदेनाद्य कथ्यन्ते तानि पामरैः ॥३६॥

वेदों के व्याख्यान रूप जो अठारह पुराण हैं उनका तत्व न समझ कर आज नास्तिक उनकी निन्दा कर रहे हैं ॥ ३३ ॥ जिस मृतक श्राद्ध का अथर्ववेद में वर्णन मिलता है उसको न मानकर, आज नास्तिक जन उसके विषय में तर्क करने लगते हैं ॥ ३४ ॥ जो मर गया है, वह हमारा पिता था, इसमें प्रमाण क्या है, इस प्रकार आजकल प्रत्यक्षवादी नास्तिक व्यर्थ विवाद करते हैं ॥ ३५ ॥ भारत में आज जो तीर्थ स्थान बने हुए हैं उनको नास्तिक वेश्यावन के नाम से कहने लगे हैं ॥ ३६ ॥

विलयं प्रगता लोके देवार्चनपरम्परा ।
मतस्थापकचित्राणि स्थाप्यन्ते तत्पदेऽधुना ॥३७॥
तुलसीपूजनं नष्टं विनष्टं चरणामृतम् ।
तत्पदे धर्मनाशाय सुरापानं विधीयते ॥३८॥
वेदेषु ये निगदिता भूसुरास्तेऽद्यभारते ।
सोपहासं वेनिन्द्यन्ते तन्महत्त्वासहिष्णुभिः ॥३९॥
गुरुपूजा प्रहसनं पामरैरधुना कृतम् ।
विनाशमगमत्तेन विद्यादानपरम्परा ॥ ४० ॥

देवतों का पूजन आज भारत से उठ गया । उसके स्थान पर मत चलाने वाले मनुष्यों के चित्र पूजे जाते हैं ॥३७॥ तुलसी का पूजन जाता रहा और विष्णु भगवान का चरणामृत नष्ट हो गया । उसके स्थान पर शराब की धूम मच रही है ॥ ३८ ॥ वेद में जिनको भूसुर अथवा भूदेव कहा है उन ब्राह्मणों का आज ब्राह्मणेतर निरादर कर रहे हैं ॥ ३९ ॥ आजकल के नास्तिक गुरु पूजा का मजाक उड़ाने लगे हैं । इससे विद्या दान की प्रथा नष्ट होती जाती है ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गर्भाधानादिसंस्काराः सर्वथा विलयं गताः ।
नाममात्रमहो ! तेषां गृह्यसूत्रेषु लभ्यते ॥४१॥
नाचार्याः प्रविलोक्यन्ते न चाचार्यकुलं क्वचित् ।
दृश्यन्ते तत्पदे भूयः कुलानि व्यभिचारिणाम् ॥४२॥
ब्रह्मचर्यव्रतं नष्टं भिक्षाव्रतविलोपनात् ।
इदानीं वञ्चका लोके कथ्यन्ते ब्रह्मचारिणः ॥४३॥
धर्मोऽयमिति मत्वाऽत्र विद्यादानं पुराऽभवत् ।
क्रयविक्रयरूपेण साम्प्रतं तद्व्यवस्थितम् ॥४४॥

गर्भाधान, पुंसवन आदि वैदिक संस्कार आज नष्ट हो गए। केवल गृह्यसूत्रों में ही उनका नाम मिलता है ॥ ४१ ॥ दीक्षा देनेवाले धर्माचार्यों का आज महत्त्व नहीं है। उनके पद पर जहाँ देखो वहां व्यभिचार के स्थान बने हुए हैं ॥ ४२ ॥ भिक्षाव्रत के उठ जाने से वैदिक ब्रह्मचर्य का अभाव हो गया है। उनके स्थान पर लंबी दाढ़ी और जटाजूट रखने वाले ठग आ गये हैं ॥ ४३ ॥ जो ब्राह्मण धर्म समझ कर पहले विद्या दान देते थे आज वे क्रय विक्रय रूप से उसको बेच रहे हैं ॥ ४४ ॥

ब्राह्मणानाङ्कृते यस्य विधानमुपलभ्यते ।
स संन्यासोऽधुना धूर्तैर्भारते कलुषीकृतः ॥४५॥
क्षत्तारः कुम्भकाराश्च धीवराः पश्यतोहराः ।
अम्बष्ठाः साम्प्रतं लोके दृश्यन्ते यतिवेषगाः ॥४६॥
कन्यानां विक्रयः प्रायो वर्धतेऽद्य भुवस्तले ।
यत्प्रभावेण भुज्यन्ते वृद्धैरपि नवाः स्त्रियः ॥४७॥
वदन्ति समयं लोका यमुन्नतिकरं क्रमात् ।
स एवावनतेः सर्वं पदं दर्शयति स्फुटम् ॥४८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिस संन्यास का विधान केवल ब्राह्मणों के लिए धर्मशास्त्रों में मिलता है उसको आजकल के धूर्तों ने अपनी जीविका का साधन बना लिया है ॥ ४५ ॥ बढ़ई, कुम्हार, धीमर, सुनार, अंबष्ठ आदि आजकल संन्यास वेष का धारण किये हुए संसार को ठग रहे हैं ॥ ४६ ॥ भारत में कन्याओं का विक्रय प्रति दिन बढ़ रहा है। जिसके प्रभाव से वृद्ध भी कहीं कहीं पर अपना विवाह कर लेते हैं ॥ ४७ ॥ जिस को आज मनुष्य उन्नति का समय मान रहे हैं वह अवनति की ओर बलपूर्वक जा रहा है ॥ ४८ ॥

निबोधय मदुद्धारमहोपायं दयानिधे !
करुणाकर ! कारुण्यं कुरु मय्युपसङ्गते ॥४९॥

इति धर्मेण बहुशः कथितो जगताम्पतिः ।
धर्मं सनातनं प्राह भावगम्भीरया गिरा ॥५०॥

कुरुक्षेत्रमहायुद्धे यदा सर्वे महीभुजः ।
अहम्पूर्वमहम्पूर्वमिति युद्धाय सङ्गताः ॥५१॥

तव पुत्रस्तदा सर्वान्विजित्य मदुपाश्रयात् ।
हिमालयमनुप्राप्य देहं तत्याज सानुजः ॥५२॥

हे दयानिधे ! आप मेरे उद्धार का अच्छा उपाय बताइये और मेरे ऊपर दयादृष्टि का संचार कीजिए ॥ ४९ ॥ इस प्रकार धर्म के मुख से भारत की तथा सनातन धर्म की अवनति सुन कर बड़े गंभीर भाव से भगवान् ने कहा ॥ ५० ॥ कुरुक्षेत्र के संग्राम में भारत के सब नृपतिगण जब आपस में एक दूसरे से लड़ने को आये थे ॥ ५१ ॥ उस समय आप का पुत्र युधिष्ठिर मेरी कृपा से विजय प्राप्त कर के अंत में शरीर छोड़ने के लिए हिमालय को गया था ॥ ५२ ॥

तदिदं शोकवृत्तान्तं समाकर्ण्य भवानपि ।
दौर्बल्यमनुसम्प्राप्तः शीतर्तौ यद्वदातपः ॥५३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवन्तं दुर्बलं श्रुत्वा भवद्वैरी पुरातनः ।
भारते पदमाधातुं प्रस्थितोऽस्ति निजालयात् ॥५४॥
विकारमगमद्यद्यद्भारते दैवयोगतः ।
तदेतत्सकलं तस्य कलेरेव विचेष्टितम् ॥५५॥
तमिदानीं पुनर्जेतुं पापं पापपरायणम् ।
जहीहि जगदाधार ! शोकं तनयमृत्युजम् ॥५६॥

हिमालय में उसका देहावसान सुन कर पुत्र शोक से आप शीत काल में आतप की तरह क्षीण हो गये हैं ॥ ५३ ॥ आपको दुर्बल सुनकर आप का पुराना शत्रु कलियुग आपको जीतने के लिए भारत में आ रहा है ॥ ५४ ॥ आजकल भारत में जो जो विपरीत कार्य हो रहे हैं वे सब उसी के पूर्वरूप है ॥ ५५ ॥ पापपरायण उस बैरी को फिर जीतने के लिए इस समय आप उठिये ॥ ५६ ॥

भारतं भारतङ्कर्तुमुन्नतां सुरभारतीम् ।
सर्वदिग्विजयाय त्वमुत्तिष्ठ मम शासनात् ॥५७॥
इतिहासपुराणज्ञा वेदवेदाङ्गपारगाः ।
सर्वत्रापि भविष्यन्ति ब्राह्मणास्ते सहायकाः ॥५८॥
मदादेशात्प्रदास्यन्ति साहाय्यं सर्वदेवताः ।
सर्वतस्तव रक्षायै भविष्याम्यहमुद्यतः ॥५९॥
इन्द्रादयो दिशामीशाः स्वस्वदिक्षु प्रतिष्ठिताः ।
सर्वमायोजनं वेगात् करिष्यन्ति पदे पदे ॥६०॥

भारत को तथा सुर-भारती को फिर दुबारा उन्नत बनाने के लिए मेरे कथन से आप दिग्विजय के लिए उद्यत हूजिए ॥ ५७ ॥ इतिहास, पुराण, वेद वेदांग के जानने वाले ब्राह्मणगण इस कार्य में आप का सर्वत्र सहाय करेंगे ॥ ५८ ॥ मेरे आदेश से इन्द्र आदि समस्त देवगण आपके लिए सहायता देंगे और मैं स्वयं आप का साथ देने के लिए उद्यत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रहूँगा ॥ ५९ ॥ इन्द्र आदि दिक्पाल अपनी अपनी दिशाओं में आपके लिए युद्ध की सब सामग्री एकत्रित कर देंगे ॥ ६० ॥

मङ्गलानि समस्तानि भविष्यन्ति त्वया सह ।
अमङ्गलानि ते शत्रोर्भविष्यन्ति समन्ततः ॥६१॥
प्रकारेणामुना लोके विजयस्ते भविष्यति ।
विनाशमेष्यति रिपुस्तवायं सार्वकालिकम् ॥६२॥
इत्येवं तं समादिश्य हरिरन्तर्हितोऽभवत् ।
धर्मोऽपि भगवद्वाक्यं कर्तुं चक्रे मनः स्थिरम् ॥६३॥
आलोकनाय नवदिग्विजयस्य देवै-
र्देवालयेषु विहितो नवतूर्यनादः ।
मोदाय सर्वजगतामशिवापनुत्त्यै
धर्मोदयाय भवताद्भुवनोदरस्थः ॥६४॥

संसार में जितने मंगल हैं वे सब आप के साथ होंगे और जितने अमंगल हैं वे सब आप के शत्रु को प्राप्त हो जायँगे ॥ ६१ ॥ इस प्रकार से आपका संसार में विजय होगा और जो आपका शत्रु है वह सर्वदा के लिए नष्ट हो जायगा ॥ ६२ ॥ इस प्रकार धर्म के प्रति आशीर्वाद देकर भगवान् अंतर्हित हो गए और धर्म ने भी उनकी आज्ञा का पालन करने के लिए अपना मन स्थिर कर लिया ॥ ६३ ॥ इस नवीन दिग्विजय को देखने के लिए प्रसन्न होकर देवगणों ने जो अपने अपने लोक में तूर्यनाद किया है वह अमंगलों को नष्ट कर संसार में आनन्द और धर्म वृद्धि का पर्याप्त साधन बने ; यही सर्गान्त में हमारी मंगल-कामना है ॥ ६४ ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये
कर्तव्यनिश्चयो नाम पञ्चमः सर्गः

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षष्ठः सर्गः

दिवं प्रयाते विधिपारवश्या-
युधिष्ठिरे मन्दबलं विलोक्य ।
बलेन धर्मं चिरदत्तदृष्टिः
कलिस्तदीयं पदमाविवेश ॥१॥

दैवयोग से युधिष्ठिर के स्वर्ग जाने पर धर्म को दुर्बल देख कर बहुत दिनों के अनन्तर कलिदेव धर्म के स्थान पर उपस्थित हुआ ॥ १ ॥

स धर्मयोगेन जगत्समस्तं
समीक्ष्य नानाविधसौख्यपूर्णम् ।
हृदन्तरे तद्विलयैकचिन्त-
श्चचाल भेत्तुं हृदयानि पुंसाम् ॥२॥

धर्म के कारण समस्त भारत को आनंदित देख कर धर्म को नीचा दिखाने के लिए वह कलिदेव मनुष्यों के हृदय में प्रविष्ट होने लगा ॥ २ ॥

अनेकचिन्ताकुलमेनमाप्तं
प्रसङ्गतो वीक्ष्य जवादधर्मः ।
पपात पूर्वं पदयोः पुरस्ता-
दमुष्य पश्चात्कुशलान्यपृच्छत् ॥३॥

कलिदेव को अनेक चिंताओं से व्याकुल देख कर अधर्म ने पहले उसके लिए प्रणाम किया और फिर कुशल पूँछना आरम्भ किया ॥ ३ ॥

परस्परपृष्टसमस्तवृत्तौ
यदाऽतिहृष्टाविह तावभूताम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदा तयोरन्यतमः प्रसङ्गा-
दनन्यभावादिदमेवमाह ॥ ४ ॥

आपस में कुशल पूँछने के अनंतर जब वे दोनों निवृत्त हुए तब उन दोनों में से एक ने प्रसंगवश इस प्रकार कहना आरंभ किया ॥ ४ ॥

किमस्ति राजन् ! भवतोऽद्य कृत्यं
प्रकाममित्यादिश यद्विधाय ।
सखित्वभारादनृणो भवेयं
स किं सखा नापदि यः सहायः ॥ ५ ॥

हे राजन् ! इस समय आप का प्रधान कर्तव्य क्या है ? कहिए उस को पूरा कर के मैं मित्र भार से मुक्त ऋण हो जाऊँ क्योंकि आपत्ति में साथ देना ही मित्र का धर्म है ॥ ५ ॥

भवानिदानीं समयस्य कर्ता
भवद्वशे सम्प्रति सर्वमेतत् ।
भवत्प्रसादाय वयं समेता
यथेष्टमाज्ञापय सर्वमस्मात् ॥ ६ ॥

आप इस समय के कर्ता हैं, सब कुछ आपके वश में है। आपकी प्रसन्नता के लिए हम उपस्थित हैं। आप यथेष्ट हमको आज्ञा दीजिए ॥६॥

इति प्रशस्तं समयानुकूलं
निपीय वाक्यं कलिरुत्कचित्तः ।
स्वकार्यसिद्ध्यै तमधर्ममेवं
जगाद सौहार्दरसानुविद्धः ॥ ७ ॥

इस प्रकार अधर्म की बात सुनकर प्रसन्न चित्त कलिदेव ने अपने कार्य की सिद्धि के लिए यह कहा ॥ ७ ॥

यदर्थमत्राहमुपागतोऽस्मि
प्रसङ्गतस्तत्समयानुकूलम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समस्तमप्यस्ति जगत्प्रसिद्धं
तथापि चित्ते कुरु तत्त्वमेतत् ॥ ८ ॥

हे मित्र ! जिस कार्य के लिए मैं यहाँ पर आया हुआ हूँ वह यद्यपि जगत्प्रसिद्ध है तथापि आप के समक्ष में मैं उसे कहता हूँ ध्यान देकर सुनिए ॥ ८ ॥

यथा ममास्ते परमः स वैरी
भुवस्तले सम्प्रति धर्मनामा।
तथैव मन्ये भवतोऽपि वैरी
शुचाऽवसन्नः स इति श्रुतं नः ॥ ६ ॥

धर्म जिस प्रकार मेरा परम शत्रु है उसी प्रकार आप का भी है, वह आज कल दुर्बल है, ऐसा सुना गया है ॥ ६ ॥

अयं नयो नीतिविदां प्रशस्तो
विपत्तिकाले यदरेर्बलेन।
विनाशनं सोऽयमुपस्थितोऽस्ति
सखेऽद्य कालः प्रधनानुकूलः ॥ १० ॥

नीतिज्ञों की यह नीति है कि दुर्बल शत्रु पर अचानक आक्रमण करना चाहिए इस कारण अब वह समय उपस्थित हो गया है जो इसके योग्य है ॥ १० ॥

अहं महानस्मि परं भवन्तं
विना सहायं विषमेऽत्र कृत्ये।
कदापि नैव प्रभवामि तेन
कुरुष्व सर्वं मम कार्यमेतत् ॥ ११ ॥

यद्यपि मैं आपसे बड़ा हूँ तथापि बिना आपकी सहायता के इस काम को नहीं कर सकता हूँ इसलिए आप हमको सहायता दीजिये ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अदो निपीय स्वगतं मुखेन
कलेः समस्तं हृदयस्य भावम् ।
प्रसन्नचित्तो बलवानधर्मः
स्वपोष्यवर्गं हृदयेन दध्यौ ॥ १२ ॥

इस प्रकार अपने अनुकूल कलिदेव का अभिप्राय समझ कर अधर्म ने प्रसन्नचित्त होकर अपने पोष्यवर्ग का स्मरण किया ॥ १२ ॥

निमेषमात्रेण स पोष्यवर्गः
स्मृतेःपरस्ताद्विनयावनम्रः ।
कलेरधर्मस्य च पार्श्वदेशे
प्रणम्य बद्धाञ्जलिरेत्य तस्थौ ॥ १३ ॥

स्मरण के अनन्तर क्षणमात्र में उपस्थित हुए उस पोष्यवर्ग ने दोनों को प्रणाम करके उनका दिया हुआ सम्मान ग्रहण किया ॥ १३ ॥

अनेकसम्मानविवृद्धभावो
महारथो मन्मथ एव तेषाम् ।
मदेन मध्ये तमधर्ममेवं
निजप्रभावं क्रमशो जगाद ॥ १४ ॥

अनेक प्रकार के सम्मान से सम्मानित होकर उनमें से प्रधान महारथी कामदेव ने अधर्म के प्रति अपना महत्त्व इस प्रकार कहा ॥ १४ ॥

रजोगुणान्मे प्रभवो जगत्यां
रजोगुणे सम्प्रति वासभूमिः ।
रजोगुणान्तेऽस्ति ममावसानं
रजःप्रधानं मम सर्वमेव ॥ १५ ॥

हे भगवन् ! रजोगुण से मेरी उत्पत्ति है। उसी के आश्रय से मैं रहता हूँ और उसके नष्ट होने पर मैं नष्ट हो जाता हूँ। इसलिए मेरा सभी व्यवहार रजोगुण प्रधान है ॥ १५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अणोरणीयान्महतो महीया-
ननिङ्गतो यो भुवि सर्व एव ।
वशे ममास्ते मनसि प्रविष्टः
समस्तभावेन तथाऽस्मि तेषाम् ॥ १६ ॥

छोटे से छोटा और बड़े से बड़ा जो संसार में जन्म लेता है वह मेरे वश में है और मैं उनके मन में ही सर्वदा रहता हूँ ॥ १६ ॥

मनो मदीयं भुवनोदरेऽस्मि
न्विलासयोग्यं निभृतं कुटीरम् ।
वदन्ति सर्वे मुनयो मनोजं
न योगिनो मां प्रभवन्ति रोद्धुम् ॥ १७ ॥

इस संसार में मन ही मेरा सुन्दर निवास स्थान है इसी लिए मेरा नाम मनोज है। मेरा वेग योगीजन भी नहीं रोक सकते हैं ॥ १७ ॥

अतिप्रचण्डः प्रभवामि यस्मि-
न्न तत्र विद्या न बलं न बुद्धिः ।
पलायते ज्ञानकथा निशम्य
ममाभिधानं मनुजस्य देहात् ॥ १८ ॥

जिस मनुष्य में मैं निवास करता हूँ उसमें विद्या, बल, बुद्धि कुछ भी नहीं रहती है। मेरा नाम सुनकर ज्ञानकथा भाग जाती है ॥ १८ ॥

वसन्तकालः परमः सखा मे
रतिर्मदीया प्रमदा मम स्वम् ।
विलासयोग्यं सकलं जगत्या-
मभेद्यदुर्गं वनिता वयःस्थाः ॥ १६ ॥

वसंत ऋतु मेरा मित्र है, रति मेरी प्राण-प्रिया है और जो जो जगत् में विलास का उपकरण है वही मेरी सम्पत्ति है तथा तरुणीजन मेरा अभेद्य दुर्ग है ॥ १६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धनुर्मदीयं कुसुमप्रधानं
जगत्प्रतिद्धा मम पञ्च बाणाः ।
प्रभावतो भूमितलेऽत्र येषां
जगत्समस्तं स्ववशे करोमि ॥ २० ॥

फूलों से बना हुआ धनुष मेरा शस्त्र है अरविंद-अशोक-आम्रमंजरी-नवमल्लिका तथा नीलकमल, वे पांच पुष्प ही मेरे बाण हैं जिनके प्रभाव से मैं सब जगत् को वश में करता हूँ ॥ २० ॥

किमस्ति यन्मे वशगं त्रिलोक्या-
न्न विद्यते यच्च न कर्तुमर्हम् ।
अशक्यमन्यैर्यदिह प्रकर्तुं
तदेव शक्यं भवतः प्रतापात् ॥ २१ ॥

त्रिलोकी में ऐसा कोई नहीं है जो मेरे वश में न हो। और योद्धा जिस काम को नहीं कर सकते हैं, मैं उसको विना प्रयास ही कर लेता हूँ ॥२१॥

इति प्रशस्तं मदनस्य वाक्यं
निपीय नानोद्धतभावबद्धम् ।
प्रसन्नचित्तः कलिरप्यमन्दं
जगाद धर्मावनतौ प्रवृत्तः ॥ २२ ॥

इस प्रकार कामदेव की बढ़ी चढ़ी बात सुनकर प्रसन्न चित्त कलिदेव ने कामदेव के प्रति इस प्रकार कहा ॥ २२ ॥

महारथस्त्वं बलिनां बलिष्ठो
मतोऽसि शक्तः सकलं विधातुम् ।
प्रसादतस्ते विनिपातयेयं
यथाऽऽशु धर्मं कुरु तत्समस्तम् ॥ २३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आप हमारे बड़े महारथी हैं, जिस प्रकार मैं धर्म को नष्ट कर सकूं, उस प्रकार आप मेरे कार्य में योग दीजिए ॥ २३ ॥

इतस्ततो भारतभूमिमध्ये
जवेन धर्मानुगतान्विलोक्य ।
प्रचण्डकामान् कुरु कामिनीनां
सतीत्वभङ्गं क्रमशो विधेहि ॥ २४ ॥

भारतवर्ष में सर्वत्र जा जाकर आप धर्मपरायणों को कामातुर बनावें और पतिव्रताओं का क्रमशः सतीत्व नष्ट करें ॥ २४ ॥

निपातयालं नरके मदेन
मदाज्ञया धार्मिकभावनद्धान् ।
विचूर्णयाशु प्रसभं मुनीनां
प्रशस्तगर्वं भुवनप्रतिष्ठम् ॥ २५ ॥

इन्द्रियों के दमन करनेवालों को नरक में भेजें और मुनियों के गर्व का पूर्णरूप से विध्वंस करें ॥ २५ ॥

प्रचारका ये निगमागमानां
भुवस्तले सन्ति ममाज्ञया तान् ।
मदेकभक्तान्कुरु यद्यदिष्टं
तवास्ति तत्तत्सकलं विधेहि ॥ २६ ॥

भूतल में धर्म के जो प्रचारक हैं, उनको मेरा भक्त बनावें और अपने मन की जो जो बाते हैं वे सब पूरी कर लें ॥ २६ ॥

इतिप्रमत्तस्य कलेरनुज्ञां
शिरस्यवस्थाप्य गते मनोजे ।
पदं समेत्यादरतस्तदीयं
महारथः क्रोध इदं जगाद ॥ २७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इस प्रकार कलिदेव की आज्ञा लेकर कामदेव जब चले तब उनके स्थान पर आकर क्रोध ने अपना कथन इस प्रकार आरंभ किया ॥ २७ ॥

तमोगुणान्मे प्रभवो जगत्यां
तमोगुणे सम्प्रति वासभूमिः ।
तमोगुणान्तेऽस्ति ममावसानं
तमःप्रधानं मम सर्वमेव ॥ २८ ॥

मेरा जन्म तमोगुण से है, उसी के अवलंब से मैं रहता हूँ। तमोगुण के अंत होने पर मेरा भी अन्त होता है। इस कारण मेरा सब कुछ तमोगुण प्रधान है ॥ २८ ॥

तमोगुणस्याधिकता मनुष्ये
यदा भवत्यादरतस्तदाऽहम् ।
वसामि तस्मिन्विनिपात्य धर्मं
वदन्त्यतो मां मुनयः प्रचण्डम् ॥ २९ ॥

मनुष्य में जब तमोगुण बढ़ता है तब मैं उसमें प्रविष्ट हो कर धर्म से उसको गिराता हूँ। इसीलिए मुझको प्रचंड कहते हैं ॥ २९ ॥

वसामि यन्मानसमेत्य लोके
न तस्य मित्राणि समुद्भवन्ति ।
क्व धर्मचर्चा सविधेऽपि तस्य
मम प्रभावो हृदयेऽस्ति यस्य ॥ ३० ॥

जिसके हृदय में निवास करता हूँ उसका कोई संसार में मित्र नहीं रहता है, और धर्म की बात तो उसके पास तक नहीं फटकती है ॥३०॥

पिता स्वपुत्रेण समं विवादं
मम प्रभावाद्वितनोति लोके ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जवेन विद्वेष्टि पतिं ममैव
कृपातिरेकादबलापि जाया ॥ ३१ ॥

मेरे आवेश के कारण पिता पुत्र के साथ विवाद करने लगता है, और क्या ? अबला स्त्री भी अपने पति से लड़ने के लिए सबला बन जाती है ॥ ३१ ॥

प्रचण्डविद्वेषकथानुरागी
परस्परायोधनबद्धभावः ।
पदे पदे वैरविवादचर्चो
ममातिभक्तो भवति प्रमत्तः ॥ ३२ ॥

मेरा प्रेमी सबसे सर्वदा अकारण वैर बढ़ाता है, आपस में एक दूसरे को लड़ाता है और सब के साथ अकड़ कर बात करता है ॥ ३२ ॥

महत्त्वमेतद्भुवनप्रसिद्धं
निशम्य नाम्नःसदृशञ्च रूपम् ।
निजेष्टसम्पादनशक्तिजुष्टं
कलिस्तमेकान्तमिदं जगाद ॥ ३३ ॥

इस प्रकार अपना सच्चा महत्त्व और नामानुकूल रूप दिखा कर जब क्रोध चुप हुआ, तब उसके प्रति कलिदेव ने यह कहा ॥ ३३ ॥

भवेद्यथाऽधःपतनं जगत्या-
मसंशयं धर्मपथाज्जनानाम् ।
तथा विधेयं भवताऽपि कृत्यं
यदस्ति नाम्नःसदृशं तदन्यत् ॥ ३४ ॥

धर्म मार्ग से मनुष्य जिस प्रकार गिरें उस प्रकार आप संसार में काम करें और अपने नाम के अनुरूप जो कुछ आपकी समझ में आवे वह भी करें ॥ ३४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतस्ततो ये विचरन्ति मन्दाः
क्षमामधिस्थापयितुं क्षमायाम् ।
ममाधिपत्ये भवता न तेषां
कथञ्चिदागःक्षमनं विधेयम् ॥ ३५ ॥

जो सज्जन भूतल में क्षमा का प्रचार करते हैं, उनका अपराध आप कदापि क्षमा न करें। उनको अवश्य दण्ड दें ॥ ३५ ॥

इमामनुज्ञां हृदये निधाय
विनिर्गते क्रोधमहारथेऽपि ।
पदे तदीये पदमादरेन
निधाय लोभस्तमिदं जगाद ॥ ३६ ॥

कलिदेव की इस आज्ञा को हृदय में रखकर जब क्रोध गया, तब उसके पद पर आकर लोभ इस प्रकार कहने लगा ॥ ३६ ॥

वदन्ति मां लोभमनेकरूपं
पदे पदे मां धनिनो भजन्ति ।
न भुञ्जते मच्चरणानुरक्ताः
कदापि भोज्यं सघृतं समिष्टम् ॥ ३७ ॥

मेरा नाम लोभ है। मैं अनेक रूपों में रहता हूँ। धनीजन मेरी सर्वदा आराधना करते हैं और मेरे सेवक अच्छा भोजन बहुत कम खाते हैं ॥ ३७ ॥

मम प्रसादाद्धनिनां गृहेषु
भवत्यसङ्ख्यं धनमेकदैव ।
विलीयते दानकथा कथायां
कदापि केनापि जनेन गीता ॥ ३८ ॥

मेरी दया से धनियों के घरों में अनंत धन भूमि में गड़ा रहता है और दान की बात तो कभी कभी वचन में ही आती है क्रिया में नहीं ॥ ३८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सदा मम द्वेषभुवस्त एव
सरस्वतीं येऽनुदिनं भजन्ति ।
मदेकभक्ता भुवि ते मनुष्या
दिवान्धपत्रा हृदयेऽस्ति येषाम् ।। ३६ ।।

जो सर्वदा सरस्वती की उपासना करते हैं, वे मेरे अनन्य शत्रु हैं और जिनके हृदय में लक्ष्मी की उपासना रहती है वही मेरे परम मित्र होते हैं ॥ ३६ ॥

अतिप्रसन्नः प्रभवामि यस्मि-
न्त्स कन्यकाविक्रयमातनोति ।
दरिद्रमेकत्र निधाय कोणे
वराटकैस्तत्पणनं विधत्ते ।। ४० ।।

मैं जिस पर अत्यंत प्रसन्न होता हूँ वह अपनी पुत्री तक को भी बेचने में संकोच नहीं करता है और घर का दरिद्र तक एकत्र कर दो चार कौड़ियों में उसे बेच लेता है ॥ ४० ॥

घृते निमग्नां करुणापरत्वा-
त्स मक्षिकां वीक्ष्य दिवा न भुङ्क्ते ।
निपीड्य तास्तद्घृतमेकपात्रे
निधाय रात्रावशनं करोति ।। ४१ ।।

दिन में यदि घृत में एक भी मक्षिका पड़ जाय तो दया दिखाने के लिए भोजन नहीं करता है, परन्तु रात्रि में उन सब को ही निचोड़ कर जो घी निकलता है उसी से भोजन कर लेता है ॥ ४१ ॥

निपीय लोभस्य महत्त्वमेत-
त्तथाविधं कार्यमपि प्रदाय ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थिते कलौ तत्र गते तदीयं

पदं समागत्य जगाद मोहः ॥ ४२ ॥

इस प्रकार लोभ का महत्त्व सुनकर कलिदेव ने उसके अनुरूप ही कार्य बता कर उसे विदा किया । उसके जाते ही उस पद पर आकर मोह ने अपना कथन इस प्रकार आरम्भ किया ॥ ४२ ॥

इदं शृणुष्वावहितो जगत्यां

न विद्यते कोऽपि मया समानः ।

सुखेन सर्वत्र वसामि तत्र

न यत्र वैराग्यकथा समेति ॥ ४३ ॥

संसार में मेरे समान अन्य कोई नहीं है । जहाँ पर वैराग्य की चर्चा नहीं होती है वहाँ पर मैं आनन्द से रहता हूँ ॥ ४३ ॥

मम प्रतापादिह वीतरागा

भवन्ति सर्वे बहुरागवन्तः ।

प्रचण्डविज्ञानकथानुरक्ता

मुखानि पश्यन्ति वधूजनानाम् ॥ ४४ ॥

मेरे प्रताप से बड़े बड़े वीतराग, रागरंग में फंस जाते हैं । जो दिन भर वेदान्त की चर्चा करते हैं वे भी रात्रि को स्त्रियों का सत्संग करते हैं ॥ ४४ ॥

ममातिरेकाद्वनवासिनस्ते

पतत्रिणः पान्ति निजाण्डजातान् ।

ममैव पाशे पतिताः स्वबाला-

नवन्ति सर्वे गृहमेधिनोऽपि ॥ ४५ ॥

मेरे प्रभाव से वन में रहने वाले पक्षिगण भी अपनी अपनी चोंच में दाना लेकर अपने अपने बच्चों को पालते हैं । गृहस्थजन मेरे प्रभाव से ही अपने पोष्यवर्ग की रक्षा करते हैं ॥ ४५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदं निवेद्य स्वगतं महत्त्वं
कलेरनुज्ञामधिगत्य मोहे ।
गते तदीयं पदमेत्य भीमो
जगाद मृत्युः स्वविचेष्टितानि ॥ ४६ ॥

इस प्रकार अपना महत्त्व कह कर कलिदेव के शासन से मोह जब चला गया तब उसके स्थान पर आकर मृत्यु ने अपना कथन इस प्रकार आरम्भ किया ॥ ४६ ॥

अहं जवादन्तकरो जनानां
जगन्ति जानन्ति मम प्रभावम् ।
जनिङ्गताः के न भवन्ति लोके
ममान्तकाले शरणं प्रपन्नाः ॥ ४७ ॥

मैं जन्म लेनेवालों का अन्तक हूँ । मेरा प्रभाव जगत् जानता है। जन्म लेने पर मेरे शरण में आये बिना कौन रह सकता है ॥ ४७ ॥

जपन्ति मृत्युञ्जयनाम दिव्यं
भजन्ति ये श्रीपतिमादरेण ।
विहाय तानत्र समस्तजीवा-
नहं स्वपाशे विनिबन्धयामि ॥ ४८ ॥

जो सज्जन मृत्युंजय भगवान् शंकर का तथा भगवान् लक्ष्मीपति का नाम लेते हैं वेही मेरे पास नहीं आते हैं। बाकी सब मेरे पाश में फंस जाते हैं ॥ ४८ ॥

नभोविभागेषु ममाधिपत्यं
जलोदरेऽप्यस्ति मम स्वराज्यम् ।
भुवस्तले विद्यत एव तस्मा-
दहं त्रिलोकी पतिरस्मि मृत्युः ॥ ४९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेरा आकाश में, पाताल में तथा भूमंडल में सर्वत्र आधिपत्य है। इसीलिए मैं त्रिलोकी का स्वामी हूँ ॥ ४६ ॥

सदालसत्वेन समावृतानि
भवन्ति येषाममलमिन्द्रियाणि ।
ममैव ते पारणमत्र लोके
भवन्ति भूभारनवावताराः ॥ ५० ॥

जो इन्द्रिय लोलुप सर्वदा आलस्य से घिरे हुए रहते हैं वे पृथिवी के भारभूत महानुभाव मेरे द्वारा को अतिथि बनते हैं ॥ ५० ॥

अमेध्यमाचारविचारशून्यं
भुवस्तले भोजनमस्ति येषाम् ।
मदर्थमेवात्र महेश्वरेण
निवेशितास्ते करुणापरेण ॥ ५१ ॥

जो मनुष्य अन्न दोष का विचार न कर के अमेध्य पदार्थ का सेवन करते हैं वे बार बार संसार में जन्म लेकर मेरे पाश में फंसते हैं ॥ ५१ ॥

महत्त्वमेतज्जगति प्रसिद्धं
निवेद्य तस्मै कलये तदाज्ञाम् ।
अवाप्य याते पदमस्य मृत्यौ
समेत्य गर्वस्तमिदं जगाद ॥ ५ ॥

इस प्रकार जगत् में प्रसिद्ध अपना महत्त्व कहकर कलिदेव की आज्ञा से अन्यत्र गए हुए मृत्यु के पद पर आकर अहंकार ने अपना कथन आरंभ किया ॥ ५२ ॥

जगत्यहङ्कारपदेन सर्वे
वदन्ति मां बुद्धिविनाशहेतुम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नितान्तमज्ञानमयं कुटीरं
समेत्य निःशंकमहं वसामि ॥ ५३ ॥

संसार में मेरा नाम अहंकार है। मैं बुद्धि का नाश करनेवाला हूँ। घोरतर अज्ञान ही मेरे लिए उत्तम निवास स्थान है जहाँ पर मैं रहता हूँ ॥ ५३ ॥

न विज्ञमेकान्तमहं व्रजामि
नचाज्ञमेवातितरां श्रयामि।
सुखेन किञ्चिज्ज्ञसमाश्रयेण
जगत्यहं कालमलं नयामि ॥ ५४ ॥

मैं विद्वान् के पास नहीं रहता हूँ, और न सर्वथा मूढ़ के समीप रहता हूँ। मेरा निवास प्रायः ज्ञानलव दुर्विदग्धों के पास रहता है। ५४ ॥

अविद्यया मे परमाऽस्ति मैत्री
सहैव वासोऽपि तयैव नूनम्।
प्रसिद्धदम्भः प्रथितोऽनुजो मे
न विश्रुतः किं भवता जगत्याम् ॥ ५५ ॥

अविद्या के साथ मेरी बड़ी मित्रता है। प्रायः मैं उसी के साथ रहता हूँ। जगत् में प्रसिद्ध दंभ नामक मेरा छोटा भाई है ॥ ५५ ॥

विशामि यस्योद्धतमानवस्य
हृदन्तरं सत्वरमत्र लोके
स पूर्वजातान्निगमप्रवीणा-
नवज्ञया निन्दति नष्टबुद्धिः ॥ ५६ ॥

जिस उद्धत मनुष्य के हृदय में मैं प्रवेश करता हूँ वह पूर्व पुरुषों की अवहेलना करता है ॥ ५६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदन्निशम्यास्य वचः समृद्धं
प्रसन्नचित्तःकलिरेकदैव
अमंस्त सर्वं जगदेव वेगा-
जितं प्रसादात्सुहृदो यथावत् ॥ ५७ ॥

अहंकार की यह बात सुनकर कलिदेव ने समस्त संसार का विजय करना एक साधारण सा कार्य समझ लिया ॥ ५७ ॥

इति कलियुगवृत्तं यन्मयाऽलं समुक्तं
प्रतिपदमिह लोके दृश्यते तद्विभक्तम् ।
निगमगदितधर्मस्तत्प्रतिद्वन्द्विंतायै
भवतु भुवनमध्ये शक्तिशाली विशालः ॥५८॥

मैंने यह जो कलियुग का वृत्तांत कहा है वह संसार में प्रत्यक्ष दीख रहा है । सनातन वैदिक धर्म उसके जीतने के लिए शक्तिशाली हो यही हमारी जगदीश्वर से प्रार्थना है ॥ ५८ ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये
प्रतिद्वन्द्विदलवर्णनं नाम षष्ठः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सप्तमः सर्गः

उदितं भारतमध्ये कलियुगमेकान्तमुन्नतं वीक्ष्य ।
क्रमशोऽवतरणमासीदनुपदमंशावताराणाम् ॥ १ ॥
अवतीर्णानवनीतलमध्ये वेगेन पारवश्येन ।
दैवस्यायमधर्मस्तानभितुष्टाव मानसैः पद्यैः ॥ २ ॥

भारतवर्ष में कलियुग को आया हुआ देखकर उसके अंशावतारों ने भी अवतार लिया ॥ १ ॥ दैव की दया से उनको भारत में आया हुआ सुन कर अधर्म ने उनको इस प्रकार कहा ॥ २ ॥

स्वागतमस्तु जगत्यां भवतां भूभारभूतये भूयः ।
कलियुगमनुजातानां धर्माभासप्रपञ्चनिपुणानाम् ॥ ३ ॥
भवदागमनमनोज्ञः पुण्याहोऽयं मदाय मनुजानाम् ।
भूयादनुपदमस्मिन्भारतवर्षे विशेषरूपेण ॥ ४ ॥

धर्म के खंडन में तथा पापमंडन में चतुर आप जैसे पुण्यजनों का भारत में स्वागत है ॥ ३ ॥ आप के आने से अत्यंत सुन्दर यह आज का दिन भारत में मनुष्यों के लिए आनन्ददायक हो ॥ ४ ॥

भवदवतरणसमुत्थप्रमदप्राधान्यहर्षितस्वान्तः ।
प्रतिपदमतिशयवृद्धिं ध्यायं ध्यायं भवद्गतिं धत्ते ॥ ५ ॥
सामयिकः स महात्मा तस्यैवेदं जगत्त्रये राज्यम् ।
तस्यामात्यपदेऽहं संविष्टोऽरं भवद्गृहं प्राप्तः ॥ ६ ॥

आपके पधारने से अत्यंत प्रसन्न कलियुगजी महाराज प्रतिदिन आपका अभ्युदय चाहते हैं ॥ ५ ॥ इस समय के वे प्रधान नेता हैं । उनकी ही त्रिलोकी में राज्य है, उनके अमात्य पद पर विद्यमान मैं आपके पास इस समय आया हूँ ॥६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मङ्गलमयवचनानां भूयोभूयः स मन्मुखेनाद्य।
सन्ततिमतिशयतुष्टः प्रदिशति धर्मापनादनप्राणाम् ॥७॥
अंशावतारभूता यूयं तस्याद्य शासनं प्राप्य।
शाला इव वनमध्ये परिणाहं यात भूतलेऽविरतम् ॥८॥

उन्होंने मेरे द्वारा आप लोगों के प्रति अनेक मंगलमय स्वस्तिवाद उपस्थित किये हैं ॥ ७ ॥ आप उनके अँश स्वरूप हैं, इसलिए उनका शासन प्राप्त कर के प्रतिदिन उन्नति को प्राप्त कीजिए ॥ ८ ॥

आयातो भवदन्तिकमभिनवभूत्यै भुवस्तले भवताम्।
आत्यन्तिकमभिधातुं सन्देशं स्वस्य भूपतेः प्रथितम् ॥९॥
लोकत्रयेऽपि भवतां विस्तारं यातु कीर्तिरत्यन्तम्।
प्रभवतु भारतमध्ये साम्राज्यं सार्वभौमन्तत् ॥१०॥

मैं आपके पास आपकी कीर्ति को संसार में फैलाने के लिए और अपने महाराज का संदेश सुनाने के लिए आया हूँ ॥ ९ ॥ ईश्वर करे, आप की कीर्ति का सर्वत्र विस्तार हो और भारत में आपका सार्वभौम साम्राज्य हो ॥ १० ॥

इत्थमभिष्टुतवृत्तः सर्वोऽप्यंशावतारसमुदायः।
चरमे शशीव पक्षे परमां वृद्धिं यथाक्रमं प्रापत् ॥११॥
कामाद्योऽपि सर्वे भूपस्यांशावतारमाकर्ण्य।
ननृतुर्जहसुः पेतुः परतो भूमौ मदावलेपेन ॥१२॥

इस प्रकार कलिदेव का आशीर्वाद पाकर कलि के सब अंशावतार शुक्लपक्ष में चन्द्रमा की तरह वृद्धि को प्राप्त हुए ॥ ११ ॥ कलिदेव के अंशावतारों को सुन कर काम-क्रोध-लोभ-मोह आदि उनके परिवारक भी आनन्द से नृत्य करने लगे ॥ १२ ॥

अथ शौद्धोदनिरस्मिन्भारतवर्षे समुत्थितिं प्राप्य।
निजमतविषयविचारं चक्रे साम्राज्यसम्मदाविष्टः ॥१३॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अकथयदित्त्थमुदग्रः किं वेदे ब्राह्मणैः प्रथिते ।
वेविद्यते महत्त्वं यस्याशंसा पदे पदे क्रियते ॥१४॥

इसके अनन्तर बुद्ध ने भारत में राज्यमद को प्राप्त होकर अपने मत के प्रचार के लिए अपने हृदय का भाव इस प्रकार कहना आरम्भ किया ॥ १३ ॥ ब्राह्मणों ने जिन वेदों की रचना की है और जिनकी मनुष्य बार बार प्रशंसा करते हैं उनका महत्त्व ही क्या है ? ॥ १४ ॥

आजीविकार्थमेते वेदाः सर्वत्र भूसुरैरेव ।
सम्पाद्य भूमिभागे वृद्धिन्नीताः प्रमाणसद्भावैः ॥१५॥
सामान्यं यदि लोके मानुष्यं तर्हि भूसुरेष्वेव ।
किमधिकमस्ति महत्त्वं यादृक्सर्वे तथैव ते मनुजाः ॥१६॥

अपनी आजीविका के लिए ब्राह्मणों ने इनका संपादन किया है और स्वयं ही इनको सर्वत्र प्रसिद्ध कर के इनका महत्त्व स्थापित किया है ॥ १५ ॥ संसार में जब मनुष्य जाति एक है तब ब्राह्मणों में और चांडालों में क्या अन्तर है । जैसे चांडाल हैं वैसे ही ब्राह्मण हैं ॥१६॥

नानाविधपशुहिंसा येषु प्रोक्ताऽस्ति यज्ञभेदेन ।
मान्यास्ते किं वेदाः किंवा मान्यास्तदेककर्तारः ॥१७॥
शतपथपञ्चमकाण्डे येषां चर्चाऽस्ति पूर्णरूपेण ।
प्राजापत्यादिमखा नालं बौद्धैः कदापि मन्तव्याः ॥१८॥

यज्ञभेद से जिनमें अनेक प्रकार के पशुओं की हिंसा कही गई है, वे वेद मानने योग्य नहीं हैं और न उनके संपादक ही अच्छे माने जा सकते हैं ॥ १७ ॥ शतपथ ब्राह्मण के पंचम कांड में जिन प्राजापत्य आदि यज्ञों का उल्लेख हैं, उनको मेरे राज्य में किसी को नहीं मानना चाहिए ॥ १८ ॥

शब्दप्रमाणसिद्धं नैसर्गिकमस्ति यन्मतं लोके ।
तर्कप्रधानपक्षैर्नादर्तव्यं कदापि तद्बौद्धैः ॥१९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैदिकधर्मविरुद्धं संस्थाप्येदं मतं स बुद्धोऽपि ।
श्रावकगणधृतपक्षो विपक्षतामाप तद्विरुद्धानाम् ॥२०॥

शब्दप्रमाणों के आधार पर जो सनातन धर्म लोक में प्रचलित है, उसको केवल तर्कवादी बौद्धों को नहीं मानना चाहिए ॥ १९ ॥ वैदिक धर्म के विरुद्ध इस प्रकार बौद्धमत को स्थापित करके बुद्ध ने नास्तिकों को बढ़ा कर आस्तिकों का दमन किया ॥ २० ॥

ये तन्मतं समेतास्तस्मिन्काले सपक्षभावेन ।
ते रक्षितास्ततोऽन्ये विनाशितास्तेन सर्वतोभावैः ॥२१॥
भूसुरवंशविनाशे धृतव्रतोऽयं विशेषरूपेण ।
मायादेवीतनयो नास्तिकतायाः समर्थनं चक्रे ॥२२॥

उसके राज्य में जो उसके अनुगामी थे उनका तो उसने पालन किया और जो उसके विरुद्ध थे उनका उसने सर्वस्व नष्ट कर दिया ॥ २१ ॥ ब्राह्मणों के विनाश में बद्ध-परिकर इस मायादेवी के पुत्र ने सर्वत्र नास्तिकता का प्रचार किया ॥ २२ ॥

हृदयस्थितनिगमानामग्निष्टोमादियज्ञनिरतानाम् ।
मनुजानां बुधराज्ये जाता का का न दुर्दशा दैवात् ॥२३॥
गिरिगह्वरमुपयाताः केचिद्विप्रा विहाय तद्राज्यम् ।
नष्टाः केऽपि विनष्टाः पिष्टाः कष्टेन केचिदवशिष्टाः ॥२४॥

जिन ब्राह्मणों ने वेदों को कंठस्थ करके उस समय में वेदों की रक्षा की उनका उसने हर प्रकार से दमन किया ॥ २३ ॥ उस समय में कोई ब्राह्मण उसके राज्य को छोड़ कर पर्वतों में चले गये कोई वेदों की रक्षा करते करते मर गये । रहे सहे उसने देशांतरित कर दिये ॥ २४ ॥

गतवति तस्मिन्समये भारतमध्ये तदुत्तरं प्रथितम् ।
चार्वाकस्यापि मतं यत्रेश्वरवादमर्दनं समभूत् ॥२५॥
अवददयं मदमत्तः सद्भावे किं प्रमाणमीशस्य ।
जगदिदमीदृशमास्ते धारारूपेण यत्स्वयं नित्यम् ॥२६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बौद्ध राज्य के अनंतर भारत में चार्वाक मत प्रचलित हुआ जिस में ईश्वर के अस्तित्व पर ही अनेक प्रकार की आशंकायें उत्पन्न होने लगीं ॥ २५ ॥ मदोद्धत उस चार्वाक ने अपने समय में इस प्रकार कहा कि ईश्वर के सद्भाव में प्रमाण ही क्या है ? संसार तो अनादि काल से प्रवाह-वत् चला आ रहा है ॥ २६ ॥

द्रव्यद्वयसङ्गमनाद्यथा तृतीयं प्रजायते द्रव्यम् ।
भूतानामपि तद्वद्योगायोगादिदं जगत्सकलम् ॥२७॥
न ज्ञानमक्षजं तद्विनिश्चयेऽलम्प्रमाणमितरत्र ।
तस्यातीन्द्रियवत्त्वादग्राह्यत्वं जगत्त्रये प्रथितम् ॥२८॥

दो द्रव्यों के मिलने से जिस प्रकार तीसरा द्रव्य बनता है उसी प्रकार पंचमहाभूतों के योग से सब जगत् उत्पन्न होता है ॥ २७ ॥ प्रत्यक्ष प्रमाण से ईश्वर का सद्भाव सिद्ध नहीं होता है क्योंकि वह अतीन्द्रिय है [ इन्द्रियजन्यं ज्ञानं प्रत्यक्षम् ] ॥ २८ ॥

अनुमितिरपि तद्विषया न विद्यते क्वापि तद्विधग्रहणे ।
प्रत्यक्षपूर्वकत्वात्तस्याः सर्वत्र दृश्यते विषयः ॥२९॥
उपमानमप्यपास्तं तद्विषयज्ञैस्तथाविधे विषये ।
अनुपमवादश्रवणादलौकिकत्वादनीदृशत्वाच्च ॥३०॥

अनुमान से भी ईश्वर सिद्ध नहीं हो सकता है क्योंकि अनुमान सर्वदा प्रत्यक्षपूर्वक ही होता है । [ तत्पूर्वकं त्रिविधमनुमानम् ] ॥ २९ ॥ उपमान ईश्वर में घट नहीं सकता है क्योंकि वह निरुपम है, साथ ही अलौकिक तथा अनिर्वचनीय है । [ उपमितिकरणमुपमानम् ] ॥ ३० ॥

शब्दप्रमाणगोचरमसम्भवं तस्य वर्तनं लोके ।
शब्दान्तरसाध्यत्वाच्छब्दानाञ्चापि वर्णजन्यत्वात् ॥३१॥
वर्णैः पदानि लोके सम्पाद्यन्ते पदैश्च तद्वाक्यम् ।
वाक्यैर्मन्त्रकदम्बाः कृतकत्वं केन हन्यते तेषाम् ॥३२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्द प्रमाण भी उसके अस्तित्व में साधन नहीं है। क्योंकि वर्ण-जन्य होने के कारण शब्द भी स्वतः सिद्ध नहीं है। ॥ ३१ ॥ लोक में वर्णों से पद बनते हैं। पदों से वाक्य बनता है। वाक्यों से मंत्र बनते हैं। इस कारण मंत्र भी कृतक होने के कारण अनित्य हैं ॥ ३२ ॥

कृतकं यत्तदनित्यं विज्ञैरेतद्विचार्यते नित्यम्।
विधिमयवचनमनित्यं तस्मादस्मिन्न संशयः कश्चित् ॥३३॥
यदनित्यं तन्नित्यं नार्हम्भवितुं कदापि भूलोके।
प्रामाण्यं कथमस्मादनित्यभावेन विद्यमानानाम् ॥३४॥

जो कृतक है वह सब अनित्य है, यह विद्वानों का सिद्धांत है। इस लिए विधिवाक्य सभी अनित्य हैं [ यद्यत्कृतकं तत्तदनित्यम् ] ॥ ३३ ॥ जो अनित्य है वह कदापि नित्य नहीं माना जा सकता है, इसलिए अनित्य वेदों की नित्यता सर्वांश में असाध्य है। [ वेदा अप्रमाणं कृतकत्वात् ] ॥ ३४ ॥

जगदीश्वरनिःश्वसितं वेदा इत्येष भूतले वादः।
जगदीश्वरसद्भावे तदभावे कुत्र तद्विनिःश्वसितम् ॥३५॥
वाय्वादित्याङ्गिरसामृषित्वमादिश्य मन्त्रसङ्कलनम्।
उन्मत्तानां प्रलपितमेवंविधयोगदर्शनाभावात् ॥३६॥

वेद ईश्वर के निःश्वासरूप हैं, यह बात भी तभी सिद्ध हो सकती है जब पहले ईश्वर सिद्ध हो। ईश्वर के अभाव में उसका निःश्वसित असंभव है ॥ ३५ ॥ वायु आदित्य आदि को ऋषि मान कर उनके द्वारा वेदों का प्रकट होना केवल असिद्ध साधन मात्र है क्योंकि इसमें कोई प्रमाण नहीं है ॥ ३६ ॥

इत्यादिश्य मनुष्यानविरतमज्ञानवारिधौ मग्नान्।
मतमस्थापयदित्थं चार्वाकोऽयं कलेर्द्वितीयांशः ॥३७॥
अथ दैवदुर्विपाकाद्भारतमध्ये बृहस्पतिः कोऽपि।
निजमतविस्तृतिमेवं चक्रे नास्तिक्यवासनानुगतः ॥३८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इस प्रकार अपने समय के मनुष्यों को अपना मत समझा कर कलि के दूसरे अंशावतार ने भी अपना मत स्थापित कर दिया ॥ ३७ ॥ इसके अनंतर भारत में दैव के दुर्विपाक से कलियुग के तृतीयावतार बृहस्पति ने अपना मत स्थापित करने के लिए इस प्रकार कथन आरंभ किया ॥ ३८ ॥

अपरिमितं जगदीशं मत्वाऽप्यज्ञैस्तदीयविज्ञानम् ।
यैर्वेदमात्रमाप्तं भारतभूमौ कथन्न ते पशवः ॥३९॥
आकाशमण्डलस्थो वातव्रातः पयोधरं सूते ।
विज्ञानसिद्धमेतत्किमग्निहोत्रेण साध्यते तत्र ॥४०॥

जो लोग ईश्वर को अपरिमित मान कर भी उसके ज्ञान रूप वेद को परिमित मानते हैं वे क्यों न पशुतुल्य माने जायँ ? ॥ ३९ ॥ आकाश में विद्यमान वायुमंडल मेघों को उत्पन्न करता है यह बात विज्ञानसिद्ध है, फिर यज्ञ का क्या प्रयोजन है ? [ एतेन यज्ञाद्भवति पर्जन्य इत्यपास्तम् ] ॥ ४० ॥

यद्यग्निहोत्रमात्रं वर्षामात्रं प्रति प्रधानं स्यात् ।
याज्ञिककेदारगतं शस्यं कस्माद्विशोषमायाति ॥४१॥
लोकान्तरप्रवादो धूर्तैरस्मिन्भुवस्तले न्यस्तः ।
किन्तेन लोकवञ्चनपटीयसाऽनेकशोकमलिनेन ॥४२॥

यदि यज्ञ के द्वारा ही वर्षा का होना माना जावे तो याज्ञिकों के क्षेत्रों में जो अन्न है वह वर्षा के बिना क्यों सूख जाता है ? ॥ ४१ ॥ लोकांतर को मान कर उसमें जाना भी केवल कल्पनामात्र है । क्योंकि इस लोकवञ्चक सिद्धांत में कुछ तत्त्व नहीं है ॥ ४२ ॥

जन्मान्तरफलचिन्ता व्यर्थैवालं भुवस्तले न्यस्ता ।
परलोकदानचर्चा तस्मात्केनापि नैव कर्तव्या ॥४३॥
वह्नौ यद्बहुदग्धं प्रत्यक्षं तच्छरीरमितरत्र ।
यातीति यः प्रवादः प्रमाणशून्यः प्रमाद एवायम् ॥४४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यहाँ पर दिया हुआ हमको दूसरे जन्म में मिलेगा यह बात भी प्रमाणशून्य है, इसलिए दान देना व्यर्थ है ॥ ४३ ॥ प्रत्यक्ष में जो शरीर अग्नि में जल गया है वह लोकांतर में पहुँचेगा यह प्रमाणशून्य वाद केवल प्रमादमात्र है ॥ ४४ ॥

लोकान्तरं यथेच्छं प्रयाति भोज्यं यदीतरैर्भुक्तम् ।
नगरान्तरं गतानां करोति तृप्तिं कुतो न मनुजानाम् ॥४५॥
नैवास्ति पितृलोको नो यमलोको न निर्जरालोकः ।
नो लोकान्तरगमनं प्रमाणसिद्धं मृषैव तज्जल्पः ॥४६॥

दूसरों का खाया हुआ भोज्य द्रव्य यदि लोकांतर में पहुँच जाता है तो दूसरे नगर में पहुँचे हुए मनुष्यों को क्यों नहीं मिलता है ? ॥ ४५ ॥ इस संसार में न पितृलोक है, न यमलोक है, न स्वर्ग है, न अपवर्ग है। इसलिए इनका मानना भी केवल अपनी मूर्खता का परिचय देना है ॥ ४६ ॥

यो लोकान्तरमादौ गत्वाऽऽगच्छेद्भुवस्तले जीवन् ।
स करोतु पितृकार्यं तदन्यथा तत्र निश्चयोऽपार्थः ॥४७॥
इति नानाविधितर्कप्रधानवादो बृहस्पतिः स्वीयम् ।
विशदं बार्हस्पत्यं निदर्शयामास नास्तिकेष्ववरः ॥ ४८॥

जो मनुष्य पहिले लोकांतर जाकर फिर यहाँ आवे उसको श्राद्ध करना चाहिए अन्यथा ये बातें व्यर्थ हैं ॥ ४७ ॥ इस प्रकार अनेक तर्कों द्वारा भारत में अपना मत स्थापित करके कलि का तृतीयावतार बृहस्पति भी यशोऽवशिष्ट हो गया ॥ ४८ ॥

अस्मादाविरभूत्परसुद्धतवृत्तः कलौ दयानन्दः ।
यो भारतोदरस्थान्नास्तिकवर्यानवर्धयन्मन्दः ॥४९॥
प्राज्ञम्मन्योऽप्ययमपि कलियुगमासाद्य विस्तृतं चेत्रम् ।
अवतारादिविनिन्दनमेवंविधिना यथाक्रमं चक्रे ॥५०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उसके अनन्तर कलि के चतुर्थ अंशावतार दयानंद भी प्रकट हुए। जिन्होंने आर्यसमाज के नाम से नास्तिकमंडल स्थापित करके नास्तिकों को खूब बढ़ाया ॥४६॥ पंडितंमन्य इस दयानंद ने भी कलियुग में अपना अवसर देखकर इन शब्दों में अपना मत प्रकट किया ॥ ५० ॥

यः सर्वशक्तिमत्त्वं स्वात्मन्याधाय लीलया विश्वम् ।
सम्पादयति किमर्थं सोऽवतरत्यत्र कारणं मृग्यम् ॥५१॥
योऽवतरति जनभूत्यै विश्वव्यापी कथं स सम्भवति ।
विश्वव्यापी यदि तद् गतं तदुद्भूतिकल्पनाभासैः ॥५२॥

जो सर्वशक्तिमान् है, और जो अपने में सब का धारण कर सकता है वह बिना प्रयोजन के अवतार क्यों लेता है? ॥५१॥ संसार के उद्धारार्थ जो बार बार अवतार लेता है वह सर्वव्यापक कैसा? यदि वह सर्वव्यापक है तो अवतार कैसे बन सकता है? ॥ ५२ ॥

मूर्तावीश्वरबुद्धिर्मन्दानां कुत्र चिन्मयः पुरुषः ।
चिच्छून्या क्व च मूर्तिर्महदान्तर्यं द्वयोरिदं मध्ये ॥५३॥
जैनैर्बुद्धैर्मान्याद्भूमितले मूर्तिपूजनं प्रथितम् ।
आर्षे दर्शनमार्गे न विद्यते तस्य वर्णनावसरः ॥५४॥

मूर्ति में ईश्वर मानना बड़ी मूर्खता का काम है क्योंकि मूर्ति जड़ है, ईश्वर चेतन है। इन दोनों में बड़ा अन्तर है ॥ ५३ ॥ जैनों ने अपनी मूर्खता से इस अवतारवाद को चलाया है। प्राचीन ग्रंथों में इसका कहीं पर वर्णन नहीं है ॥ ५४ ॥

गङ्गादीनां सरितामवताराः पामरैः प्रगीयन्ते ।
तीर्थपदेन जगत्यां जलावतारो न तीर्थपदवाच्यः ॥५५॥
वञ्चितमेतद्विश्वं गुरुभिः सकलं निजप्रणीतेन ।
प्राशस्त्येन तदेते न पूजनीया न चापि मन्तव्याः ॥५६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संसार में मूर्ख गंगा आदि नदियों को भी तीर्थ मानते हैं वास्तव में ये जलावतार हैं। इनको तीर्थ नहीं कहा जा सकता है ॥ ५५ ॥ गुरुओं ने अपना महत्त्व लिख लिख कर समस्त संसार को ठगा है इसलिए न इनको मानना चाहिए और न इनका पूजन करना चाहिए ॥ ५६ ॥

अष्टादश भूमितले यानि पुराणानि वेदमूलानि ।
द्वैपायनो न तेषां मुनिः प्रवक्ता ममायमादेशः ॥५७॥
एतेषु यत्समुक्तं न तन्मनुष्यैः कदापि मन्तव्यम् ।
अश्लोलताऽऽदिदोषैर्यतः प्रदुष्टस्तदीयपद्यांशः ॥५८॥

संसार में आजकल जो अठारह पुराण प्रचलित हैं इनको व्यास प्रणीत होने पर भी नहीं मानना चाहिए ॥ ५७ ॥ इनमें जो कुछ लिखा है वह मानने योग्य नहीं है क्योंकि इनमें अश्लीलता आदि अनेक दोष विद्यमान हैं ॥ ५८ ॥

वेदेषूपनिषत्सु ब्राह्मणमन्त्रेषु याः कथाः कथिताः ।
ता एव मन्मतज्ञैः पुराणभावेन सादरं मान्याः ॥५९॥
ब्राह्मणगतवाक्यानां न मन्त्रता तत्र विद्यमानत्वात् ।
ऐतिह्यस्य मते मे तस्मादेतेऽपि नैव मन्तव्याः ॥६०॥

वेदों में, उपनिषदों में, ब्राह्मणों में, जो जो आख्यान हैं उन को ही पुराणरूप से मानना उचित है ॥ ५९ ॥ शतपथादि ब्राह्मण ग्रंथों में जो मंत्र उपलब्ध होते हैं उनको मंत्र नहीं मानना चाहिए, क्योंकि उनमें इतिहास है ॥ ६० ॥

शतपथगोपथसामब्राह्मणवाक्येषु विद्यते यत्तत् ।
परतः प्रमाणभूतं स्वतः प्रमाणन्तु केवलं लोकः ॥६१॥
एकादशसङ्ख्याकाः पतयः प्रत्येकयोषितामार्यैः ।
कारयितव्याः सत्त्वरमयमादेशो ममास्ति बहुमान्यः ॥६२॥

शतपथ, गोपथ आदि ब्राह्मणों में जो कुछ लिखा है वह परतः प्रमाण है इस कारण वह मानने योग्य नहीं है ॥ ६१ ॥ मेरे मत में प्रत्येक स्त्री के



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लिए ११, ११ पति होने चाहिए और यह मेरी आज्ञा परम आदरणीय समझनी चाहिए ॥ ६२ ॥

गच्छेद्यदि परदेशं स्वपतिर्दैवात्तदा वधूवृन्दैः ।
सादरमादर्तव्यं व्यभिचरणं यन्नियोगपदवाच्यम् ॥६३॥
सन्ध्यादिनित्यकर्मसु जलमाचमनीयमेष सिद्धान्तः ।
पाखण्डानां न ततः कदापि मद्भक्तपूरुषैः सेव्यः ॥६४॥

स्त्रियों को चाहिए कि वे पति के विदेश जाने पर नियोग के द्वारा खूब व्यभिचार का प्रचार करें यह मेरा मुख्य सिद्धांत है ॥ ६३ ॥ संध्या आदि नित्य कर्म में आचमन करना अनावश्यक है। ऐसा कार्य पाखंडी किया करते हैं। मेरे अनुयायियों को यह काम नहीं करना चाहिए ॥६४॥

आगच्छेद्यदि कण्ठे कफः कदाचिद्विकारयोगेन ।
आचमनं कर्तव्यं तदा न सर्वत्र तद्विधिः सिद्धः ॥६५॥
निजपक्षपोषणार्थे वेदार्थानां पदे पदे कार्यम् ।
परिवर्तनमपि तेन प्रायो मन्दाः स्वपक्षमेष्यन्ति ॥६६॥

यदि किसी समय कंठ में कफ का गोला आकर अटक जावे तब आचमन करना उचित है। विना कंठगत कफ के ऐसा करना उचित नहीं है॥ ६५ ॥ अपने पक्ष की सिद्धि के लिए वेदों का भी अर्थ बदल देना चाहिए क्योंकि ऐसा करने से मूर्खजन अपने पक्ष में बहुत आवेंगे ॥ ६६ ॥

प्रतिपादनीयदैवतविपर्ययोऽपि प्रधानभावेन ।
मन्त्रेषु माननीयो यथा स्वपक्षः समुन्नतो भूयात् ॥६७॥
आगतजनप्रतारणसिद्ध्यै वेदस्य नाम सङ्ग्राह्यम् ।
परमनुगमनं तेषां न कार्यमार्यैरदो मम स्वान्तम् ॥६८॥

वेद के मंत्रों के यह जो देवता हैं आवश्यकता के अनुसार उनका भी अपने पक्ष की सिद्धि के लिए परिवर्तन करना अनुचित न होगा ॥ ६७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनुष्यों को वंचित करने के लिए वेदों का नाम तो ख़ूब लेना चाहिए, परन्तु उनमें जो लिखा है उसका पालन करना आवश्यक नहीं है ॥ ६८ ॥

शब्दप्रामाण्यपथं हित्वा तर्कप्रधानमादेयम् ।
वचनं येन विनाशो भूयाद्वेदस्य भारते वर्षे ॥६६॥
वर्णविपर्ययकार्ये मन्मतमागत्य सर्वभावेन ।
यतनीयं मन्दजनैरयमस्माकं प्रधानसिद्धान्तः ॥७०॥

आर्यों को शब्दप्रमाण छोड़ कर केवल तर्कवाद का अवलम्ब लेना चाहिए, इसी से अपना काम बन सकता है ॥ ६६ ॥ समाज में जन्मगत वर्णव्यवस्था का ख़ूब खंडन करना चाहिए, क्योंकि इससे ही हमारे मत में जनसंख्या बढ़ सकती है ॥ ७० ॥

स्पर्शास्पर्शविचारः केवलमात्माभिमानरचैव ।
नायं मान्यस्तस्मात्सर्वैः सर्वत्र सर्वदा मूढैः ॥७१॥
भोजनमात्रं भोज्यं स्त्रीमात्रं स्त्री परस्वमेव स्वम् ।
धर्माधर्मविचारः प्रमत्तमान्यः प्रमाणशून्यत्वात् ॥७२॥

स्पर्शास्पर्श का जो विचार है वह भी केवल अभिमानमात्र है, इस लिए इसको भी तिलांजलि दे देनी चाहिए ॥ ७१ ॥ भोजनमात्र को भोज्य समझना चाहिए। स्त्रीमात्र को, स्त्री समझना चाहिए। परस्व अपना धन समझना चाहिए। तभी हमारा मत बढ़ सकता है, अन्यथा नहीं ॥ ७२ ॥

इत्थं बहुविधजल्पः स्वीयं मन्तव्यमप्यमन्तव्यम् ।
संस्थाप्य मृत्युमागादनर्थमूलः कलेश्चतुर्थांशः ॥७३॥
एतन्मतपरिचालनदत्तमनस्कैः प्रचण्डपाखण्डैः ।
किन्न कृतं भूलोके पापाचरणं मदेन पर्याप्तम् ॥७४॥

इस प्रकार जगत् में सर्वथा नहीं मानने योग्य सिद्धान्तों को अपना मन्तव्य बनाकर अनर्थ के मूलभूत स्वामी दयानन्द भी चले गये ॥७३॥ इन पूर्वोक्त चारों नास्तिकों के फंदे में फंसकर मनुष्यों ने संसार में कौन सा पाप नहीं किया सभी पापाचरण इनके द्वारा भूतल में प्रचलित हुए हैं ॥७४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एषामेव मतानां प्रपातनाय प्रयत्यते येन ।
सोऽयं वैदिकधर्मःसमस्तलोकेषु विस्तृतो भूयात् ॥७५॥
एतावती परिस्थितिरस्मिन्सर्गे मया कलेरुक्ता ।
पापावतारवर्णनपरम्परायां प्रदत्तचित्तेन ॥७६॥

इन सब का खंडन करनेवाला संसार में अनादि-काल-सिद्ध एक सनातनधर्म ही है, जिसके विस्तार के लिए यह सब आयोजन किया गया है ॥ ७५ ॥ कलि के चारों अंशावतारों की इस सर्ग में जो मैंने परिस्थिति बतलाई है वह सब उन उन के ग्रन्थों को देख कर ही लिखी गई है। [ नामूलं लिख्यते किञ्चिन्मया सर्वैः प्रबुध्यताम् ] ॥ ७६ ॥

आयोजनं यदन्यद्धर्मद्वन्द्वाय सर्वथाऽपेच्यम् ।
सर्वं तदुत्तरोत्तरसर्गाऽऽलोके विलोक्यतां विज्ञैः ॥७७॥

उन सब मतों का खंडन करने के लिए जो जो सामग्री अपेक्षित है वह सब की सब पाठकों को इसी महाकाव्य में अन्यत्र मिलेगी ॥७७॥

सायङ्कालिकनित्यकर्मनियमात्कार्यं विहायापरं
देवाराधनकार्यदत्तमनसो देवस्तवं कुर्वतः ।
धर्मं वर्धयतः सनातनमरं ग्रन्थप्रणेतुः क्रमा-
द्विश्वेशः प्रकरोतु पूर्णमुदयं शार्दूलविक्रीडितैः ॥७८॥

सायंकालिक नित्य कर्म के नियम से अन्य कार्य को छोड़ कर देवाराधन में लगे हुए देवस्तव करते हुए मुझको भगवान् शंकर क्रमशः पूर्ण अभ्युदय प्रदान करें, सर्गान्त में यही मेरी उनसे प्रार्थना है ॥ ७८ ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये
पापावतारवर्णनं नाम सप्तमः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अष्टमः सर्गः

सर्वतः समभिवीक्ष्य विवृद्धा-
न्नास्तिकानहह ! भारतमध्ये ।
सादरं परिवृढस्य नियोगा-
दाजगाम शिविरं स्वमधर्मः ॥१॥

भारत में सर्वत्र नास्तिकों को बढ़ा हुआ देखकर कलिदेव की आज्ञा से अधर्म अपने शिविर में आया ॥ १ ॥

यत्र सर्वविषयैरुपयुक्ता
सर्वतोऽतिनवगोपुरयुक्ता ।
नव्यदिव्यपटमण्डपपङ्क्तिः
शिश्रिये जगति कामपि शोभाम् ॥२॥

जहाँ पर समस्त विषयों से अलंकृत प्रत्येक दिशा में विस्तृत द्वार पटमण्डपों की पंक्ति विचित्र शोभा का उ ाहरण बन रही है ॥ २ ॥

तोरणेन विविधेन विचित्रा
नागदन्तकनिवेशितचित्रा ।
यत्र वस्तुरचना मनुजानां
मानसान्यनुबबन्ध निसर्गात् ॥३॥

जहाँ पर अनेक प्रकार के तोरणों से विचित्र, नागदन्तों में लगे हुए चित्रों से अलंकृत शिल्प कला, मनुष्यों के हृदयों को अपनी और खींच रही है ॥ ३ ॥

तत्र मध्यविषये सुपताकं
साधुसाध्वितिवदज्जनताकम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मण्डपं नवमकारयदेकं
नान्तरङ्गमपि नो बहिरङ्गम् ॥४॥

ऐसे शिविर के मध्यभाग में सुन्दर पताकायुक्त सर्वतोभद्र एक पट-मण्डप अपने महाधिवेशन के लिए मंत्री ने बनवाया ॥ ४ ॥

मञ्जुवेत्ररचिते सुचतुष्के
तत्र काञ्चनमये नवपीठे ।
आदरादिव ददौ पदमारा-
न्मन्दमन्दगमनः कलिदेवः ॥५॥

उसके मध्यभाग में सुवर्ण पीठ पर मंदगामी कलिदेव बड़ी प्रसन्नता के साथ आकर बैठ गए ॥ ५ ॥

हेमपादमधिगत्य स पीठं
भास्वरं सचिवमुन्नतदेशे ।
सन्निवेश्य तमधर्ममकम्पो
द्वारदौत्यकरणेऽनृतमाधात् ॥६॥

आपने आते ही उन्नत आसन पर अधर्म को बिठा कर द्वार पर मूर्तिमान् अनृत दूत का पहरा नियत कर के कलिदेवने अपने कार्य का आरंभ किया ॥ ६ ॥

आजगाम तदनन्तरमुग्रः
पूर्वगोपुरमुखेन सुखेन ।
कामदेव इति यस्य मनोज्ञं
कीर्तयन्ति भुवनेष्वभिधानम् ॥७॥

इतने में ही पूर्व के दरवाजे से आकर विश्वविजयी महामना कामदेव आकर उपस्थित हुए । ॥ ७ ॥

माधवेन सह तं समुपेतं
वीक्ष्य मञ्जुरतिरञ्जितवेशम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नव्यगायकगणाः प्रमदेन
स्वागतं जगदुरुत्तमपद्यैः ।।८।।

वसंत और रति के साथ साथ अकस्मात् कामदेव को वहाँ आया देख कर गायकगणों ने स्वागत गान आरंभ किया ॥ ८ ॥

स्वागतोत्तरमसौ निजराज्ञः
सम्मुखे निजसमर्पितकार्यम् ।
बद्धपाणिरभिवादनपूर्वं
व्याजहार रसमञ्जुलपद्यैः ।।९।।

स्वागत के अनंतर कामदेव ने भी कलिदेव के समक्ष में आकर प्रणामपूर्वक जो कुछ कहा वह इस प्रकार है । ॥ ९ ॥

नाथ ! भूमिवलये नहि कश्चि-
द्ध्रियते मम मुखेन तवाज्ञाम् ।
यो निपीय सहसैव सशङ्कः
कान्दिशीक इव नैति पदाब्जम् ।।१०।।

हे नाथ ! जगत् में ऐसा कोई भी नहीं है जो मेरे मुख से आपकी आज्ञा को सुन कर आपके चरणों में अपना अनुराग न रखता हो । ॥ १० ॥

ग्राहिताः प्रसभमेव तवाज्ञां
के मया न जगतीतलमध्ये ।
नागलोकनिलयाः सुरलोके
संस्थितास्तदपरेषु वसन्तः ।।११।।

मैंने आपके आदेश को सुरपुर, नागपुर आदि समस्त लोकों में जा कर बड़े आनंद के साथ सुनाया है । ॥ ११ ॥

इत्थमादरपरिप्लुतवर्णं
वाक्यमस्य समयेन निपीय ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदरादिव जगाद समन्ता-
दुत्कलः कलिरुदारविचारम् ॥ १२ ॥

इस प्रकार आदरसंपन्न कामदेव की बात सुन कर प्रसन्नचित्त कलिदेव ने कामदेव से इस प्रकार कहा ॥ १२ ॥

यद्भविष्यति मया सह युद्धं
कैश्चिदेव दिवसैस्त्रिजगत्याम् ।
तत्र धर्मविजयाय विवेकः
प्रक्रमेण भवतैव विजेयः ॥१३॥

कुछ ही दिनों में मेरा जो धर्म के साथ युद्ध होगा उसमें विवेक नामक उनके महारथी से आपको लड़ना होगा ॥ १३ ॥

एवमादिशति हृद्गतभावं
तत्र तत्परमुपेत्य तदन्यः ।
कोऽपि सत्वरमनुन्नतभावः
प्राह तस्य सविधे पुनरेवम् ॥१४॥

इस प्रकार कामदेव को आज्ञा देते हुए महाराज के समक्ष में आकर दूसरे महारथी ने जो कुछ कहा वह इस प्रकार है ॥ १४ ॥

देवकार्यमिति चेतसि मत्वा
यत्र यत्र गतवानहमासम् ।
तत्र तत्र भवदेकमहिम्नः
स्थापनाय बहु यत्नमकार्षम् ॥ १५ ॥

आपकी आज्ञा को ईश्वराज्ञा मान कर जहाँ जहाँ मैं गया वहाँ वहाँ आप का महत्त्व स्थापन करने के लिए मैंने प्रयत्न किया ॥ १५ ॥

विश्वविश्रुतकथं समुपेतं
मामवेक्ष्य मनुजैःस्वमहत्त्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दूरतः परिहृतं भवदाज्ञा-

पालनं शिरसि सादरमात्तम् ॥ १६ ॥

संसार में प्रसिद्ध मुझ को आया हुआ सुन कर मनुष्यों ने अपना महत्त्व छोड़ कर आप की आज्ञा स्वीकार कर ली ॥ १६ ॥

यामवन्ति बलिनो भुवि हिंसां

साऽबला मम सदा भवदिष्टम् ।

चेष्टतेऽनुदिनमस्मि तथाऽहं

तत्परः कथय कार्यमिदानीम् ॥ १७ ॥

बलवान् मनुष्य जिसकी सर्वदा रक्षा करते हैं वह जगत्-प्रसिद्ध हिंसादेवी मेरी धर्मपत्नी है जो सर्वदा आपका हितचितंन करती रहती है। कहिए अब आपकी और क्या आज्ञा है ? ॥ १७ ॥

आदरातिशयितामितिवाचं

तस्य संसदि निशम्य तदानीम् ।

दन्तकान्तिपरितर्जितचन्द्र-

स्तं कलिः स्वगतमेवमुवाच ॥ १८ ॥

इस प्रकार आदरभरी क्रोध की बात सुन कर सभा में कलिदेव ने जो बात कही उसका उपक्रम इस प्रकार है ॥ १८ ॥

भावि यत्प्रधनमत्र जगत्यां

तत्र मे रिपुसपक्षमलक्ष्यम् ।

सक्षमं बलवदक्षमपक्ष-

क्षेपणं क्षपय साधु विचारम् ॥ १६ ॥

मेरा कुछ दिनों में धर्म के साथ युद्ध होनेवाला है। उस में मेरे साथ विरोध रखनेवाले विचार को आप क्षमादेवी के सहित भगा दीजिए ॥१६॥

मां दयस्व दयनोयदयायां

पातयाशु करुणामुत मैत्रीम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दूरतः कुरु विवेकविकासं
सर्वमेव विनिपातय दासम् ॥ २० ॥

दया के ऊपर दया न कीजिए, करुणा और मैत्री को भी डरा दीजिए विवेक के समस्त सहचरों को बेधड़क हटाइये २० ॥

सम्मदादितिवदन्तमुदग्रं
तं विलोक्य परिषद्युपयातः ।
तत्परोऽपि निजकार्यसमृद्धिं
तत्पुरःस्थितजनेषु जगाद ॥ २१ ॥

इस प्रकार सभा में कहते हुए कलिदेव के समक्ष में तीसरे महारथी ने आकर जो अपना वक्तव्य उपस्थित किया वह इस प्रकार है ॥ २१ ॥

शासनं तव शिरस्युपधाय
प्रस्थितोऽस्मि भुवनेषु यदाऽहम् ।
प्राणिमात्रनमनेन तदाऽलं
ते महत्त्वमधिकं समपश्यम् ॥२२॥

हे राजन् ! आपकी आज्ञा पाकर जैसे ही मैं यहाँ से चला वैसे ही सब का झुका हुआ मस्तक देखकर मैंने आपके महत्त्व का अनुमान कर लिया ॥ २२ ॥

इङ्गितेन गमनेन परस्ता-
द्भाषणेन हृदयेश ! निदेशम् ।
चेष्टितेन बहुधा धृतमेव
प्रायशो जगति तेऽलमपश्यम् ॥२३॥

मैंने संसार में सर्वत्र इंगित से, गमन से, भाषण से और चेष्टा से आपकी आज्ञा का पालन करते हुए सब मनुष्यों को पाया । ॥ २३ ॥

नश्वरं जगदिति प्रवदन्तो
ये वनानि विविशुः सवनानि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेऽद्य मत्करुणाया जनमध्ये
ताम्रखण्डयुगलाय यतन्ते ॥२४॥

जो मनुष्य संसार को सर्वथा मिथ्या मानते थ वे भी आपके प्रभाव से दो दो पैसे मांगने पर उतारू होगए। ॥ २४ ॥

किङ्करी भवदनुग्रहतृष्णा
मद्वधूरियमवेहि सुतृष्णा।
सादरं नमति ते पदपद्मं
नाथ ! तत्पतिरहं तव दासः ॥२५॥

देखिए आपकी आज्ञा में दत्तचित्त यह मेरी धर्मपत्नी तृष्णादेवी आपको बार बार प्रणाम करती है और मैं उसका पति आपका पहले से ही दास हूँ ॥ २५ ॥

भावपूर्णममलाशयमेत-
त्तस्य वाक्यमवगत्य सहासम्।
सस्पृहश्च तमवोचदकस्मा-
दुत्तरोत्तरविवृद्धमनीषः ॥२६॥

इस प्रकार भावपूर्ण तीसरे महारथी का कथन सुन कर आनंदित हुए कलिदेव ने हास्यपूर्वक अपने हृदय का भाव इन शब्दों में कहना आरंभ किया ॥ २६ ॥

रोमहर्षणमरं भविता मे
जन्यमत्र भुवने भवतापि।
तत्र शान्तिसहितस्य विमर्द-
स्तोषपाशनिकरस्य विधेयः ॥२७॥

संसार को आश्चर्य में गेरनेवाला जो मेरा धर्म के साथ युद्ध होगा उसमें शांतिदेवी समेत संतोषदेव का मानमर्दन आपको करना होगा ॥२७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमस्य कथनं न समाप्तिं
यावदाप समयोचितवृत्तम् ।
तावदुत्तरविनिर्गमनेन
प्राप्य मोह इदमाह यथेच्छम् ॥२८॥

इस प्रकार अभी आपका कथन समाप्त भी न होने पाया था कि उत्तर द्वार से आकर मोह ने अपना वक्तव्य इस प्रकार उपस्थित किया ॥२८॥

नानमीति पदपङ्कजयुग्मं
यः सुरासुरभवेषु नतेऽद्य ।
तस्य नाम लघु निर्दिश यस्मा-
त्तं भवत्परवशं भुवि कुर्याम् ॥२९॥

हे राजन् ! आपके चरणों में जो अपना मस्तक न झुकाता हो उसका नाम कहिए जिससे कि मैं उसको आपका दास बनाऊँ ॥ २९ ॥

मस्तकेऽञ्जलिपुटं जलजाभं
सर्व एव विनिवेश्य भवन्तम् ।
सार्वभौमनृपतिं हृदि मत्वा
प्रेष्यतामनुभवन्ति मनुष्याः ॥३०॥

मस्तक में अंजलि रख कर सभी मनुष्य आपके सार्वभौम शासन को स्वीकार कर रहे हैं ॥ ३० ॥

द्राक्षया सममसुष्य तदेत-
द्भाषितं बहु निशम्य मनोज्ञम् ।
वाचिकं चपलमस्य पुरस्ताद्
व्याजहार कलिरुन्नतचित्तः ॥३१॥

द्राक्षा के समान अतिमधुर तीसरे महारथी की यह बात सुन कर कलिदेव ने बड़ी उत्सुकता के साथ जो अपना वक्तव्य उपस्थित किया वह इस प्रकार है ॥ ३१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किन्न ते विदितमत्र जगत्त्यां
साकमाशु मम धर्मबलेन ।
जन्यमन्तकभयावहमारा-
त्सम्भविष्यति न पूर्वमभूद्यत् ॥३२॥

क्या आपको मालूम नहीं कि मेरा धर्मदेव की सेना के साथ बड़ा भारी अभूतपूर्व महासमर आरम्भ होनेवाला है ? ॥ ३२ ॥

तत्र वंशविलयाय विरक्ते-
र्जीवितेन भवता यतितव्यम् ।
एतदेव मम वाचिकमस्मि-
न्सावधानपरतामनुगच्छेः ॥३३॥

उसमें वैराग्य के परिवार का समूल विध्वंस करना आपका काम होगा यही आपके प्रति मेरा आदेश है ॥ ३३ ॥

इत्थमस्य कथया न समाप्तं
यावदुत्तररसाहृतगत्या ।
तावदम्बरपथादवतीर्णो
मृत्युरप्युचितमेवमवोचत् ॥३४॥

इस प्रकार जब तक आपकी बात भी समाप्त न होने पाई तब तक आकाशमार्ग से उतर कर चौथा महारथी मृत्युदेव सामने आकर इस प्रकार कहने लगा ॥ ३४ ॥

मद्भयाज्जगति सर्वमनुष्यैः
शासनं तव शिरस्यविचारात् ।
आहितं बहुकथाऽपि निपीता
मन्मुखेन नवशासनबद्धा ॥ ३५ ॥

हे राजन् ! मेरे भय से सभी प्राणियों ने बिना सोचे समझे ही आपका शासन स्वीकार कर लिया है और आपका आदेश सुन लिया है ॥ ३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्र कर्मणि पुरा विनियुक्तः
श्रीमताऽहमधुनाऽपि तदेव ।
साधयामि भवतामधिकारे
स्थापयामि जगदेतदशङ्कम् ॥ ३६ ॥

आपने जिस कार्य में मुझको पहले लगाया था अभी तक उसी कार्य को करता हुआ मैं संसार को आपके पास भेज रहा हूँ ॥ ३६ ॥

आदरादिति निपीय तदुक्तं
सम्मदोदयसमुन्नतचित्तः ।
प्रत्युवाच जगदन्तकमेनं
मृत्युमेवमतिमञ्जुलवर्णाम् ॥ ३७ ॥

मृत्यु की यह बात आदर से सुन कर प्रसन्नचित्त कलिदेव ने मृत्यु के प्रति जो कहा वह इस प्रकार है ॥ ३७ ॥

मद्विरोधकरणाय नियुक्ता
ये विपक्षविषयेऽपि सपक्षाः ।
तानकालकवलानलमस्मि-
न्भूतले कुरु परिभ्रमणेन ॥ ३८ ॥

मेरे विपक्ष दल में मेरे साथ विरोध रखनेवाले जितने महारथी हैं उनको आप अकाल मृत्यु के चक्र से मारिये यही आपके लिए मेरा आदेश है ॥ ३८ ॥

आदरादिति न यावदुदन्तः
पूर्णतामगममदस्य दुरन्तः ।
नागलोकगतविस्तृतकीर्ति-
स्तावदागमदहङ्कृतिदूतः ॥ ३९ ॥

इस प्रकार अपनी बात कलिदेव अभी समाप्त भी न करने पाया कि अहंकार पाताल लोक से आकर सामने उपस्थित हुआ ॥ ३९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वतः कुशलमस्य विदित्वा
कार्यमप्यवसितिं समुपेतम् ।
आमनोरथपथं कथनाय
प्रक्रमं विधिवदेवमतानीत् ॥ ४० ॥

अहंकार को सकुशल वापस आया हुआ देखकर कलिदेव ने अपने कार्य की सिद्धि का अनुमान कर के उसके प्रति इस प्रकार कथन किया ॥ ४० ॥

सिद्धमद्य सकलं मम कृत्यं
दर्शनं प्रतिगतोऽसि यदेवम् ।
हर्षसम्भवनमेव समग्रां
कार्यसिद्धिमभिशंसति भव्याम् ॥ ४१ ॥

हमारा समस्त कार्य सिद्ध हो गया क्योंकि आप सब लोग प्रसन्न लौट आये हैं । आप लोगों की प्रसन्नता ही मेरे कार्य की सिद्धि का अनुमान करा रही है । ॥ ४१ ॥

येन सम्प्रति बहूपकृतं मे
मन्निदेशमधिगत्य जनेन ।
तस्य किन्न मरणावधि दैवा-
त्प्रेष्यतामुपगतोऽस्मि जवेन ॥ ४२ ॥

मेरी आज्ञा में चलकर जिन जिन महानुभावों ने मेरा उपकार किया है उनका मैं अनंत समय तक सेवक बना रहूँगा । ॥ ४२ ॥

दिङ्मुखेषु मम शासनचर्चा
विस्तृतैव भवतां भ्रमणेन ।
साम्प्रतं यदुचितं तदवश्यं
सिद्धिमेष्यति न संशयलेशः ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आप लोगों की कृपा से मेरे शासन की चर्चा सर्वत्र फैल गई और इस समय में भी जो कार्य समक्ष में है वह अवश्य सिद्ध होगा। ॥ ४३ ॥

एवमस्य भुवनत्रयभूप-
स्यानतं वचनमादरगर्भम्।
ते निशम्य विजयोचितकाला-
शंसनं जगदुरुत्तरवाग्भिः ॥ ४४ ॥

इस प्रकार भुवन-त्रितय के एकमात्र स्वामी का आदरपूर्ण वचन सुनकर वे बोले कि हम सब आपके अनुगृहीत हैं। जब समय आवेगा तभी युद्ध के लिए चलेंगे ॥ ४४ ॥

आययावथ स कोऽपि समज्या-
माशु यस्य नवसङ्गमनेन।
हर्षितं समभवद्बहु तत्त-
त्सभ्यमण्डलमखण्डमदेन ॥ ४५ ॥

इस कथन के अनंतर ही एक मौहूर्तिक सभा में आकर उपस्थित हुआ जिसको आया हुआ देखकर सभी सदस्य हर्षित हुए ॥ ४५ ॥

तं प्रणत्य गणितागमविज्ञं
दक्षिणामपि निवेद्य तदग्रे।
सन्मुहूर्तमशिवागमशून्यं
सर्व एव समकालमपृच्छन् ॥४६॥

उन सबों ने सादर प्रणाम करके प्रश्न की दक्षिणा उनके समक्ष में रख कर प्रास्थानिक मुहूर्त का प्रश्न उपस्थित किया ॥ ४६ ॥

सोऽप्यथर्वगणितागमवेत्ता
ध्याननिश्चलसरोरुहनेत्रः।
सर्वथाऽऽगमविधेः प्रतिकूलं
तानुवाच समयं समयज्ञः ॥४७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथर्ववेद सम्बन्धी समस्त गणित का जाननेवाला वह मौहूर्तिक भी उनके प्रति कहने लगा कि इस समय में प्रस्थान का मुहूर्त अच्छा नहीं है ॥ ४७ ॥

तेऽवमत्य गणितज्ञनिदेशं
स्वेच्छयैव चरलग्नमुपेत्य ।
पृष्ठगे शशिनि मन्दनिशीथे
सर्वसम्मतिवशाल्लघु चेलुः ॥४८॥

मौहूर्तिक की बात न मान कर वे सब चर-लग्न में चंद्रमा के पीठ पीछे होने पर भी शनिवार को अर्द्धरात्रि के समय पूर्व की ओर प्रस्थित हुए ॥ ४८ ॥

दैवदुर्विलसितेन तदानीं
प्रस्थितेरनुगमेन यथावत् ।
सर्वमेव गमनोचितरीतेः
साधनं विनिमयं समुपागात् ॥४९॥

दैवदुर्विपाक से उस समय प्रस्थान करने पर शकुन शास्त्र में जितने अशकुन थे वे सब उनके समक्ष में उपस्थित हुए ॥ ४९ ॥

भूरकम्पत सकम्पमकस्मा-
च्चन्द्रमण्डलमभूद्धरितोऽपि ।
दाहमापुररुणोदयकान्ति-
प्रक्रमो न धरणीतलमापत् ॥५०॥

सबसे प्रथम भूकंप हुआ। फिर चंद्रमंडल हिलने लगा। उसके अनंतर दिग्दाह उपस्थित हुआ। अरुणोदय के समय में भी उसकी प्रभा पृथिवी पर नहीं आती थी ॥ ५० ॥

मण्डलीभवदतिभ्रमवन्तो
गृध्रवायसकपोतकदम्बाः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वदिङ्मुखपिधानमकुर्व-
न्भीममाशु समकूजदुलूकः ॥५१॥

गृध्र, वायस और कपोतों के झुंड के झुंड ऊपर आकर मंडराने लगे तथा उलूक सामने आकर बोलने लगा। ॥ ५१ ॥

जैनभिक्षुरशिवः समुपागा-
त्सम्मुखे करगृहीतकपालः ।
तैलिकोऽपि मलिनाम्बरबन्धो
मार्गभूमिमरुणाद्ध गतचक्षुः ॥५२॥

अमंगलसूचक जैन संन्यासी कपाल लेकर समक्ष में आ गया और अन्धा तेली सामने से आकर ठीक मार्ग के मध्य में बैठ गया ॥ ५२ ॥

आदरादनुहवः पुरतोऽभू-
त्तत्परं परिहवः परिवादः ।
सर्वदिक्षु स परिक्षवशब्दः
सर्वमेकपद एव समागात् ॥५३॥

अथर्ववेद में कहे हुए अनुहव, परिहव, परिवाद, ये तीनों यथाक्रम आकर उपस्थित हुए और सब ओर से परिक्षव होने लगा। [ अनुहवं परिहवं ] इत्यथर्ववेदमन्त्रः ॥ ५३ ॥

रिक्तकुम्भपरिदर्शनमेषा-
मेकतो गतधवाऽऽगमनेन ।
सङ्गतं समभवत् खरनादो
दक्षिणेऽतिभयदःसमुदस्थात् ॥५४॥

खाली घड़ा लेकर सामने विधवा स्त्री उपस्थित हुई और दक्षिण भाग में वैशाखनंदनजी ने आकर अपना राग आलापना आरंभ किया ॥ ५४ ॥

उल्कयाऽम्बरपथे कृतदीप्त्या
सूचितं यदशिवं शिवयाऽपि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वामभागगतया सकलन्त-
त्स्वस्तिवाचनिकतां समवापत् ॥५५॥

आकाश में उल्का ने प्रकाश कर दिया और वाम भाग में आकर शृगाली अमंगल शब्द करने लगी ॥ ५५ ॥

गोगणप्रसवकालपयस्यं
रक्तभावमभजद् बहुरावम् ।
गोकुलं गतजिघत्समतृष्णं
दीनभावमुपयातमकस्मात् ॥५६॥

प्रसवकालिक गौओं का दुग्ध रुधिरवर्ण हो गया और गोगण ने जल-तृण छोड़ कर दीनभाव धारण कर लिया ॥ ५६ ॥

अम्बरं तरलतारमसारैः
पांसुभिः परिवृतं सघनेन ।
व्याप्तमन्धतमसा कलिराज्ञः
प्रस्थितेरवसरे धरणीस्थम् ॥५७॥

आकाश में तारागण हिलने लगे और ऊपर से धूल बरसने लगी । सघन अंधकार ने पृथिवी के सभी पदार्थ आच्छादित कर दिये ॥ ५७ ॥

खड्गपाणिरतिभीषणवेशो
रासभाहृतरथेन यथावत् ।
धर्मराजविजयाय तदानी-
माश्वगच्छदनुसैन्यमधर्मः ॥५८॥

ऐसे विपरीत समय में भयंकर रूप धारण कर के हाथ में खड्ग लिये हुए अधर्म ने गदहों के रथ पर बैठ कर सनातन धर्म को नष्ट करने के लिए सेना के पीछे पीछे प्रस्थान किया ॥ ५८ ॥

तं विलोक्य बलवद् बहुसेनं
साहसेन विविधेन समेतम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवमानवदलानि विषादा-
देकदैव मलिनानि बभूवुः ॥५६॥

बहुत सी सेना एवं साहस के साथ चले हुए अधर्म को सुन कर संसार के समस्त प्राणियों का हृदय हिलने लगा ॥ ५६ ॥

सर्वतः प्रथममेष जगत्यां
विश्वविश्रुतबलेन जिगाय ।
तीर्थमात्रमभवत्किल दैवा-
दस्य सम्प्रति तदेव सुदुर्गम् ॥६०॥

सब से पहले इस अधर्म ने संसार में जितने तीर्थस्थान हैं उन पर अपना अधिकार जमाया। अन्त में वेही इसके लिए अभेद्य दुर्ग बन गए ॥ ६० ॥

तत्र मूढमनुजेषु सदर्पं
सन्निवेश्य बलमुन्नतदर्पम् ।
युद्धसाधनमयानि यथावद्
व्याततान करणानि बहूनि ॥६१॥

उन दुर्गों में अपना बल स्थापन करके कलि ने युद्ध के अन्य साधन एकत्र करना आरम्भ किया ॥ ६१ ॥

सर्वमात्मबलमद्भुतरीत्या
विश्वमात्रविजयाय विलोक्य ।
सज्जमात्मगतमेष विचारं
मन्त्रिणं प्रतिजगाद महीपः ॥६२॥

अन्तमें विश्वमात्र के विजय के लिए अपना बल पर्याप्त मान कर कलिदेव ने अपना हृद्गत विचार मंत्री के समक्ष प्रकट किया ॥ ६२ ॥

सूचनां समधिगत्य महीप-
स्याशु सोऽपि तदुदीरितभावम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घोषणोचितमदोद्धततत्त-
द्वाक्यपूर्णमलिखन्नवपत्रम् ॥६३॥

मंत्री ने भी राजा की सूचना पाकर उनके भाव से पूर्ण घोषणापत्र के उपयुक्त अक्षरों में एक पत्र लिखा ॥ ६३ ॥

राजदौत्यकरणे विनियुक्त-
स्तद्दलं समधिगत्य तदानीम् ।
धर्मदेवशिविरंप्रति मत्तः
सादरं प्रतिययौ कुसुमेषुः ॥६४॥

राजदूत बन कर पत्र ले जाने के लिए नियुक्त हुए कामदेव ने उस पत्र को लेकर धर्मदेव के शिविर के लिए प्रस्थान किया ॥ ६४ ॥

गतवति विषमेषौ पत्रमादाय तूर्णं
भुवनविजयभद्राशंसयाऽमन्दचित्तः ।
यदवधि कलिरुत्कः स्वासनं नैव भेजे
तदवधि विधियोगात्पूर्णतामाप सर्गः ॥६५॥

पत्र लेकर विषम बाण के चले जाने पर विश्वमात्र के विजय की आशंसा से प्रसन्नचित्त कलिदेव जब तक अपने आसन पर नहीं पहुँचे तक तक यह सर्ग अवसान पर पहुँच गया ॥ ६५ ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये
युद्धघोषणाप्रदानं नामाष्टमः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# नवमः सर्गः

विश्वात्मकस्य पुरुषस्य यथाऽवताराः
प्रादुर्भवन्ति भुवने भुवनोदयाय ।
धर्मात्मकस्य पुरुषस्य तथाऽवतारा
धर्मोदयाय नियते समये भवन्ति ॥ १ ॥

जिस प्रकार विश्वात्मक भगवान् के अनेक अवतार विश्व के उदय के लिए होते हैं उसी प्रकार धर्म के अवतार भी नियत समय में धर्म के उदय के लिए होते हैं। १॥

धर्मप्रवर्तनकृते धरणीतलेऽस्मि-
न्ये ये विशिष्टमनुजा भगवन्निदेशात् ।
आयान्ति ते भगवदंशविशेषभूताः
सौभाग्यतो जनिभृतां प्रवदन्ति धर्मम् ॥२॥

भगवान् के भेजे हुए जो जो विशिष्ट पुरुष भूतल में धर्म की वृद्धि के लिए आते हैं वे सब भगवान् के ही विशेष अंशस्वरूप धर्म का उपदेश देते हैं ॥ २ ॥

आवेशमेति भुवनाधिपतिः स्वशक्त्या
सत्त्वेषु येषु विविधेषु चराचरस्थः ।
सर्वाणि तानि महनीयकलानिवेशा-
दुत्कृष्टतामनुभवन्ति तदंशजत्वात् ॥३॥

जगदीश्वर अपनी शक्ति से जिन पदार्थों में आविष्ट होता है वे सब उसके अंश से उत्पन्न होने के कारण उत्तम कलाओं के योग से उत्तम बन जाते हैं ॥ ३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताहग्विधाधिकगुणोद्भवतोषतुष्टे
यान्युद्भवन्ति समयेऽतिविलक्षणानि।
सल्लक्षणानि जगतामशिवापनुत्त्यै
तेषामनुक्रमणिका पुरतः स्थितेयम् ॥४॥

ऐसे उत्तम महानुभावों के उद्भव से अलंकृत समय में जो सुन्दर लक्षण होने लगते हैं उनकी अनुक्रमणिका हम यहाँ पर उपस्थित करते हैं॥ ४॥

आविर्भवन्त्यसमये कुसुमान्यगेषु
वह्निः प्रदक्षिणगतिं समुपैति हर्षात्।
आनन्ददाः परिवहन्ति मदेन वाता
धर्मावतारसमये ककुभः प्रसन्नाः ॥५॥

असमय में वृक्षों में फूल लग जाते हैं, अग्नि प्रदक्षिण गति से चलने लगता है, मंद सुगंध और शीतल वायु अकस्मात् बहने लगता है और दिशायें निर्मल हो जाती हैं॥ ५॥

देवाङ्गनास्त्रिदशमञ्जुलमन्दिरेषु
नृत्यन्ति मन्थरपदं वृहतीमुपेताः।
विश्वावसुप्रभृतयो गुणगर्भितानि
गायन्ति मङ्गलपदानि मदातिरेकात् ॥ ६॥

देवालयों में देवांगना नृत्य करती है और विश्वावसु आदि गंधर्व गण वृहती नामक अपनी वीणा हाथ में लेकर मंगलमय गीत गाने लगते हैं॥ ६॥

सूते समुज्ज्वलमणीनवनिः प्रशस्ता
रत्नाकरो विमलरत्नचयं प्रसूते।
नव्यं वनस्पतिरपि प्रददाति पुष्पं
पुष्पोद्गमोऽधिकतया दलमावृणोति ॥७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रत्नगर्भा पृथिवी रत्नों को प्रकट करती है। रत्नाकर अच्छे अच्छे रत्न प्रकट करता है। जिनमें कदापि पुष्प नहीं लगता है वे भी वृक्ष पुष्पवान् हो जाते हैं। और वृक्षमात्र में फूल अधिक होने के कारण पत्ते छिप जाते हैं ॥ ७ ॥

आपीनमन्दगमनाः प्रभवन्ति गावो
माधुर्यमत्यधिकमेति फलप्रसूतिः।
नागाःस्वयं गतविषा न दशन्ति जन्तून्
भद्रीभवन्ति भुवि काममङ्गलानि ॥८॥

गौ अधिक दूध देने लगती हैं, फल अधिक मीठे हो जाते हैं सर्प गत-विष हो जाते हैं और अमंगल भी मंगल बन जाते हैं ॥ ८ ॥

सौरभ्यमुद्गिरति भूर्लवणाम्बु मिष्टं
सञ्जायते वदति वह्निरनामयानि।
आचार्यजन्मदिवसे सचराचरेषु
सर्वात्मना सकलसौख्यमुदेति नव्यम् ॥९॥

पृथिवी में से सुगंध आने लगता है, खारी जल भी मीठा बन जाता है, अग्नि प्रत्यक्ष होकर बोलने लगता है और संसार भर में सुख की वृद्धि होती है ॥ ९ ॥

अंशावतारपरिवृद्धिसमुत्थहर्षो
धर्मोऽपि जन्मदिवसेषु तथाविधानाम्।
वृद्धिं प्रयाति जनता महितां समृद्धिं
हर्षोऽपि हर्षमुपयाति किमन्यदस्मात् ॥१०॥

अपने अंशावतारों का जन्म सुन कर धर्म भी प्रसन्न होता है, जनता धनधान्य से पूर्ण बन जाती है और हर्ष भी हर्षित हो जाता है ॥ १० ॥

आदेशतो मुररिपोरवनाय भूमेः
केचित्पुराणपुरुषस्य नवावताराः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शौद्धोदनेः समयतःपरमत्र लोके
प्राकट्यमापुरघदर्पनिकृन्तनाय ॥११॥

भगवान् के अनुग्रह से बुद्ध-शासन के अनंतर पाप को समूल नष्ट करने के लिए कुछ ऐसे ही महानुभावों ने भारत में जन्म लिया ॥ ११ ॥

कुत्रापि भूसुरगृहे दनुजार्दितेन
शक्रेण दर्पदलनाय समं स्ववर्ग्यैः ।
सम्प्रार्थितो जनिमगादमरप्रधानो
भूमण्डले स भगवानमृतांशुमौलिः ॥१२॥

कहीं इंद्रादि समस्त देवगणों की प्रार्थना करने पर महादेवजी ने अवतार लिया ॥ १२ ॥

अभ्यर्थनाभिरभितो निगृहीतचित्तः
सन्मार्गरक्षणपरो जगतामधीशः ।
कस्यापि भूसुरवरस्य गृहेऽनुरागा-
दाविर्बभूव सरमो भगवान्मुरारिः ॥१३॥

कहीं पर भूभार को उतारने के लिए तथा धर्म को बढ़ाने के लिए लक्ष्मी समेत भगवान् विष्णुजी ने अवतार लिया ॥ १३ ।

आराधितः क्वचिदमङ्गलविप्लवस्य
सम्मार्जनाय बहुशो भुवनोदरस्थैः ।
प्राकट्यमाप कमलेक्षणनाभिपद्म-
सिंहासनाधिवसनो भगवान्विरिञ्चिः ॥१४॥

कहीं पर अमंगलमय विप्लव को हटाने के लिए समस्त संसार की प्रार्थना सुन कर कमल के ऊपर रहने वाले ब्रह्माजी ने अवतार लिया ॥ १४ ॥

धर्मात्मनां भवनिबन्धनभञ्जनाय
पापात्मनां विविधबन्धसमर्थनाय ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुत्रापि सर्वभुवनाधिपतेर्निदेशा-
दाविर्बभूव भगवान्वरुणः पृथिव्याम् ॥१५॥

धर्मात्माओं का बंधन तोड़ने के लिए और पापियों को बंधन से बाँधने के लिए कहीं पर भगवान् वरुण अवतीर्ण हुए ॥ १५ ॥

आकर्ण्य सज्जनमुखाज्जननं सलज्जा
तेषामशेषसुषमाविशदाशयानाम् ।
श्रद्धा विधिप्रणिहिताचरणावनद्धा
धर्माधिपस्य गृहिणी मुदिता बभूव ॥१६॥

सज्जनों के द्वारा धर्माचार्यों को भारत में अवतीर्ण सुन कर धर्मदेव की महारानी श्रद्धा अपने मन में बहुत प्रसन्न हुई ॥ १६ ॥

धर्माधिपप्रणिहितानि हितानि तानि
धर्माधिपत्यकरणोचितसाधनानि ।
तेषां बभूवुरतिमात्रमनामयाय
लोकोत्तराणि तदमात्यनिवेदितानि ॥१७॥

धर्म-वृद्धि के लिए भेजे हुए धार्मिक उपायनों को धर्म के अमात्य से प्राप्त करके धर्माचार्य भी अत्यंत आनंदित हुए ॥ १७ ॥

आजन्मधर्मपरिपालनमेव मुख्यं
कर्माऽद्वितीयमिति संवदतां स तेषाम् ।
पादारविन्दयुगलं शिरसा प्रणत्य
प्रत्याययावभिनुतः प्रणयेन तज्ज्ञैः ॥१८॥

"आजन्म हमारा कर्तव्य धर्म का पालन ही होगा" ऐसा उन धर्माचार्यों का वचन सुन कर धर्म का मंत्री उनके यहाँ से लौट आया ॥ १८ ॥

अभ्याययावथ विधेरुदयादमन्दः
कालो यमेत्य बलवान्वरुणावतारः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शौद्धोदनेर्मतमितान्मनुजान्विजेतुं
बौद्धागमाध्ययनमादरतश्चकार ॥१९॥

इतने ही में वह समय आकर उपस्थित हुआ जिसमें वरुण के अवतार भट्टपाद बौद्धों को परास्त करने के लिए उनके यहाँ जाकर पढ़ने लगे ॥१९॥

गर्भं यथाऽण्डपुटगं पिकवंशभूत्यै
सा वायसी ममतयाऽवति तद्वदेव ।
रूपान्तरेण भुवि वैदिकधर्मपूर्त्यै
वेविद्यमानमिममुद्भटमादिबौद्धाः ॥२०॥

जिस प्रकार वायसी पिकवंश को बढ़ाने के लिए उसके अंडों को अपना समझ कर पोसती है उसी प्रकार बौद्धों ने भी भट्टपाद को अपना समझ कर सब रहस्य बता दिया ॥ २० ॥

कालं समाप्य नियतं वरुणावतारो
बौद्धालये बुधगयावलयोदरस्थे ।
काकव्रजात्पिक इवातितरां विरुद्धो
धर्मावनार्थमजहाद्बुधमार्गदीक्षाम् ॥२१॥

बुद्ध गया में विद्यमान बौद्ध विद्यालय में बारह वर्ष तक पढ़ कर भट्टपाद वायससमूह से कोकिल जैसे बौद्धों से अलग हो गए ॥ २१ ॥

वाराणसीमयमुपेत्य समीपगङ्गां
वाराणसीनरपतेस्तनयामनःस्थम् ।
शोकं पदोपनतमाशु समुद्दिधीर्षुः
प्रारम्भमात्मिकबलेन विधेरकार्षीत् ॥२२॥

काशी में आकर जब उन्होंने काशीराज की पुत्री का दीनाक्रन्दन सुना तब उसको दूर करने के लिए अपने कार्य का आरंभ कर दिया ॥२२॥

कण्ठीरवाद्वनगजा इव भीतभीता-
स्तस्मादतर्कितबलादवितर्क्यवेदात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बौद्धाः पराजयमुपेत्य वितर्कवादे
देशान्तरं शरणमापुरपास्तदेशाः ॥ २३ ॥

सिंह से त्रस्त होकर जिस प्रकार वन के गज भागते हैं उसी प्रकार भट्ट-पाद से विवाद में पराजित होकर सभी बौद्ध इधर उधर भागने लगे ॥२३॥

विद्राव्य बौद्धमतगानयमप्रमेय-
विद्याधनो न विरराम मदेन यावत् ।
विद्रावणाय जिनमार्गवतामुदग्रो
देवालयादवततार शशाङ्कचूडः ॥ २४ ॥

इस प्रकार भट्टपाद जब तक बौद्धों को भगा कर बैठने भी न पाए तब तक नास्तिकों का विध्वंस करने के लिए भगवान् शंकरजी ने अवतार ले लिया ॥ २४ ॥

कौपीनवान्मृगवराजिनबद्धगात्रः
पालाशपाणिरधरामृतसिक्तवाणिः ।
भिक्षोपलब्धमधुराशनमात्रतुष्टो
वेदागमं कुलगुरोरपठत्समग्रम् ॥ २५ ॥

उसने भी ब्रह्मचर्य के नियम से कौपीन, मृगचर्म, पलाश दंड, मौंजी मेखला आदि धारण करके अपने गुरु के पास विद्याध्ययन आरम्भ किया ॥२५॥

जैनागमं समवलोक्य विपक्षबुद्ध्या
बौद्धागमं तदुभयप्रशमाय सन्धाम् ।
धर्मावनाय निगमप्रथनाय वेगा-
दुग्राश्चकार स पिनाकभृतोऽवतारः ॥ २६ ॥

आपने जैनागम और बौद्धागम इन दोनों को पढ़ कर सनातन वैदिक धर्म की रक्षा करने के लिए प्रतिज्ञा की ॥ २६ ॥

अभ्याजगाम तदनन्तरमेनमादौ
वादे विजेतुमतिबुद्धिबलः सुधन्वा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दैवात्पराजयमवाप्य निरस्तपक्षः
श्रीशङ्करं शरणमाप सपोष्यवर्गः ॥२७॥

इसके अनंतर सब से प्रथम आप के पास शास्त्रार्थ के लिए राजा सुधन्वा उपस्थित हुआ। परन्तु दैवयोग से पराजित होकर वह भगवान् शंकराचार्य का ही शिष्य बन गया॥ २७॥

दूरे विहाय जिनमार्गमुपेत्य धर्मं
भूपः सनातनमनन्तबलः सकोषः।
सर्वं समर्पयदमुष्य गुरोः पुरस्ता-
त्सास्त्रः कलत्रबहुपुत्रयुतः सपत्रः ॥२८॥

विजित का धनादिक भी विजित ही माना जाता है, इस नियम से राजा सुधन्वा ने अपना सब धन और जन आचार्य के चरणों में अर्पण कर दिया॥ २८॥

सर्वोन्नतं परिवृढं चरणप्रपन्नं
संवीक्ष्य तत्करदभूपकुलावतंसाः।
सामन्तभूपतिवरा अपि जैनमार्गं
त्यक्त्वाऽऽशु शङ्करगुरोश्चरणं समापुः ॥२९॥

बड़े राजा को उन आचार्यचरणों का शिष्य देख कर अन्य छोटे छोटे राजा भी अपना सिद्धांत छोड़कर उनके ही शरण में उपस्थित हुए ॥२९॥

धर्मप्रमर्दकमठान्प्रसभं निपात्य
धर्मप्रवर्धकमठप्रभवेण सर्वम्।
जैनागमं गतमदं दशभिः समाभिः
कृत्वा भुवो बहुभरं शमयाम्बभूव ॥३०॥

आपने उस समय के अनेक मठों को वैदिक-धर्म-प्रचारक मठ नियत करके दस वर्ष के अंदर समस्त भूमंडल में सनातन धर्म का प्रचार कर दिया ॥ ३०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मात्मकं जगदिदन्न ततोऽतिरिक्तं
भूवायुवह्निजलखात्मकमस्य रूपम् ।
मायाप्रपञ्चपरिचायकमन्यदस्मा-
दद्वैतमेव शिवमित्यवदत्स भूयः ॥३१॥

जगत् ब्रह्ममय है, ब्रह्म से भिन्न नहीं है, पृथिवी-जल-तेज-वायु-आकाश ये सब भी मूर्तामूर्त भेद से ब्रह्म ही हैं, माया का प्रपंच मिथ्या है; इस लिए एक अद्वैतवाद ही वैदिक है; यही आपने सब को उपदेश दिया ॥ ३१ ॥

वेदोक्तमास्तिकजनव्रजसेवनीय-
मद्वैततत्त्वमिह यो मनुजो न वेत्ति ।
किं वेत्ति भूमिवलये स समानधर्मा
कान्तारमध्यगतशुष्कमहीरुहेण ॥३२॥

वेदमंत्रों द्वारा प्रतिपादित आस्तिकजन-वेद्य अद्वैततत्त्व को जो नहीं जानता है वह वन में सूखे हुए वृक्ष के समान जानता ही क्या है ॥३२॥

भूमण्डले निगममार्गसमर्थनाय
भर्गं समागतमवेक्ष्य यथावकाशम् ।
धर्मावनाय निधनोऽपि समानकाले
तत्राजगाम धृतमण्डनमिश्रवेशः ॥३३॥

इस प्रकार वैदिक मार्ग के समर्थन में लगे हुए भगवान् शंकर को देख कर ब्रह्माजी ने भी उसी समय अवतार ले लिया ॥ ३३ ॥

एतत्पुरोगतजिनागमपण्डिताना-
मालोक्य दुर्गतिमलं बहुवेपनेन ।
प्रासादपङ्क्तिषु गतो ललनागणोऽपि
वेगाज्जहास विदुषान्तु कथैव काऽऽसीत् ॥३४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इनके समक्ष में आए हुए नास्तिकों की दुर्दशा देख कर प्रासादों पर बैठे हुए ललनागण भी हंसने लगे औरों की तो बात ही क्या ? ॥ ३४ ॥

अस्याधिपस्य वचसां बहुभिः प्रचण्डैः
शिष्यैरनेकनिगमागमलब्धतत्त्वैः ।
सन्तर्जिता जिनमतानुगताः प्रकामं
वेगाद्ययुर्बहुवनानि वनानि भीताः ॥३५॥

इनके अनेक प्रचण्ड शिष्यों द्वारा फटकारे हुए बड़े बड़े नास्तिक विवाद में निरुत्तर हो कर बन को चले गए ॥ ३५ ॥

जैनैरधःकृतमनेकविशालशाखं
वेदं तदुक्तबहुयज्ञपरम्पराभिः ।
सर्वत्र भूमिवलये विलसत्पताकं
भूयश्चकार बलवानयमेव विज्ञः ॥३६॥

नास्तिकों ने जिस अनंतशाख वेद-वृक्ष को उस समय में नष्टभ्रष्ट कर दिया था उसी अनंतशाख वेद-वृक्ष को आपने यज्ञों द्वारा फिर हरा भरा कर दिया ॥ ३६ ॥

अस्यावसानसमयात्परतः पृथिव्यां
भक्तानुकम्पनकृते निजनामधन्यः ।
विष्णोरनुग्रहवशादुरगाधिपः श्री-
रामानुजो जगति सम्भवनं प्रपेदे ॥३७॥

इनके समय के अनंतर भूमंडल में भक्तजनों के उद्धारार्थ शेष के अवतार स्वनामधन्य श्रीरामानुजाचार्यजी महाराज प्रकट हुए ॥ ३७ ॥

अस्यावतारसमये पुरुषोत्तमस्य
लोकोपकारकमनोहरभव्यमूर्तेः ।
दूर्वाङ्कुरोद्गमनमञ्जुमिषादमन्दं
हर्षाङ्कुरोपचितिमाप जवेन भूमिः ॥३८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आपके जन्म काल में औरों की बात तो जाने दीजिए पृथिवी भी दूर्वांकुरोद्गमन के बहाने से रोमाङ्कुरोद्गमन का रसास्वदन करने लगी ॥ ३८ ॥

कस्तस्य वर्णनमलं विदधातु लोके
वंशस्य कीर्तिधवलीकृतदिङ्मुखस्य ।
यस्मिन्नशेषसुषमाविशदे निसर्गा-
द्रामानुजो जनिमवाप निरस्तपापः ॥३९॥

कीर्तिधवलीकृत-दिङ्मुख उस वंश का कौन पूर्ण रूप से वर्णन कर सकता है जिसमें पूज्यपाद भगवान् रामानुजाचार्यजी अवतीर्ण हुए ॥३९॥

आस्तिक्यमूर्तिमजरामरकीर्तिमेनं
रामानुजं समवलोक्य विवृद्धबोधम् ।
शङ्काकुलानि भुवि नास्तिकमण्डलानि
तूर्णं रमापतिपदार्चनमन्वगच्छन् ॥४०॥

आस्तिकता के मूर्तिमान् विग्रह श्रीरामानुजाचार्यजी को देख कर शंकाग्रह-ग्रस्त नास्तिकों के समूह स्वयं भगवान् के भक्त बन गये ॥४०॥

अस्योदयेन भुवने मनुजोत्तमस्य
रामानुजस्य विलयं प्रगतोऽतिमात्रम् ।
दैवात्पुनर्जनिमवाप तदीयकाले
भक्तिक्रमो भगवदर्चनवर्णनाभिः ॥४१॥

आपके अवतार लेने से पहले भारत में जो भक्तिमार्ग लुप्तप्राय हो गया था वह आपके प्रभाव से फिर भी संसार में चमक उठा ॥४१॥

भक्तिं विना भगवतो भुवनेश्वरस्य
व्यर्थं जनुर्जनिभृतां जननीजनेषु ।
दुःखाय तद्भगवदर्चनमेव मुख्यं
यस्यायमेव विजयध्वनिरुत्थितोऽभूत् ॥४२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवान् की भक्ति के बिना संसार में मनुष्य का जन्म केवल माता को कष्ट पहुँचाने के लिए है इसलिए मनुष्य को भगवद्भक्ति करनी चाहिए। आपका सब के प्रति यही उपदेश था ॥ ४२ ॥

द्वैतं विना भगवतो जगदीश्वरस्य
सेवाविधिः कथमपास्य च तं प्रशस्तम्।
भक्तिः क्व तद्विरहितस्य कुतो जगत्यां
बन्धावकर्तनमदो मतमस्य दिव्यम् ॥४३॥

द्वैतभाव के बिना भगवान् की सेवा नहीं हो सकती है और बिना भगवत्सेवा के भक्ति का प्रचार नहीं हो सकता है, भक्ति प्रचार के बिना मनुष्यों का भव-बन्ध-छेदन नहीं हो सकता है। यही आपका परम सिद्धांत है ॥ ४३ ॥

कर्मास्ति बन्धफलदं विधिसम्प्रदिष्टं
ब्रह्माहमित्यपि मतं विरसं विभाति।
भक्तैरतो भगवदर्चनदत्तचित्तै-
रुक्तं तथाविधमुपासनमेकमेव ॥४४॥

निगम-प्रतिपादित कर्म बन्धन का कारण है, अद्वैतवाद सर्वसाधारण-वेद्य नहीं है। इस लिए सामान्यजनों के लिए भक्तिमार्ग ही संसार में कल्याण देनेवाला है ॥ ४४ ॥

यज्ञादिकर्मविषये द्विजमात्रदीक्षा
नित्यैव सन्निगदिताऽस्ति यथाऽऽगमेषु।
भक्तौ तथा न विविधार्गलबन्धभेद-
दक्षैरुदारहृदयैर्गदिता विभक्तिः ॥४५॥

यज्ञादि वैदिक कार्यों में जैसा द्विज होने का बन्धन नियत है वैसा भक्तिमार्ग में नहीं है इसमें मनुष्य मात्र को समान अधिकार है ॥ ४५ ॥

विश्वम्भरो निजपदार्पितमानसानां
भक्तिं विलोकयति नैव गुणातिरेकम्।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्तैरतो गुणकथामपहाय दूरे
नानाविधाभिरभितः क्रियतेऽस्य भक्तिः ॥४६॥

भगवान् अपने भक्तों की भक्ति देखते हैं गुण नहीं देखते हैं, इसी कारण भक्तजन गुणों की परवा न कर के केवल भक्ति का ही आदर करते हैं ॥ ४६ ॥

नो जातिबन्धनमिहास्ति न पारवश्यं
विद्यादिसद्गुणगणस्य न रूपराशेः ।
द्रव्यस्य नापि वयसो न बलस्य विष्णो-
र्भक्तिक्रमे नियमितः परमोऽनुरागः ॥४७॥

इस भक्तिमार्ग में न तो जातिबंधन है, न विद्या आदि सुन्दर गुणों की आवश्यकता है, इसमें तो केवल परम अनुराग ही अपेक्षित है ॥४७॥

अव्याजतो भगवतश्चरणारविन्दे
यः प्रेरयत्यनुपदं मनुजान्तरङ्गम् ।
सत्त्वातिरेकसुभगः परमोऽनुरागो
नामान्तरं भजति भक्तिरितिप्रसिद्धम् ॥४८॥

भगवच्चरणों में अहेतुक प्रेम का जो उद्रेक होता है वही नामांतर में भक्तिरूप को प्राप्त कर लेता है ॥ ४८ ॥

आचार्य एष भगवानिति सम्यगुक्त्वा
रामानुजो भगवदर्चनमुख्यमार्गम् ।
संरक्षितुं विपथगानपि शिक्षितुन्त-
द्रामानुजं मतमुदारमतिस्ततान ॥४९॥

इस प्रकार आपने मनुष्यों को समझाकर संसार में भक्तिमार्ग की रक्षा के लिए रामानुज संप्रदाय स्थापित किया ॥ ४९ ॥

रामानुजात्परतरं भगवन्निदेशा-
त्तैलङ्गभूसुरपरम्परयाऽवतीर्णः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्प्रत्यवस्थितिमितो नगरोदरेषु
प्राबल्यमाप भुवि वल्लभसम्प्रदायः ॥५०॥

आप के अनंतर भगवान् की दया से तैलंग ब्राह्मणपरंपरा में प्रवृत्त वल्लभ संप्रदाय का अवतरण हुआ जिसका दक्षिण भारत में अधिक प्रचार है ॥ ५० ॥

अस्मिन्महामहिमवल्लभसम्प्रदाये
रूपान्तरेण भगवाननलः प्रचण्डः ।
धर्मोपदेशनकृते मनुजव्रजेषु
विस्पष्टमाविरभवद् द्विजवर्यवंशे ॥५१॥

इस वल्लभ संप्रदाय के प्रवर्तक धनंजयावतार श्रीवल्लभाचार्यजी महाराज तैलंग देशमें लक्ष्मणभट्ट के यहाँ अवतीर्ण हुए,यह बात प्रसिद्ध है॥५१॥

कैशोरभावगतसुन्दरनन्दसूनो-
र्नानाविधानि मधुराणि विचेष्टितानि ।
अत्यादरेण भुवि वल्लभसम्प्रदाये
दीक्षामुपेत्य विधिनाऽविरतं क्रियन्ते ॥५२॥

किशोरावस्था में विद्यमान श्री नंदनंदन जी का तदवस्थोचित अनेक भावों से समर्चन करना ही आपका प्रधान सिद्धांत है ॥ ५२ ॥

आत्मार्पणं भगवतः पदयोः पुरस्ता-
च्चित्तार्पणं तदनु भक्तिसमुद्भवेन ।
द्रव्यार्पणं निगदितं निजसम्प्रदाये
श्रीवल्लभार्यचरणैः शरणैर्जनानाम् ॥५३॥

इस संप्रदाय में भगवान् के लिए सबसे प्रथम शरीर, तदनंतर मन, उसके अनंतर धन अर्पण करना नियत है ॥ ५३ ॥

सर्वात्मकस्य जगतामधिपस्य येन
सर्वात्मना न विहिता पदयोः सपर्या ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं तेन भूमिवलये जनिमेत्य लब्धं
भक्तेन भक्तिमयमार्गविडम्बकेन ॥५४॥

सर्वात्मक भगवान् का जिस भक्त ने सर्वात्मभाव से समर्चन नहीं किया उस भक्त ने भक्तिमार्ग का रहस्य कुछ भी न समझा ॥ ५४ ॥

यद्यद्विभोश्चरणसेवनतः प्रलब्धं
तत्तन्न मे भगवतः किल तत्समग्रम् ।
मत्वेदमात्मनि जनेन समर्पणीयं
सर्वस्वमेव रभसाज्जगदीश्वराय ॥५५॥

जो पदार्थ भगवान् की कृपा से प्राप्त हुआ है वह भगवान् का ही है हमारा नहीं, यह समझ कर भक्त को भगवान् के लिए अपना सर्वस्व अर्पण करना चाहिए ॥ ५५ ॥

कर्ताऽहमस्मि सुकृतस्य तथाऽस्मि भोक्ता
धन्योऽहमस्मि गुणवानहमस्मि लोके ।
यस्येदृशः प्रतिपदं हृदयेऽस्ति गर्वः
किन्तस्य चित्तपथमेष्यति भक्तिमार्गः ॥५६॥

मैं सुकृत का कर्ता हूँ, उसके फल का भोक्ता हूँ, धनवान् हूँ, गुणवान् हूँ, इस प्रकार का जिसको गर्व है वह भक्तिमार्ग का तत्त्व नहीं समझ सकता है ॥ ५६ ॥

सर्वं तदेतदिह वल्लभसम्प्रदाये
सर्वात्मना निगदितं करुणामयेन ।
श्रीवल्लभेन हरिभक्तिकथासनाथं
लोकोपकारमनसा न धनापहृत्यै ॥५७॥

इन बातों का रहस्य श्री आचार्यचरणों ने कल्याण करने के लिए कहा है । इसका प्रयोजन धनापहरण नहीं है ॥ ५७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोपीगणानुगतगोकुलसम्प्रसूते-
गोंपालवेषमहितस्य गवि स्थितस्य ।
गोवर्द्धनाचलधरस्य पदारविन्दं
सर्वार्तिनाशनपरं विविधार्तिभाजाम् ॥५८॥

गोकुल में जन्म लेकर गोपी, गोपाल और गोगणों से अनुमत गोवर्द्धन के उठानेवाले गोपाल वेष, गोविंद का अनुगमन ही मनुष्यों का कष्ट दूर करनेवाला है ॥ ५८ ॥

एतन्निबोधयितुमुद्धतभावविद्धा-
न्धर्मप्रचारणकृते निजसम्प्रदायम् ।
संस्थाप्य विष्णुपदवन्दनमात्रकृत्यः
श्रीवल्लभोऽपि भगवानिव सर्वगोऽभूत् ॥५९॥

अभिमानी मनुष्यों को इस बात का उपदेश देने के लिए तथा धर्म मार्ग को सुदृढ़ करने के लिए श्रीवल्लभाचार्यजीने इस संप्रदाय को जन्म देकर अपना लीला विग्रह समाप्त किया ॥ ५९ ॥

श्रीवल्लभात्परतरं भगवन्निदेशा-
द्धर्मप्रवर्धनकृतेऽरुणदेवनाम्नः ।
धर्मोन्नतस्य भवनेऽर्कसमानवर्णो
निम्बार्कदेव इह सत्वरमाविरासीत् ॥६०॥

आपके अनंतर संसार में धर्म की वृद्धि के लिए अरुण देव ज़ी के गृह में अर्कद्युति श्री निंबार्काचार्य जी महाराज अवतीर्ण हुए ॥ ६० ॥

अस्यातिमङ्गलमयप्रथमानकीर्ते-
र्देवांशजस्य भगवन्महिमापरस्य ।
लोकोत्तराणि चरितानि विपक्षभाजां
चेतांसि धर्मविषये निरतान्यकुर्वन् ॥६१॥

आपके लोकोत्तर चमत्कार प्रदर्शक, अनेक आश्चर्यपूर्ण कार्य, विपक्षियों को भी धर्मपरायण बनाने में कारण बने ॥ ६१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्मादनन्तरमनुत्तमभक्तिभावं
भूमण्डलेऽधिकतया विशदं विधातुम् ।
गौराङ्गदेव इति मञ्जुलनामधेयः
श्रीमान्महाप्रभुरिहावतरन्मुनीन्द्रः ॥६२॥

आपके अनन्तर भूमंडल में भक्तिमार्ग को अधिक विस्तृत करने के लिए श्रीगौराङ्ग महाप्रभुजी महाराज अवतीर्ण हुए ॥ ६२ ॥

प्रत्यर्थिभूतबहुपार्थिवकुञ्जराणां
विद्रावणाय हरितुल्यपराक्रमोऽयम् ।
भक्तानुकम्पनपरां भगवत्प्रतिष्ठां
सस्मार चक्रधरशक्तिमनन्तवीर्याम् ॥६३॥

आपने एक बार भक्तिमार्ग-विरोधी अनेक दुष्ट नरेशों को भगाने के लिए भगवान् के सुदर्शन चक्र की शक्ति का स्मरण किया ॥ ६३ ॥

सा वैष्णवी भगवतो विविधास्त्रभूषा
शक्तिस्तदस्य परिपन्थिबलं प्रविश्य ।
दैवाद्विरुद्धपथगानपि देवभक्ता-
न्धर्मैकरक्षणपरानकरोन्महीपान् ॥६४॥

स्मरण करते ही उस वैष्णवी शक्ति ने प्रविष्ट होकर आपके सब शत्रुओं को भगा दिया और रहे सहों को भगवद्भक्त बनाया । आपके जीवन की यह घटना संसार में प्रसिद्ध है ॥ ६४ ॥

एभिर्जगत्यविरतं स्वपरिश्रमेण
विद्राव्य नास्तिकजनानपथप्रवृत्तान् ।
सम्पादितानि विषयेषु मुहुर्विशाल-
कूटानि धर्मपरिरक्षणमन्दिराणि ॥६५॥

इन धर्माचार्यों ने भारत में निरंतर अपने परिश्रम से नास्तिकों को हटा कर सर्वत्र धर्म-मंदिर स्थापित किये ॥ ६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केनापि लोकहितकामनया जनेन
शैवागमानुमतिना शिवपूजकेन ।
देवाधिदेवगिरिजापतिमन्दिराणि
जीर्णानि कालवशतः पुनरुद्धृतानि ॥६६॥

किसी ने लोकहित का शैवागम को बड़ा मान कर पुराने शिव मंदिरों का जीर्णोद्धार कराया ॥ ६६ ॥

विष्णोः समर्चनविधौ नितरां रतेन
केनापि धर्महितकामनया नरेण ।
नानाविधानि पुरुषोत्तममन्दिराणि
भिन्नानि बौद्धसमयेषु नवीकृतानि ॥६७॥

किसी ने धर्म हित की कामना से अनेक प्रकार के विष्णु-मंदिरों का अपने धन से जीर्णोद्धार कराया ॥ ६७ ॥

दाक्षायणीपदसरोरुहपूजकेन
केनापि देशहितकामनयाऽत्र पुंसा ।
आकाशचुम्बिशिखराणि पुरातनानि
गौरीगृहाणि बलतः पुनरुद्धृतानि ॥ ६८ ॥

किसी ने देश हित की कामना से प्राचीन जगदम्बा भगवती के प्राचीन मंदिरों का जीर्णोद्धार कराया ॥ ६८ ॥

केनापि सर्वहितकामनया बुधेन
शौद्धोदनेः परिजनेन विनाशितानि ।
यज्ञस्थलानि वलिचत्वरसुन्दराणि
तत्तत्पुरेषु वलिना पुनराहितानि ॥ ६९ ॥

कर्मकांड के प्रचार में दत्तचित्त किसी आचार्य ने सर्वहित-कामना से बौद्धों के बिगाड़े हुए यज्ञस्थानों को फिर से ठीक कराया ॥ ६९ ॥

सम्पाद्य भूमिवलये निगमोक्तमार्गा-
नित्थं बलेन गुरुभिः किल शङ्कराद्यैः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्यद्यथाविधि बहूपकृतं निसर्गा-
द्धर्मः प्रसन्नहृदयोऽभवदत्र तेन ॥७०॥

इस प्रकार भारत के सब प्रान्तों में बड़े परिश्रम के साथ शंकराचार्य आदि ने धर्म-वृद्धि के सब मार्गों को बना कर सनातन धर्म का जो उपकार किया उससे धर्म अति प्रसन्न हुआ ॥ ७० ॥

धर्मं विलोक्य पुनरुत्थितमद्वितीयं
पापात्मनां निगममार्गविडम्बकानाम् ।
पापप्रचण्डयमदण्डसमुद्गमेन
शोकाकुलानि हृदयानि मुहुर्विचेलुः ॥७१॥

भारत में धर्म का पुनरुत्थान देख कर पापात्माओं के शोकाक्रान्त हृदय यमराज के भय से हिल गए ॥ ७१ ॥

अंशावतारसमुदायसमुद्भवेन
नानाविधप्रमदसम्पदनुगृहीतः ।
धर्मोऽप्यधर्मविजयाय बलं समस्तं
सज्जीचकार विजयध्वनिहर्षिताशः ॥७२॥

अंशावतारों के समुद्भव से समस्तभूमंडल में प्रवृद्ध सनातनधर्म भी अधर्म के जीतने के लिए समस्त साधन एकत्र करके अपनी विजय दुंदुभि बजाने लगा ॥ ७२ ॥

एतावदेव नियमेन समाप्य वृत्तं
प्रातर्वसन्ततिलकेन रसोन्नतेन ।
लक्ष्मीपतेश्चरणपङ्कजपूजनाय
सम्पूर्यते नवरसो नवमोऽत्र सर्गः ॥७३॥

नियमपूर्वक इतना ही वृत्तांत इस सर्ग में लिखकर प्रातःकाल विष्णु भगवान् का पूजन करने से पहले नव-रस-रंजित यह नवम सर्ग समाप्त किया गया ॥ ७३ ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये
धर्माचार्यवर्णनं नाम नवमः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# दशमः सर्गः

अथ भुवि कुपथप्रवर्तकानां
विदलनमात्मनि चिन्तयन्नमन्दम् ।
निजदलबलयोरवेक्षणार्थे
परिषदमादरतश्चकार धर्मः ॥१॥

भूमंडल में कुमार्ग के चलानेवालों का दलन करने के लिए धर्म ने भी अपने दलबल को एकत्र कर अपनी धर्म-परिषद् का संपादन किया ॥ १ ॥

विलसति सविधे चलत्तरंगा
बहुविधपापनिवारणप्रसङ्गा ।
पदनतसचराचरोत्तमाङ्गा
परिषदि यत्र विधेर्वशेन गङ्गा ॥२॥

जिसके समीप देश में चलत्तरंगा भगवती भागीरथी समस्त पापों के नाश के लिए आनंद के साथ मंद मंद बह रही हैं ॥ २ ॥

अनुदिनमरविन्दमञ्जुगुञ्जद्-
भ्रमरपरिभ्रमभीतगोपबाला ।
प्रवहति यमुनाऽपि यत्र साक्षा-
न्मुररिपुनर्तनपूततीरभूमिः ॥३॥

जहां पर श्रीकृष्ण भगवान् के नृत्य से पवित्रतीर श्रीमती कलिंद कन्या भी बड़ी गंभीरता के साथ बह रही हैं ॥ ३ ॥

करधृतकरवालकालदण्ड-
प्रशमितशुम्भनिशुम्भदैत्यवंशा ।
जयति भगवती यदीयपूर्वा-
भिमुखविनिर्गममन्दिरेषु शक्तिः ॥४॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिसके पूर्वद्वार स्थित मंदिर में खड्गधारिणी शुंभ-निशुंभ-विमर्दिनी भगवती देवी साक्षात् विराज रही हैं ॥ ४ ॥

भुवनविरचनापटुर्विहङ्ग-
अगणाविलोकितसर्वलोकवृत्तः ।
वसति यमदिशं समेत्य यस्या-
मधिगतधर्मकथारसो विरिञ्चिः ॥ ५ ॥

जिसके दक्षिण द्वार स्थित मंदिर में समस्त संसार के एकमात्र बनाने वाले परम चतुर हंस-वाहन ब्रह्माजी महाराज विराजमान हैं ॥ ५ ॥

निजशरणमुपागतस्य भीते-
र्विदलनमेव यदीयकर्म मुख्यम् ।
जलनिधितनयापतिः प्रतीच्यां
निवसति यत्र स मन्दिरोदरेषु ॥ ६ ॥

जिसके पश्चिम द्वार स्थित मंदिर में शरणागत जनों का दुःख दूर करनेवाले प्रपन्न-पारिजात भगवान् विष्णुजी आनंद से दर्शन दे रहे हैं ॥ ६ ॥

समविषमकथा न यत्समीपे
त्तणमपि यत्र न शत्रुमित्रभावः ।
स विषमनयनो यदुत्तरस्यां
दिशि निवसत्यपराजितःसमस्तैः ॥ ७ ॥

जिसके उत्तर-द्वार-स्थित मंदिर में सब को समान भाव से देखने वाले विगत-शत्रु-मित्र-भाव भगवान् शंकरजी विद्यमान हैं ॥ ७ ॥

विविधमणिशिलासमुत्थभित्ति-
द्युतिबहुरञ्जितसर्वदिक्प्रदेशे ।
यमवरुणकुबेरशक्रमुख्यै-
रमरगणैरपि या समाश्रिताऽभूत् ॥ ८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मणि शिलाओं से बने हुए जिसके भित्ति प्रदेशों में इंद्र, वरुण, यम कुबेर स्वयं आकर उपस्थित हो रहे है ॥ ८ ॥

इति बहुविधदेवभूषितान्तां
परिषदमास्तरणीयबर्हिपूताम् ।
गणपतिपदवन्दनादशङ्कः
परतरमाविशदादरेण धर्मः ॥९॥

इस प्रकार अनेक देवगणों द्वारा अलंकृत अपने धर्ममंडमें नियमानुकूल गणपति को प्रणाम करके धर्मदेव कुशासन पर बैठ गए ॥ ९ ॥

अधिगतमवलोक्य वर्णधर्म-
प्रथनपरं परिषद्युपस्थितानाम् ।
यदभवदुचितोपचारकृत्यं
तदपि समाहितमानसैर्विलोक्यम् ॥१०॥

वर्णाश्रम व्यवस्थामें एकमात्र व्यवस्थापक श्रीधर्मदेव के आने पर सभा में जो जो समयोचित कार्य हुआ वह भी पाठकों को देखना चाहिए ॥१०॥

अजिनसुवसनः समेखलाङ्गो
भसितविभूषितविग्रहः सदण्डः ।
द्विजवटुरशिवापनोदनार्थं
परिषदि कोऽपि ऋचाऽच्चयं पपाठ ॥११॥

सब से प्रथम मृगचर्मधारी, मेखला और दंड धारण किये हुए एक द्विज बालक ने आपके समक्ष में आकर मांगलिक मंत्रों का पाठ आरम्भ किया ॥ ११ ॥

अधिगुणरणनं सतालबन्धं
बहुविधरागसमुल्लसत्प्रपञ्चम् ।
अनुगतपदमूर्च्छनं तदग्रे
विधृतलयं लघु साम कोऽप्यगायत् ॥१२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किसी ने आपके समक्ष में वीणा बजाते हुए स्वर, ताल, और मूर्छना समेत सामवेद का वामदेव्यगान करना आरंभ किया ॥ १२ ॥

अभिचरणपरम्परासनाथं
बहुविधभूतकथं समन्त्रतन्त्रम् ।
अवददतितरामथर्ववेदं
लघुलघु कोऽपि पुरःस्थितोऽस्य विप्रः ॥१३॥

किसी ने आपके समक्ष में आकर अभिचार-मंत्र-पूर्ण अथर्ववेद का बड़े आनंद के साथ पाठ करना आरंभ किया ॥ १३ ॥

विधिमयवचनामृतस्वरूपं
शतपथगोपथसामताण्ड्यभिन्नम् ।
परमपुरुषहृत्प्रतिष्ठितार्थं
मुदितमनाः पुरतोऽस्य कोऽप्यगादीत् ॥१४॥

किसी ने आपके पास में बैठ कर शतपथ, गोपथ, साम और ताण्ड्य ब्राह्मणों का पाठ करना आरंभ किया ॥ १४ ॥

न भवति विमलाशयः पृथिव्यां
पठनमृते बहु विश्रुतोऽपि यस्य ।
तमनुगतकथं पुराणवेदं
विशदमतिः कथयाम्बभूव कश्चित् ॥१५॥

जिनके अवलोकन के बिना पंडित भी संसारिक विषयों में चतुर नहीं बनता है उन पुराण वेदों का किसी ने आपके समक्ष में पढ़ना आरंभ किया ॥ १५ ॥

कथमधिवसतिः पुरा युगानां
कथमधुनाऽस्ति परिस्थितिश्च तेषाम् ।
इति कथनपरं पुरो बभाषे
प्रमदवशादितिहासमस्य कश्चित् ॥१६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किसी ने सृष्टिक्रम का औत्तराधर्य बतानेवाले इतिहास वेद को हाथ में लेकर आपके समक्ष में सुनाना आरंभ किया ॥ १६ ॥

इति निगमकथाप्रदत्तकर्णं
सदसि विलोक्य सनातनं महीपम् ।
दम इति निजनामधेयमुक्त्वा
बहुविदितोऽपि तमादराद्ववन्दे ॥१७॥

इस प्रकार वेदवेदांगों के श्रवण में दत्तचित्त धर्मदेव को सभा में देख कर सबसे प्रथम दम ने अपना नाम कह कर पहले प्रणाम किया ॥ १७ ॥

नुतपदकमलो नतोत्तमाङ्गः
परिषदि तत्र पुरः स्थितो दमोऽयम् ।
निजपरिचयदानपूर्वकन्तं
नृपतिमनुत्तमवर्णमेवमाह ॥१८॥

प्रणाम कर के अनंतर नत-मस्तक दम ने पहले अपना परिचय दिया तदनन्तर अपना वक्तव्य इस प्रकार आरंभ किया ॥ १८ ॥

अघहर ! भवदङ्गसम्भवोऽहं
दम इति दिव्यगुणं ममाभिधानम् ।
भवदनुगतमानवेषु नित्यं
मम भुवनत्रयविश्रुतो निवासः ॥१९॥

हे भगवान् ! मैं आपका अनुचर हूँ, मेरा नाम दम है, मैं सर्वदा आपके अनुयायियों में निवास करता हूँ ॥ १९ ॥

मम वशमधिगत्य मर्त्यलोके
विलयमुपैति समस्तमिन्द्रियाणाम् ।
व्यभिचरणमलं सदाऽपकर्त्री
मम वसतिर्मनुजे रतीश्वरस्य ॥२०॥

जो मनुष्य मेरे वश में नहीं रहता है वह कदापि व्यभिचार नहीं करता है क्योंकि मैं कामदेव के वेग का सर्वदा विरोध करता हूँ ॥ २० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मम सहवसतौ चकास्ति विद्या
बलमतिवृद्धिमुपैति बुद्धिमान्द्यम् ।
न भजति मनुजो मम प्रसादा-
द्भगवति दत्तमना नरो विभाति ॥२१॥

मेरे सहवास से मनुष्य विद्यावान् और बलवान् बनता है और साथ ही भगवान् में अनुराग भी करने लगता है ॥ २१ ॥

जलहुतवहयोर्यथैकदेशे
सह वसतिर्न यथा तथैव लोके ।
दममनसिजयोर्निसर्गसिद्धं
सहवसनं न-भुवि प्रसिद्धमेतत् ॥२२॥

जिस प्रकार अग्नि और जल एक स्थल में कदापि नहीं रहते हैं उसी प्रकार मेरा और कामदेव का एकत्र रहना सर्वथा असंभव है ॥ २२ ॥

विदितमतिशयेन मन्महत्त्वं
मदनविनिग्रहदत्तमानसेन ।
नयनहुतभुजा यशोऽवशिष्टः
कुसुमशरो विहितस्ततः स तेन ॥२३॥

मेरा महत्त्व सब से प्रथम महादेवजी ने जाना था इसीलिए उन्होंने कामदेव को अनंग बना कर छोड़ दिया ॥ २३ ॥

सहचरमिह मे जितेन्द्रियत्वं
धृतिविरती सहजे नितान्तमैत्री ।
परगुणकथने ममातिमात्रं
तव पदयोरनुराग एव धर्मः ॥२४॥

जितेन्द्रियता मेरी सर्वदा सहवासिनी है, धृति और विरति यह दोनों मेरी सहोदरी बहन हैं । दूसरों का गुण वर्णन तथा आपके चरणों में अनुराग रखना ही मेरा परम धर्म है ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतिनिजगुणवर्णनप्रसक्तं
दममवलोक्य दयालुरेष भूपः ।
बहुविधवचनैः प्रतोष्य सद्य-
स्तमिदमुवाच यथाक्रमं स्ववृत्तम् ॥२५॥

इस प्रकार अपना परिचय पाकर मूकभाव कोप्राप्त हुए दम के प्रति धर्मदेव ने इस प्रकार कथन किया ॥ २५ ॥

अहमलमधुना भवद्विपक्षं
विदलयितुं भुवने बलाद्यतिष्ये ।
विलयमतितरां सपोष्यवर्गं
नयतु भवानपि तत्र कामदेवम् ॥२६॥

मैं अभी आपके शत्रुपक्ष के साथ युद्ध करूँगा उसमें सकुटुंब कामदेव का विध्वंस करना आपका काम होगा ॥ २६ ॥

इति निजदलमुख्यमात्मनिष्ठं
दमसुपदिश्य विमूकतामुपेते ।
परिषदधिपतौ समक्षदेशं
समगमदानतमस्तकः शमाह्वः ॥२७॥

इतना कह कर मूकता को प्राप्त हुए सभापति के समक्ष में आकर दूसरा महारथी उपस्थित हुआ ॥ २७ ॥

पदयुगमधिपस्य सोऽपि नत्वा
विनयपरम्परयाऽभितो निबद्धम् ।
मधुमधुरपदं यथावकाशं
लघु निजगाद यथोचितं स्ववृत्तम् ॥२८॥

उसने भी विनयपूर्वक पहले प्रणाम कर के मधुर शब्दों में जो अपना परिचय दिया वह इस प्रकार है ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शम इति निगदन्ति मां मुनीन्द्राः
शमनमलं विपदां मदीयकृत्यम् ।
निजपदनिरतानहं समस्ता-
न्भवदनुगान्प्रकरोमि लोकमध्ये ॥२६॥

संसार में मेरा नाम शम है, विपत्तियों का शमन करना ही मेरा परम कर्त्तव्य है, मैं अपने भक्तों को सर्वदा आपके चरणों में अनुरक्त करता हूँ ॥ २९ ॥

निवसति करुणा मम प्रदेशे
न भवति कोपकथाऽपि मत्समक्षे ।
सहचरपदवीमनुप्रयाता
मम भुवने विदिताऽस्ति किन्न शान्तिः ॥३०॥

दया सर्वदा मेरे साथ रहती है, क्रोध का नाम तक मेरे पास नहीं रहता है, मेरी सहचरी श्रीमती शांतिदेवी संसार में सर्वत्र प्रसिद्ध है ॥३०॥

तमसि निपतितानहं मनुष्या-
न्भगवदनुग्रहभाजनीकरोमि ।
तव पदशरणं करोम्यधर्मं
निजशरणागतकीर्तिमातनोमि ॥३१॥

मैं अपने प्रभाव से तमोगुणी मनुष्यों को भी भगवत्प्रेमी बनाता हूँ। अधर्म को सर्वदा आपके शरण में भेजता हूँ। अपने भक्त का सर्वत्र यश बढ़ाता हूँ ॥ ३१ ॥

परधनपरदारदत्तदृष्टि-
र्भुवि मनुजो मदनुग्रहेण नूनम् ।
निजधननिजदारयोरपि द्रा-
गननुगतां प्रतियाति सत्त्वमात्रे ॥३२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वदा परधन और परस्त्री में अनुरक्त मनुष्य भी मेरी कृपा से अपने धन और अपनी स्त्री तक का भी मोह छोड़ देता है ॥ ३२ ॥

उपनिषदनुकूलवृत्तयो मे
सहजतया जगतीतले प्रसिद्धाः ।
प्रतिपदमशिवानि मानवानां
मम करुणावशतः प्रतर्दयन्ति ॥३३॥

उपनिषदों में प्रसिद्ध मैत्री, करुणा, मुदिता, उपेक्षा ये चारों मेरी सगी बहने हैं, जो मनुष्यों को सर्वदा अमंगलों से अलग रखती हैं ॥ ३३ ॥

इति बहु निगदन्तमात्मवृत्तं
शममवलोक्य शमप्रधानवृत्तिः ।
परमकरुणया जगद्धितार्थं
चरणयुगोपनतं तमेवमाह ॥ ३४ ॥

इस प्रकार अपना परिचय देते हुए शम के प्रति धर्मदेव ने इस प्रकार कथन किया ॥ ३४ ॥

भवतु तव जयो विपक्षमध्ये
मम कथनादचिरेण शत्रुवर्ग्यम् ।
जहिहि निजबलेन कोपमेवं
न भवतु तस्य कथा यथाऽत्र लोके ॥३५॥

आप का सर्वत्र विजय हो, मेरे शत्रु पक्ष में विद्यमान क्रोध को आप इस प्रकार नष्ट करें जिससे उसका नाम भी संसार में न रहे ॥ ३५ ॥

इति निजहृदयं निवेदयित्वा
विरतिमिते नियमेन धर्मदेवे ।
सदसि शमदमोपयुक्तवेशः
प्रथितगुणः प्रविवेश तत्र तोषः ॥ ३६ ॥

इस प्रकार अपना प्रयोजन कह कर बैठे हुए धर्मदेव के समक्ष में संतोष आकर उपस्थित हुआ ॥ ३६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमुपगतमवेक्ष्य साधुवृत्तं
विधिविहितार्चनदत्तचित्तवृत्तिम् ।
परिषदुपगतः समस्तलोकः
प्रणिपतनेन यथाक्रमं ववन्दे ॥ ३७ ॥

साधुवृत्त संतोष को सभा में आया हुआ देखकर सभा के समस्त सदस्यों ने उसके प्रति प्रणाम किया ॥ ३७ ॥

अतिथिजनहितामयं सपर्यां
परिवृढतः समवाप्य तुष्टिमाप्तः ।
समयसमुचितं प्रभोः पुरस्ता-
दिदमितिवृत्तमुवाच भावपूर्णम् ॥ ३८ ॥

अतिथिजनोचित सत्कार को धर्मदेव से प्राप्त करके प्रसन्नचित संतोष ने अपना वक्तव्य इस प्रकार उपस्थित किया ॥ ३८ ॥

अहमहमिकयाऽहमत्रलोके
तव परिपन्थिनमेकवारमेव ।
त्वयि निरतमतिं करोमि पूर्वं
हरिचरणानुरतिं तनोमि पश्चात् ॥ ३९ ॥

मैं इस संसार में पहले तो आपके शत्रु को आपका शरणागत दास बनाता हूँ फिर अपना मन भगवान् के चरणों में लगाता हूँ ॥ ३९ ॥

मदनुगमनुजं न चौरदण्डो
व्यथयति नैव कदापि राजदण्डः ।
हुतवहविहितोऽपि तत्र दण्डः
प्रशममुपैति यथोत्तरं प्रचण्डः ॥ ४० ॥

मेरे वश में आए हुए मनुष्य को संसार में चौरदंड, राजदंड, अग्निदंड और यमदंड कोई भी आकर नहीं सताता है ॥ ४० ॥

मयि धृतमतयो मदान्धराज्ञां
मलिनमुखानि कदापि नेक्षयन्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिमगिरिशरणं समेत्य दैवा-

न्नगतनयापतिमीश्वरं भजन्ति ॥ ४१ ॥

मुझमें अनुराग रखनेवाला मनुष्य मदांध राजाओं का मुख कदापि नहीं देखता है प्रत्युत गिरिगुहाओं में बैठ कर गौरीपति का सर्वदा पूजन करता है ॥ ४१ ॥

अहमधिकतया वसामि यस्मि-

न्न स मलिनं वसनं बिभर्ति लोके ।

बहुघृतमशनं कदापि लब्ध्वा

न चपलतामुपयाति तादृगर्थे ॥ ४२ ॥

मुझ में प्रेम रखनेवाला मनुष्य कदापि मलिन वस्त्र नहीं रखता है और अच्छा भोजन मिलने पर भी उसके लिए कदापि लालायित नहीं होता है ॥ ४२ ॥

स्तुतिमितिवचनैर्निजां महिम्नः

स लघु समाप्य यदा मुदाऽवतस्थे ।

परिषदधिपतिस्तदा तमेवं

हृदयगतं विनिवेदयाम्बभूव ॥ ४३ ॥

इस प्रकार अपनी महिमा समाप्त करके बैठे हुए संतोष के प्रति धर्म-देव ने उस प्रकार कथन किया ॥ ४३ ॥

प्रधनमतिबलेन वैरिणाऽरं

मम भविता भवताऽपि तत्र लोभः ।

अशिथिलकरणेन दारणीयो

भवतु यथोभयतः स नष्टदर्पः ॥ ४४ ॥

मेरा अब अत्यंत प्रबल शत्रु से युद्ध होने वाला है उसमें आपको बल-पूर्वक लोभ का नाश करना होगा ॥ ४४ ॥

इति विशदपदं वदत्यमन्दं

परिषाद तत्र मुदैव देवदेवे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविदितगतिरागमत्तदानी-
मशिथिलसत्त्वधनो जवाद्विरागः ॥ ४५ ॥

इतना कह कर विश्राम को प्राप्त हुए धर्मदेव के समक्ष में अकस्मात् वैराग्य उपस्थित हुआ ॥ ४५ ॥

द्रुमदलवसनं विसृष्टवेशं
सपदि पुरोगतमेनमाशु दृष्ट्वा ।
हृदयमतितरां सदोगतानां
विरतिमवाप निजेऽपि पोष्यवर्गे ॥४६॥

अत्यंत साधारण भाव से उपस्थित बल्कल वस्त्र पहने हुए वैराग्य को देख कर सभासदों का मन भी एक साथ विरक्त होगया ॥ ४६ ॥

अतिकुशलमयं विलोक्य धर्मं
विरतिकथासु यथाबलं प्रवृत्तम् ।
मुनिजनविदितः प्रशान्तवाचा
सदसि तमाह यथावकाशमेवम् ॥४७॥

सभा में विद्यमान धर्मदेव को चिंतित देख कर मुनिजन-प्रशस्त वैराग्य ने अपना कथन इस प्रकार आरंभ किया ॥ ४७ ॥

जनहृदयनिवास ! मे निवासः
प्रबलतपोधनचित्तमन्दिरेषु ।
भुवनविदित एव साधुसङ्गो
विषयकथाविरतिर्मम स्वभावः ॥४८॥

भगवन् ! मैं सर्वदा तपस्वी जनों के हृदय में रहता हूँ, साधु-समागम तथा विषयों से विराम मेरा स्वाभाविक धर्म है ॥ ४८ ॥

अतिगहनवनोदरप्रविष्टाः
प्रकृतिविकारससारमोचयन्तः ।
धनगृहपरिवारनष्टरागा
मम भुवने विजितेन्द्रियाः सखायः ॥४९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बन में रहने वाले, संसार से विरत, अपने जन धन आदि मे नष्ट-राग तपस्वी जन ही संसार में मेरे साथ मित्रता रखते हैं ॥ ४९ ॥

नहि सुतवचने ममानुरागो
न च वनितावदनाम्बुजप्रसक्तिः ।
न पितरि न च मातरि प्रवृत्ति-
र्भुवि विचराम्यहमद्वितीय एव ॥ ५० ॥

मेरा अनुराग न पुत्र में है, न अपनी स्त्री में है, और न माता पिता आदि मेंहै । इसी कारण मैं संसार में सर्वदा अकेला ही विचरता रहता हूँ ॥५०॥

निगमचरमसीम्नि यत्प्रदिष्टं
जगदधिपस्य महत्तरं चरित्रम् ।
तदतिविमृशतां ममानुगानां
न हृदि समुत्थितिमेति विश्वरागः ॥ ५१ ॥

[असङ्गोऽयं पुरुषः] ऐसा जो वेदांत में कहा है उस पर विचार करने वाले मेरे सहचरों का संसार में कदापि अनुराग नहीं होता है ॥ ५१ ॥

जनिमृतिमयचक्रपीडितानां
भगवदनुग्रहपूतमानसानाम् ।
समुदितबहुपुण्यपण्यभाजां
हृदि भवति प्रबलो ममानुरागः ॥ ५२ ॥

आवागमन के चक्र से पीड़ित भगवद्भक्त पुण्यशाली मनुष्यों के हृदय में ही मेरा अनुराग उत्पन्न होता है ॥ ५२ ॥

जडभरतवदत्र विश्वमध्ये
जनकमहीपतिवद्विदन्ति ये माम् ।
शुकवदिह न ते पतन्ति बन्धे
ध्रुवमुनिवत्परमं पदं प्रयान्ति ॥५३॥

जड़ भरत और जनक के समान जो मुझको पहचानते हैं वे शुक के समान संसार में न पड़ कर ध्रुव के समान मोक्ष पाते हैं ॥ ५३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति विमलचरित्रमादरेण
श्रवणपुटेन निपीय तस्य रूपम् ।
कमलविशदलोचनः स दृष्ट्वा
तदुचितमेव पुनस्तमाह वाक्यम् ॥ ५४ ॥

इस प्रकार वैराग्य का विमल चरित्र और तदनुकूल वेष भी देख कर धर्मदेव ने उनके प्रति इस प्रकार कहा ॥ ५४ ॥

अविदितमिह किं तवात्र लोके
बहुविदितस्तव यो ममातिशत्रुः ।
अचिरमुपगते मदीयजन्ये
लघु भवतैव निगृह्यतां स मोहः ॥ ५५ ॥

आपको यह तो विदित ही है कि मेरा अधर्म के साथ बड़ा भारी युद्ध होनेवाला है, उसमें आप मोह का गर्व विध्वंस करें ॥ ५५ ॥

अवसितिमिदमुत्तमं न याव-
त्कथनमवापदवारितप्रवेशम् ।
सदसि पदमदात्किमप्यपूर्वं
तदवधि सत्त्वमनुत्तमं जवेन ॥ ५६ ॥

इस प्रकार कथन करते करते जब तक धर्मदेव की बात भी पूरी न होने पाई तब तक सभा में ज्ञान आकर उपस्थित हुआ ॥ ५६ ॥

तदपि विधियुतामुपेत्य पूजां
निजनृपतेः पुरतो निविष्टदेहम् ।
यदतिनिभृतमादरादवोच-
त्तदविरतं विनिवेद्यते मयाऽद्य ॥ ५७ ॥

उसने भी सभापति से उचित सत्कार पाकर जो भावपूर्ण कथन आरंभ किया उसको हम पाठकों के समक्ष ज्यों का त्यों उपस्थित करते हैं ॥५७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मतिरिति मम नामधेयमेके
भुवि निगदन्ति तथोपलब्धिमन्ये ।
तदितरमनुजा वदन्ति बुद्धिं
मनुजमनःसु वसाम्यहं महत्त्वात् ॥ ५८ ॥

आपने कहा मेरा नाम ज्ञान है। कोई कोई आचार्य मुझको बुद्धि, उपलब्धि, इन दो नामों से भी याद करते हैं [ बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ] ॥ ५८ ॥

अहमतिकरुणावशेन यस्मि-
न्मनुजवरे निविशामि सर्वमान्यः ।
स भवति भुवने विशालकीर्ति-
स्तव पदयोरनुरागवानमन्दः ॥ ५९ ॥

जिस मनुष्य में मैं निवास करता हूँ वह लोक में सर्वमान्य तथा विश्रुतकीर्ति होता है और आपके साथ अत्यंत प्रेम करता है ॥ ५९ ॥

सकलजगदधीशपादपद्म-
प्रणतिपरायणतामुपेत्य दैवात् ।
अनुभवति सदैव मुक्तिसौख्यं
मम चरणामृतपानतो मनुष्यः ॥ ६० ॥

मेरे चरणामृत के पान से मनुष्य संसार में भगवद्भक्त होकर अनंतकाल तक मुक्ति के सुख का आनंद लेता है ॥ ६० ॥

इति निजमहिमानमावदन्तं
सदसि महोच्चपदे निवेशिताङ्गम् ।
तमतिमतिमतां मतं मतङ्गा-
लसगमनं नृपतिर्मुदा बभाषे ॥ ६१ ॥

इस प्रकार अपना परिचय देते हुए ज्ञान के प्रति उनके वक्तव्य समाप्त होने पर धर्मदेव ने इस प्रकार कहा ॥ ६१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदलय निगमागमैकमूर्ते !
सपदि ममातिविपत्त्वतामुपेतम् ।
सपरिजनमरं सपोष्यवर्गं
मम कथनेन हृदिस्थितेन मृत्युम् ॥६२॥

मेरे शत्रुपक्ष में मित्रभाव को रख कर जो आपका शत्रु मेरे ऊपर आक्रमण करना चाहता है उस मृत्यु को आप समूल नष्ट करें ॥ ६२ ॥

इति बहुरमणीयवर्णगर्भं
प्रवदति राजनि वाचिकं प्रशस्तम् ।
बुधगणनमितो विवेकनामा
परिषदमागमनादलञ्चकार ॥६३॥

इस प्रकार ज्ञान के प्रति अपना संदेश कहते हुए धर्मदेव के समक्ष में विवेक महारथी आकर उपस्थित हुए ॥ ६३ ॥

पदपतितमवेक्ष्य पारिषद्यं
परिजनमागमनप्रजातमोदम् ।
नरपतिमपि देशकालयोग्यं
स बहु विमृश्य यथाक्रमं जगाद ॥६४॥

उन्होंने भी सभासदों को सर्वथा नम्र देखकर धर्म के समक्ष जो कथन किया वह इस प्रकार है ॥ ६४ ॥

मयि निवसति भूतले विवेके
कथमधिकारकथापराङ्मुखत्वम् ।
अधिभुवि जनजातमेष्यतीति
त्वमपि विचारय चारु चित्तमध्ये ॥६५॥

भूतल में मेरा आधिपत्य होने पर कोई भी मनुष्य अनधिकार चेष्टा में पदार्पण नहीं कर सकता है यही मेरा पहला महत्त्व है ॥ ६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनुचितमुचितं विचार्य कृत्यं
पदमपि ये विचलन्ति नैव धर्मात् ।
कथमपि मनुजेषु तेषु नित्यं
निजगुणगौरवतश्चराम्यशङ्कम् ।।६६।।

जो मनुष्य उचित एवं अनुचित का विचार करते हुए अपने धर्म से नहीं हटते हैं उनके पास मैं सर्वदा रहा करता हूँ ।। ६६ ।।

परगुणकथने परानुरागे
परमसुहृज्जनसङ्गमे यथावत् ।
गुरुजनपदवन्दने मनुष्यो
भवति रतो मदनुग्रहेण भूयः ।।६७।।

मेरे अनुग्रह से मनुष्य गुणग्राही, सर्वप्रेमी, सज्जन-संगी, गुरु-भक्त तथा परोपकारी होता है यह बात सर्वत्र प्रसिद्ध है ।। ६७ ।।

प्रथयति भुवने पुराणवेदं
दलयति नास्तिकतामधर्ममूलाम् ।
हरिहरपदयोः करोति पूजां
मयि निरतो मनुजोत्तमः स्वभावात् ।।६८।।

मुझसे अनुराग रखने वाला मनुष्य पुराण वेद को मानता है, और नास्तिक-पन को हटा कर विष्णु और शंकर की पूजा करता है ।। ६८ ।।

अमृतमयपदं प्रशस्तिपद्यं
स्वगतमयं स्वयमेव धर्मगोष्ठ्याम् ।
यदवधि न वदन्विराममागा-
त्तदवधि भूपतिरेनमेवमाह ।।६९।।

इस प्रकार अपना परिचय विवेक अभी पूरा भी न कर पाया था कि धर्मदेव ने उसके प्रति कहा ।। ६९ ।।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवितथमिदमस्ति चेन्महत्त्वं
तव भुवने परिपन्थिनं स्वकीयम् ।
प्रधनमयमखे मदाभिधानं
द्रुतमवपातय पादयोर्मम त्वम् ॥७०॥

यदि आपका यह महत्त्व सच्चा है तो युद्धरूपी यज्ञ में अहंकार को मेरे चरणों में लाकर उपस्थित कीजिए ॥ ७० ॥

इति निजदलमुख्यमात्मवर्गं
तदुचितकर्मपथे निवेशयित्वा ।
प्रमुदितहृदयः स धर्मराजो
विजितमिवाकलयाम्बभूव शत्रुम् ॥ ७१ ॥

इस प्रकार अपने दल के प्रधान प्रधान महारथियों को अपने अपने कर्तव्य में लगा कर धर्मदेव ने अपने शत्रु पर विजय प्राप्त करना सुख-साध्य कर लिया ॥ ७१ ॥

श्रद्धाऽस्ति यस्य महिता महिषी जगत्यां
यस्यात्मजो जगति शर्मपदप्रसिद्धः ।
विश्वासमन्त्रिणि निवेश्य समस्तभारं
विश्वं दधातु नियमेन स धर्मराजः ॥ ७२ ॥

श्रद्धा देवी जिसकी धर्मपत्नी है तथा सुख जिसका आत्मज है, और शम दम आदि जिसके कुटुंबी जन हैं, वह सर्वप्राण धर्मदेव अपने मंत्री विश्वास पर भार छोड़कर विश्व का धारण करे, यही हमारा सर्गान्त में मंगलाशंसन है ॥ ७२ ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये

धर्मबलवर्णनं नाम दशमः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकादशः सर्गः

अथावसरमासाद्य दैवतः समुपागतम् ।
दूतकार्ये समासक्तः कामो धर्मसभामगात् ॥ १ ॥

इसके अनंतर दैवयोग से उपस्थित हुए दूत कार्य में प्रसक्त कामदेव ने अवसर पाकर धर्मदेव की सभा में प्रवेश किया ॥१॥

[ नवभिः कुलकम् ]

स तत्र विजयाशंसासमालिङ्गितविग्रहम् ।
वामभागसमाविष्टश्रद्धापरमसुन्दरम् ॥ २ ॥

एकतो भगवत्पादपद्मसन्दत्तचित्तया ।
हेमाम्बुजसमासीनरमया परिवीक्षितम् ॥३॥

वीणागुणानुरणनप्रवीणकरशाखया ।
भगवत्या सरस्वत्या समालोकितमन्यतः ॥ ४ ॥

आधाराधेयभावेन तद्गताभ्यामहर्दिवम् ।
प्रसादाच्छान्तिकान्तिभ्यां कृतसुन्दरचामरम् ॥ ५ ॥

पर्यायवृत्तिमास्थाय विनताभ्यां पदे पदे ।
धृतातपत्रमानन्दमङ्गलाभ्यामहर्निशम् ॥ ६ ॥

कार्यमात्रसमाविष्टविग्रहाभ्यामनुत्तमम् ।
विवेकातिविचाराभ्यां नुतपादसरोरुहम् ॥ ७ ॥

ज्ञानवैराग्यसन्तोषतपःस्वाध्यायसंयमैः ।
जगद्व्यापकरूपेण सर्वतः परिवेष्टितम् ॥ ८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करुणामुदितामैत्रीधृतिसम्पत्तिवृत्तिभिः ।
सर्वतो भद्रभावेन सेवमानमनुत्तमम् ॥ ९ ॥
वेदवेदाङ्गतत्त्वज्ञैः पुराणागमपण्डितैः ।
गीयमानलसत्कीर्तिमपश्यद्धर्मभूपतिम् ॥ १० ॥

वहाँ पर विजय की आशंसा से युक्त, वाम भाग में श्रद्धा से अलंकृत, लक्ष्मी और सरस्वतीजी के द्वारा उभयतः परिवीक्षित, आधाराधेय-भाव से उसी में विद्यमान शांति और कांति के द्वारा धृतचामर, पर्याय-वृत्ति से आनंद और मंगल के द्वारा धृतातपत्र, कार्यमात्र में प्रसक्त विवेक और विचार से नुत-पद-कमल, ज्ञान-वैराग्य-संतोष-तप-स्वाध्याय और संयम से परिवृत, करुणा-मुदिता-मैत्री-धृति संपत्तियों से आगतजनों का स्वागत करानेवाले, वेदवेदांगतत्त्वज्ञ, पुराणशास्त्र-प्रवीण पंडितों के द्वारा गीयमानकीर्ति धर्मराज को उसने देखा ॥ २-१० ॥

तमद्भुतजगद्व्यापि शासनं बलवत्तरम् ।
सदण्डपातमनमत्कलिदूतः समागतः ॥ ११ ॥
प्रणमन्तमनङ्गन्तमनमन्तं सुरासुरान् ।
हृदयेन समालिङ्ग्य विश्वासः शिवमब्रवीत् ॥ १२ ॥
अनामयं ते विषये राज्ञः कच्चिदनामयम् ।
सवसन्तस्य सरतेस्तव कच्चिदनामयम् ॥ १३ ॥
इत्यनामयसम्प्रश्नपरिपूरितमानसम् ।
विश्वासमब्रवीत्कामो विपत्तनृपमन्त्रिणम् ॥ १४ ॥

जगन्मात्र में शासन है जिनका ऐसे बलवान् धर्मदेव को देख कर उसने पहले साष्टांग प्रणाम किया ॥ ११ ॥ धर्मदेव के लिए प्रणाम करते हुए कामदेव का धर्म-मंत्री ने हृदय से आलिंगन कर इन शब्दों में कुशल पूछा ॥ १२ ॥ कहिए आपके देश में कुशल है ? आपके राजा प्रसन्न हैं ? वसंत और रति के समेत आप तो प्रसन्न हैं ? ॥ १३ ॥ इस प्रकार कुशल प्रश्न करते हुए धर्म-मंत्री के प्रति कामदेव ने कहा ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अमात्यवर्य ! विषये विद्यते कुशलं मम ।
सामात्यस्य ससेनस्य मम राज्ञोऽप्यनामयम् ॥ १५ ॥
स सर्वजगतामीशः साम्प्रतं मम भूपतिः ।
निजसन्देशकथने मामेव विनियुक्तवान् ॥ १६ ॥

हे अमात्य ! मेरे देश में कुशल है। मंत्री एवं सेना के समेत हमारे महाराज भी प्रसन्न हैं ॥ १५ ॥ वर्तमान समय में जगन्मात्र के एकमात्र अध्यक्ष हमारे राजा ने अपना संदेश भेजने के लिए मुझे नियुक्त किया है ॥ १६ ॥

सोऽहं निजस्य नृपतेः शुभनामाक्षराङ्कितम् ।
सन्देशपत्रमादाय भवदन्तिकमागतः ॥ १७ ॥
तदिदं शिवसन्देशभाजनं भवसम्पदाम् ।
पदे पदे वितरणादमङ्गलनिवारणम् ॥ १८ ॥
भावगम्भीरमत्यल्पवर्णमाकृतिसुन्दरम् ।
गृह्यतामिति सम्भाष्य पत्रमस्मै न्यवेदयत् ॥ १९ ॥
पत्रमादाय तद्धस्तात्स धर्मस्य महीपतेः ।
समादेशेन सर्वेषामपठत्पुरतो गतः ॥ २० ॥
यथा समर्पितं तेन यथाऽमात्येन वाचितम् ।
मया तथैव विदुषां पुरस्ताद्विनिवेद्यते ॥ २१ ॥

मैं अपने महाराज का संदेशपत्र लेकर इस समय आपके पास आया हूँ ॥ १७ ॥ कल्याणमय संदेशों का भाजन, संपत्तियों का देनेवाला, भावपूर्ण, अल्पाक्षर, देखने में अति सुंदर यह पत्र लीजिए, इतना कहकर उसने मंत्रीजी को पत्र दिया ॥ १८-१९ ॥ धर्ममंत्री ने भी उससे वह पत्र लेकर धर्म के आदेश से सबके समक्ष उसे पढ़ा ॥ २० ॥ जैसा वह पत्र था और जैसा मंत्री ने उसे पढ़ा, हम भी वैसा ही पाठकों के समक्ष उसे ज्यों का त्यों उपस्थित करते हैं ॥ २१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[ अष्टभिः कुलकम् ]

इतःसमस्तमनुजप्रतिष्ठितनवप्रभः ।
राजराजेश्वराराध्यःसमाराध्यपदद्वयः ॥ २२ ॥
अधर्माभिधसन्मन्त्रिस्कन्धविन्यस्तभूभरः ।
दुर्योधनमहामोहबालव्यजनबीजितः ॥ २३ ॥
बृहस्पतिप्रभृतिभिर्वैतालिकमहोदयैः ।
प्रचारितमहाशंसदुःशासनपरम्परः ॥ २४ ॥
बुद्धचार्वाकनामभ्याममन्दाभ्यामनुत्तमाम् ।
परानुरक्तिरक्ताभ्यान्धृतमञ्जुलचामरः ॥ २५ ॥
प्रतारितमहामन्दमानवव्रजमानिना ।
धृतातपत्रःसानन्दन्दयानन्देन दैवतः ॥ २६ ॥
दम्भानृतबहुद्वेषमदमात्सर्यसैनिकैः ।
सर्वदा सर्वभावेन समाराधितशासनः ॥ २७ ॥
हिंसातृष्णामहासूयानिन्दाकुमतिदूतिभिः ।
प्रत्यहं बहुसम्भारप्रवणीकृतसम्भृतिः ॥ २८ ॥
साशीर्वादं सकुशलप्रश्नमादरपूर्वकम् ।
विज्ञायपति सानन्दं त्वामलं सबलः कलिः ॥ २९ ॥

यहाँ से समस्त मनुष्यों में प्रतिष्ठित, राजराजेश्वर के द्वारा आराध्य-चरणयुगल, अधर्म के ऊपर न्यस्त-कार्यभार, मोह के द्वारा बीजित-बाल-व्यजन, बृहस्पति आदि वैतालिकों के द्वारा गीयमान-कीर्ति-कदंब, बुद्ध और चार्वाक के द्वारा धृतचामर, दयानंद के द्वारा धृतातपत्र, दंभादि सैनिकों से धृत-शासन, हिंसादि दूतियों द्वारा कृत-संभार, सेना समेत, महाराजा कलिदेवजी आदर से आपका कुशल पूँछते हुए आपको संबोधित करते हैं ॥ २२-२९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मम शासनमादेयं भवता धर्मभूभुजा ।
नोचेदियं ग्रहीतव्या महती युद्धघोषणा ॥ ३० ॥
पत्रमेतत्प्रतिद्वन्द्विभूपतेः समुपागतम् ।
वाचयित्वा महामात्यःस्वासने समुपाविशत् ॥ ३१ ॥
स्वासने समुपासीनममात्यं वीक्ष्य तद्गतम् ।
भावं हृदन्तरे कृत्वा धर्मः स्वगतमब्रवीत् ॥ ३२ ॥
त्रेतायुगात्परतरं यथाक्रमसुपागतः ।
प्रसरिष्यति भूलोके कलिनामा युगाधमः ॥ ३३ ॥

या तो आप मेरा शासन स्वीकार करें नहीं तो इस युद्धघोषणा को स्वीकार करें ॥३०॥ इस प्रकार कलिदेव का पत्र पढ़कर धर्ममंत्री नियमानुसार अपने आसन पर बैठ गए ॥ ३१ ॥ इसके अनंतर पत्र का भाव अपने मन में विचारते हुए धर्मदेव ने कुछ अंतरंग विचार किया जो इस प्रकार है ॥३२॥ त्रेतायुग के अनंतर समय की अनुक्रमणिका से भूमंडल पर कलियुग आवेगा ॥ ३३ ॥

पुराणवेदे कथितं पूर्वाचार्य्यैरिदं पुरा ।
अवश्यम्भाविरूपेण सम्भविष्यति भूतले ॥ ३४ ॥
धर्माधर्मौ सुखं दुःखं पुण्यपापे शुभाशुभे ।
युग्मरूपेण सर्वत्र विद्येते दैवयोगतः ॥ ३५ ॥
न बीजनाशःकस्यापि भूतले भवति ध्रुवम् ।
क्रमादुपचयं याति किमप्यपचयं स्वतः ॥ ३६ ॥
निजाधिकारमासाद्य युगपत्सम्प्रवर्तताम् ।
समवस्थानमुभयोर्धर्माधर्मविभेदयोः ॥३७॥

यह बात व्यास आदि महर्षियों ने पुराण वेद में कही है जो अवश्य होकर रहेगी ॥ ३४ ॥ धर्म-अधर्म,सुख-दुःख,पुण्य-पाप, शुभ-अशुभ, इनका ज़ोड़ा पहले से चला आ रहा है ॥ ३५ ॥ संसार में बीजनाश किसी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

का नहीं होता है, किसी का उपचय होता है, और किसी का अपचय ॥ ३६ ॥ अपने अपने अधिकार में दोनों यदि एक समय में रहें तो अनिष्ट होने का भय नहीं है ॥ ३७ ॥

ममाधिकारमाहृत्य स दुर्दान्तःकलिर्युगः ।
विनिपातयितुं लोके मामेव बहु चेष्टते ॥३८॥
एषाऽधिकारमुल्लङ्घ्य तस्य चेष्टा समुन्नता ।
अवश्यं तद्विलोपाय सम्भविष्यति भूतले ॥३९॥
समानभावेऽप्युभयोः पक्षपातो हरेर्मयि ।
मदुद्धारमहोद्योगाद्विस्पष्टमुपलभ्यते ॥४०॥
मम ग्लानौ प्रवृद्धायां भारते निजमायया ।
प्रतिज्ञातं भगवता मदुद्धाराय सङ्गतम् ॥४१॥

आजकल मेरा अधिकार छीन कर कलि मेरे गिराने की चेष्टा कर रहा है ॥ ३८ ॥ अपनी सीमा के बाहर यह जो उसकी अनधिकार चेष्टा है वह उसके गिराने में अवश्य कारण बनेगी ॥३९॥ दोनों के समान होने पर भी मेरे उद्धार में दत्तचित्त होने के कारण भगवान् मेरे पक्ष में हैं ॥४०॥ मेरी ग्लानि होने पर भारत में भगवान् ने मेरे उद्धारार्थ अवतार लेना स्वीकार किया है ॥ ४१ ॥

सहायात्तस्य देवस्य चराचरजगत्पतेः ।
अवश्यम्भाविरूपेण विजयो मे भविष्यति ॥४२॥
एवमादर्शहृदये समाप्य स्वगतं मतम् ।
प्रकाशमब्रवीदेवं तत्र धर्मः सनातनः ॥४३॥
महामात्यादयः सर्वे परिषद्युपसंस्थिताः ।
समयोचितमालोक्य वदन्तु हृदयस्थितम् ॥४४॥
किमत्र काले कर्तव्यं मया धर्माभिमानिना ।
यथा मम प्रतिद्वन्द्वी पापो विलयमाव्रजेत् ॥४५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवान् की कृपा से युद्ध में मेरा विजय अवश्य होगा ॥ ४२ ॥ इस प्रकार अपने हृदय में, अपना विचार समाप्त करके प्रत्यक्ष में धर्म ने कहा ॥ ४३ ॥ सभा में विद्यमान अमात्यादि सभ्यगण ! आप देशकालोचित अपना अपना मंतव्य कहें ॥ ४४ ॥ इस समय हमको क्या करना उचित है किस उपाय से हमको विजय प्राप्त होगा ॥ ४५ ॥

बहुसम्मतमेवास्मिन्मया कर्तव्यमागते ।
समये समयं वीक्ष्य तद्वदन्तु भवद्विधाः ॥ ४६ ॥
देशकालोचितं कर्म ये न कुर्वन्ति मानवाः ।
त एव विलयं यान्ति प्रधने शिशुपालवत् ॥ ४७ ॥
भवन्त एव सुहृदो मम कार्यविधायकाः ।
निजानुमत्या मत्कृत्यं बोधयन्तु यथोचितम् ॥ ४८ ॥
एवमानतभावेन पृच्छन्तं निजभूपतिम् ।
सर्वे दमादयस्तत्र परिषद्येवमब्रुवन् ॥ ४९ ॥

मैं इस समय में बहुसंमत ही कार्य करना उचित समझता हूँ इस लिए समय को देखकर आप सब लोग अपनी अपनी संमति प्रदान करें ॥ ४६ ॥ जो मनुष्य देश काल को देखकर काम नहीं करते हैं वे युद्ध में शिशुपाल की तरह नष्ट हो जाते हैं ॥ ४७ ॥ आप लोग ही मेरे सुहृद हैं इस कारण आप अपनी अनुमति से मेरे कर्तव्य का निर्णय करें ॥ ४८ ॥ इस प्रकार नम्रभाव से पूंछते हुए धर्मदेव के प्रति शम दम आदि सभी महारथों ने एक स्वर होकर कहा ॥ ४९ ॥

प्रभो ! भवन्निदेशाय सर्वे वयमुपस्थिताः ।
सज्जा एव ततो युद्धमधर्मेण विधीयताम् ॥ ५० ॥
एवमाभाष्य नृपतेर्मनोरथपथानुगम् ।
उत्तरं समदुः सर्वे निजानुमतिविस्तृतम् ॥ ५१ ॥
धर्मोऽपि सर्वसम्मत्या निजामात्यपुरःसरः ।
पत्रमुत्तेजनाबद्धमलिखत्तदिदं यथा ॥ ५२ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महाराज! आपकी आज्ञा का पालन करने के लिये हम सब तैयार हैं, इसलिये आप अधर्म के साथ युद्ध छेड़िये ॥ ५० ॥ यह कहकर समस्त सभ्यों ने राजा के प्रति समयोचित अपनी अपनी संमति दे दी ॥ ५१ ॥ धर्मदेव ने भी सर्वसंमति से मंत्री के समक्ष में उनके पत्र का जो उत्तर लिखा वह इस प्रकार है ॥ ५२ ॥

[ नवभिः कुलकम् ]

कदवस्थितिमापन्नं निराधारपरिस्थितिम् ।
निसर्गसिद्धवैधर्म्यदोषदूषितचेतनम् ॥ ५३ ॥
नास्तिकोद्गमनाधारं नास्तिकैः परिवर्द्धितम् ।
नास्तिकप्राणमत्यन्तनास्तिक्यपरिवर्द्धनम् ॥५४॥
पापस्वरूपं पापाढ्यं पापं पापपरायणम् ।
परापवादसन्तुष्टं परनिन्दनतत्परम् ॥ ५५ ॥
कामक्रोधमदाविद्धं लोभदम्भप्रहर्षणम् ।
महामोहं महामायं महामात्सर्यभावितम् ॥५६ ॥
अविवेकमवैराग्यमसन्तोषमनार्जवम् ।
अश्रद्धमक्षमालापमनुदारमरागिणम् ॥ ५७ ॥
कान्त्या विरहितं शान्त्या दूरतः परिवर्जितम् ।
अविचारमनाचारमनाघ्रातपरोदयम् ॥ ५८ ॥
करुणामुदितामैत्रोक्षतोपेक्षपरम्परम् ।
भक्तिवात्सल्यविद्याभिरस्पृष्टहृदयान्तरम् ॥ ५९ ॥
अतिपारुष्यभवनं दयादमविरोधिनम् ।
ज्ञानशून्यमसद्वादं शमशीलनिकृन्तनम् ॥ ६० ॥
मदन्तिकमहायुद्धपरिप्रेषितघोषणम् ।
इतो विज्ञापयामि त्वामहं धर्माभिधो नृपः ॥ ६१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुत्सित परिस्थिति में रहनेवाले स्वयं निराधार, स्वभाव से पापरत, नास्तिकों के पैदा करनेवाले, नास्तिकों द्वारा बढ़े हुए, नास्तिकप्राण, पापस्वरूप, पापपूर्ण, परनिंदनरत, कामादिप्रहर्षण, विवेकादि सद्गुण-रहित, कांतिहीन, करुणाशून्य, अति कठोर दयाविहीन, ज्ञानशून्य मेरे पास पत्र भेजनेवाले हे कलिदेव ! मैं यहाँ से आपको सूचना देता हूँ ॥५३-६१॥

न मया शासनं लोके कदाप्यङ्गीकृतं पुरा ।
तव नाद्य तदिच्छामि भयावहमघानुगम् ॥ ६२ ॥
ममाधिकारे भवता यतः स्वपदमाहितम् ।
अतस्ते दर्पदलनं करिष्याम्यहमुद्यतः ॥ ६३ ॥
शासनं समुपादातुं शुभेच्छा यदि वर्तते ।
मामकीनं तदा वासो भारते तव वर्तताम् ॥ ६४॥
मदीयशासनावज्ञा तवेष्टा यदि भूतले ।
तदाऽङ्गीकुरु युद्धाय मदीयां युद्धघोषणाम् ॥६५॥

मैंने न कभी आपका शासन अंगीकार किया और न अब करने को तयार हूँ ॥६२॥ मेरे अधिकार में जो आपने अनधिकारचेष्टा से पदार्पण किया है इसलिये मैं आपका दर्पदलन करूंगा ॥ ६३ ॥ मेरी आज्ञा यदि आपको माननी है तब तो आप भारत में रहिये ॥ ६४ ॥ यदि नहीं माननी है तो हमारी ओर से भी यह युद्ध-घोषणा-पत्र स्वीकार कीजिये ॥ ६५ ॥

एवमुत्तेजनापूर्णपदविन्याससुन्दरम् ।
मुद्रया मुद्रितं कृत्वा धर्मः पत्रमदात्स्वयम् ॥ ६६ ॥
दलमादाय तरसा गते कामे कलेः पदम् ।
धर्मोऽप्यधर्मनाशाय सस्मार हृदये शिवम् ॥६७॥
स्मृतमात्रः स भगवान्करुणावरुणालयः ।
समेतो ब्रह्मविष्णुभ्यामरं धर्मसभामगात् ॥ ६८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गतान्धर्मसहायार्थं ब्रह्मविष्णुमहेश्वरान् ।
अवेक्षयन्तो दिक्पाला धर्मस्य भवनं ययुः ॥६९॥

इस प्रकार उत्तेजनापूर्ण पत्र लिखकर, उसपर अपनी मुहर करके धर्मदेव ने वह पत्र स्वयं ही दूत को दिया ॥ ६६ ॥ पत्र लेकर दूत के चले जाने पर धर्मदेव ने भगवान् शंकर का स्मरण किया ॥ ६७ ॥ स्मरण करते ही शंकर, ब्रह्मा और विष्णु के साथ धर्मदेव के पास पहुँचे ॥ ६८ ॥ धर्म की सहायता के लिये देवत्रयी को जाता देखकर अष्टदिक्पाल भी धर्मदेव के पास उपस्थित हुए ॥ ६९ ॥

उपागतानयं वीक्ष्य समस्तजगताम्पतीन् ।
उदतिष्ठत्तदातिथ्यदत्तचित्तः स धर्मराट् ॥७०॥
कृतपाद्यः स सर्वेषामर्घ्यपात्रलसत्करः ।
धूपदीपार्तिनैवेद्यैः प्रतिदेवमपूपुजत् ॥ ७१ ॥
नामग्राहं स सर्वेषामभिवादनमाचरन् ।
नवमाध्वीकसदृशैर्वचनैरकरोन्नुतिम् ॥ ७२ ॥
कृताभिवादनाः सर्वे कृतपूजाः कृतस्तवाः ।
समभ्यनन्दन्नाशीर्भिर्धर्ममेनमुपस्थितम् ॥ ७३ ॥

जगन्मात्र के अध्यक्षों को अपने यहाँ आया हुआ देखकर धर्मदेव अपने आसन से उठे ॥ ७० ॥ उठकर यथाक्रम सब का धूपदीपादि से धर्मदेव ने पूजन किया ॥ ७१ ॥ सब को प्रणाम किया, नवीन मधुमधुर वाक्यों से सब का स्तवन किया ॥ ७२ ॥ इस प्रकार शिष्टाचार के अनंतर सब देवताओं ने धर्मदेव को आशीर्वाद दिया ॥ ७३ ॥

अथातिथ्यविधेः पश्चादुपविष्टाः शुभासने ।
प्रमोदामोदितस्वान्ताः सर्वे ते धर्ममब्रुवन् ॥७४॥
स्मृताः किमर्थं भवता सर्वे वयमुपागताः ।
सर्वेषां प्राणभूतेन सर्वास्तित्वविधायिना ॥ ७५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमत्यावश्यकं कार्यं तव साम्प्रतमागतम् ।
समस्तभुवनाधार ! किं ते भयमुपस्थितम् ? ॥७६॥
इत्यादरपरिप्रश्नपूरिताशापरम्परः ।
रसानुविद्धया वाचा स देवानिदमब्रवीत् ॥७७॥

अंत में यथोचित आसनों पर बैठकर उन्होंने धर्मदेव से कहा ॥ ७४ ॥ कहिये, आपने इस समय हम लोगों का स्मरण क्यों किया है ? ॥ ७५ ॥ कौनसा अत्यावश्यक कार्य इस समय आपको करना है ? कौनसा भय आपके समक्ष में उपस्थित हुआ है ? ॥ ७६ ॥ इस प्रकार आदरपूर्वक देवगणों के प्रश्न करने पर धर्मदेव ने उत्तर दिया ॥ ७७ ॥

विदितं भवतामेतदधर्मः पापतत्परः ।
कलेः सहायमासाद्य मामिदानीं प्रबाधते ॥७८॥
स युद्धघोषणां मह्यं दर्पदूषितमानसः ।
युद्धाय दत्तवानुग्रसेनः साऽङ्गीकृता मया ॥७९॥
यथा तत्पक्षपातित्वे कलिरस्ति निसर्गतः ।
मत्पक्षपातिनः सर्वे तथा यूयमिति स्थितम् ॥८०॥
भवद्बलमनुप्राप्य यथाऽहमजितः परैः ।
प्रभवामि महायुद्धे तथा सर्वैर्विधीयताम् ॥ ८१ ॥

यह तो आपको विदित ही है कि आजकल अधर्म ने कलि का आश्रय पाकर मुझको दुर्बल बना दिया है ॥ ७८ ॥ अब उसने बड़े बल के साथ मेरे पास युद्ध की घोषणा भेजी है जिसको मैं आपके बल पर स्वीकार कर चुका हूँ ॥ ७९ ॥ जिस प्रकार अधर्म का पक्ष लेने वाला कलिदेव है उसी प्रकार आप सब मेरे पक्षपाती हैं ॥ ८० ॥ इस महायुद्ध में आपका बल पाकर जिस प्रकार मैं अजेय बनूं वैसा कीजिये ॥ ८१ ॥

एवं निवेद्य हृदयं प्रणतं पुरतःस्थितम् ।
धर्मं देवगणाः सर्वे जगदुः परिषद्गतम् ॥ ८२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवदर्थे वयं सर्वे पूर्वमेव समुद्यताः ।
परन्त्ववसरप्राप्तिप्रतीक्षार्थमवस्थिताः ॥ ८३ ॥
बहोःकालादवसरः सम्प्राप्तो भवदन्तिके ।
समागन्तुं तथा दैवादुपकर्तुं भवद्विधम् ॥ ८४ ॥
इदानीं भवतो युद्धे स्वयं वयमुपस्थिताः ।
करिष्यामो भवत्कार्यं यथाबुद्धिबलोदयम् ॥ ८५ ॥

इस प्रकार अपना अभिप्राय कहकर बैठे हुए धर्म के प्रति देवगणों ने कहा ॥ ८२ ॥ आपके लिये हम सब पहिले ही सहायता देने के लिये तैयार थे, केवल अवसर की ही प्रतीक्षा कर रहे थे ॥ ८३ ॥ बहुत समय के अनंतर अब आपको सहाय देने का अवसर प्राप्त हुआ है ॥ ८४ ॥ हम सब आपके युद्ध में आकर स्वयं आपको सहायता देंगे ॥ ८५ ॥

अस्माकं शक्तयो मूर्ताः सर्वेषां विविधप्रभाः ।
प्रधने ते करिष्यन्ति साहाय्यमरिदुःसहाः ॥ ८६ ॥
काश्चित्प्रतिगमिष्यन्ति शक्तयो भूपतिव्रजम् ।
स्वयमेव गमिष्यन्ति काश्चिद्द ब्राह्मणवंशजान् ॥८७॥
यां यां दिशं समुद्दिश्य भवान्प्रतिगमिष्यति ।
तां तां दिशं प्रयास्यन्ति तत्तद्दिक्पालशक्तयः ॥८८॥
महाकाली कृपाणाग्रे महालक्ष्मीः करद्वये ।
महासरस्वती शक्तिर्जिह्वाग्रे ते भविष्यति ॥ ८९ ॥

हमारी शक्तियाँ मूर्तमती बनकर आपके युद्ध में उपस्थित होंगी ॥ ८६ ॥ कोई हमारी शक्ति क्षत्रियों में जाकर आपका काम करेगी, कोई ब्राह्मणों में प्रविष्ट होकर आपको सहायता देगी ॥ ८७ ॥ जिस जिस दिशा में आप युद्ध के लिये जायँगे उस उस दिशा में उस उस दिक्पाल की शक्ति आपको सहायता देगी ॥ ८८ ॥ आपके कृपाण के अग्रभाग में महाकाली रहेगी, कराग्र में महालक्ष्मी रहेगी और जिह्वाग्र में महासरस्वती रहेगी ॥ ८९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमाभाष्य धर्मज्ञं धर्मराजं तदा शिवः ।
सानुजः सह दिक्पालैस्तत्रैवान्तर्हितोऽभवत् ॥६०॥
दैवं बलं समासाद्य देवशक्तिप्रसादतः ।
द्विगुणोत्साहसम्पत्या शुशुभे धर्मभूपतिः ॥ ६१ ॥
अथादेशाद्भगवतो धर्मराजस्य भूपतेः ।
दध्युः सर्वे पारिषद्यास्तत्र दैवज्ञमीश्वरम् ॥६२॥
सर्वव्यापी स भगवान्सर्वेषां हृदयेशयः ।
धर्मदिग्विजये युक्तं सुमुहूर्तमकल्पयत् ॥ ६३ ॥

इस प्रकार धर्म के प्रति अपना हृद्गत भाव कहकर भगवान् शंकरजी देवगणों के साथ अंतर्हित होगए ॥ ६० ॥ देवताओं के प्रसाद से दैवी शक्ति को प्राप्त करके अब धर्मराज द्विगुण उत्साहसंपन्न हो गए ॥ ६१ ॥ इसके अनंतर धर्मदेव के आदेश से सब सभासदों ने मिलकर सर्वज्ञ दैवज्ञ का स्मरण किया ॥ ६२ ॥ सर्वज्ञ दैवज्ञ ने भी धर्म के दिग्विजयार्थ एक अच्छा मुहूर्त निकाल दिया ॥ ६३ ॥

ईश्वरादिष्टसमये विनिश्चित्य सभासदः ।
प्रस्थानं सर्वसम्मत्त्या तत्यजुःस्वं सभास्थलम् ॥६४॥
निजानुरूपवसनाः स्वनिष्ठबलशालिनः ।
समयोचितकार्याणि तदा ते तत्र चक्रिरे ॥ ६५ ॥
कश्चिदेकान्तनिश्चिन्त-मानसेन मनोगतम् ।
शङ्करं हृदये कृत्वा बहिस्तत्पूजनं व्यधात् ॥ ६६ ॥
वृन्दारकमहामत्तभ्राम्यद्भ्रमरभूषितम् ।
विष्णोः पदाम्बुजं कोऽपि चिन्तयामास मानसे ॥६७॥

दैवज्ञ के द्वारा निर्दिष्ट समय में प्रस्थान का निश्चय करके सब सभासद सभामंडप से उठकर अपने अपने घर चले गए ॥ ६४ ॥ वहाँ जाकर

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निजानुरूप वेश से अपनी अपनी शक्ति के अनुसार वे सब समयोचित कार्य में प्रवृत्त हुए ॥ ६५ ॥ कोई अपने निश्चल हृदय में शंकर का ध्यान करके बाहर पूजन करने लगा ॥ ९६ ॥ कोई देवभ्रमरभूषित भगवच्चरणारविंद का अपने मन में ध्यान करने लगा ॥ ६७ ॥

वेदप्रणयनासक्तं सनाढ्यं सनकात्मजम् ।
सनातनं प्रसादेन कश्चिद् ब्रह्माणमस्मरत् ॥ ६८ ॥
एवं निजनिजाभीष्टदेवानाराध्य ते तदा ।
सर्वे निजबलोपेतास्तुष्टुवुर्गणनायकम् ॥ ६६ ॥
धर्मोऽपि देवदत्तेन भव्यवेशेन भूषितः ।
मुहूर्तकालमप्राप्तं प्रार्थयामास सर्वतः ॥ १०० ॥
एतावतैव कालेन देवदुन्दुभिनिःस्वनैः ।
पूरिताः ककुभो दिष्ट्या तदा हृष्टा बभूविरे ॥१०१॥

कोई वेदसंपादनप्रसक्त, तपोधन, सनकादि ऋषियों के जनक, सनातन ब्रह्मदेव का हृदय में ध्यान करने लगा ॥ ६८ ॥ इस प्रकार अपने अपने इष्ट का यथेष्ट पूजन करके सबने गणपति का स्मरण किया ॥ ६६ ॥ धर्मदेव भी देवप्रदत्त स्वाभाविक सुन्दरवेश से अलंकृत होकर अप्राप्त मुहूर्त की प्रतीक्षा करने लगे ॥ १०० ॥ इतने ही में मुहूर्त आगया और देवगणों के दिव्यवाद्य से समस्त दिशायें गूंज उठीं ॥ १०१ ॥

शास्त्रमात्रप्रतिष्ठानि मङ्गलान्यपि मङ्गलम् ।
विधातुं तत्र समये युगपज्जन्म लेभिरे ॥ १ २ ॥
अनेकदिव्याभरणा दिव्यवस्त्रविभूषिताः ।
सौभाग्यवत्यः प्रमदा राजानं पर्यवेष्टयन् ॥ १०३ ॥
परस्परपरिष्वङ्गव्यञ्जिताङ्ग्यः कुमारिकाः ।
मङ्गलैरुपयुक्तानि जगुर्गीतानि सर्वतः ॥ १०४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सद्यःप्रसूतसद्वत्समुखन्यस्तपृथुस्तनाः ।
पयस्विन्यः प्रतिदिशं दर्शनं ददुरुत्तमाः ॥ १०५ ॥

शकुन शास्त्रों में विद्यमान अनेक शुभ शकुन भी उस समय में मंगल के लिये आकर अकस्मात् उपस्थित हुए ॥ १०२ ॥ सुन्दर सुन्दर वस्त्र तथा भूषण पहन कर सौभाग्यवती स्त्रियाँ सामने आ गईं ॥ १०३ ॥ परस्परालिंगन से सूचित-प्रमद कुमारिकायें भी मंगल गाती हुई उपस्थित हुईं ॥ १०४ ॥ नवप्रसूत वत्सों के मुख में दत्तस्तन गोसमूह सब ओर से आकर उपस्थित हुआ ॥ १०५ ॥

उपमामेति यद्द्वन्द्वैर्मीनाक्षीनयनद्वयम् ।
मीनास्ते तत्र समये मङ्गलार्थमुपागताः ॥१०६॥
हेमकुम्भोपमकुचद्वन्द्वानतमृगीदृशाम् ।
वृन्दानि दध्नः कलशानुपादाय तदाऽऽगमन् ॥१०७॥
सुवर्णकलशन्यस्तं सुरस्रोतस्विनीजलम् ।
प्रमदाभिस्तदा न्यस्तं कटिदेशे समन्ततः ॥१०८॥
वेदपुस्तकमादाय भालविन्यस्तचन्दनाः ।
विशुद्धवेशाः समगुस्तदग्रे ब्राह्मणव्रजाः ॥१०९॥

जिनके शरीरों से प्रमदाओं के नयन उपमित होते हैं वे मीन भी वहाँ पर उपस्थित हुए ॥१०६॥ हेमकलश के समान उन्नत वक्षोजयुगल प्रमदायें भी वहाँ दधिकलश ले कर उपस्थित हुईं ॥ १०७ ॥ सुवर्णकलशों में भरा हुआ भागीरथी का पवित्र जल प्रमदाओं ने वहाँ पर लाकर उपस्थित किया ॥ १०८ ॥ मस्तक में चंदन लगा कर हाथ में वेद का पुस्तक लिये हुए ब्राह्मण भी वहाँ पहुँच गए ॥ १०९ ॥

आसमन्ताद्रसं लान्ति ये रसाला भुवस्तले ।
फलानतास्ते बहवस्तत्रासन्नवपल्लवाः ॥११०॥
अभीष्टावाप्तये लोकैर्दक्षिणे या प्रशस्यते ।
श्यामा सा पक्षिणी भद्रा तदा तत्रागमत्स्वयम् ॥१११॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्यसिद्धिसमाशंसी दर्शनीयःस्वभावतः ।
चातकोऽपि शिवः पक्षी वामे मधुरमस्वनत् ॥११२॥
न विद्यते कुलं यस्य नकुलः स सरीसृपः ।
शकुनानुगते काले दर्शनन्दातुमभ्यगात् ॥११३॥

बसंत की सूचना देने वाले बौरे हुए सुन्दर आम्रवृक्ष उस समय समक्ष में आ गए ॥ ११० ॥ दक्षिण की ओर जिसका आना अच्छा माना जाता है वह श्यामा चिड़िया उस समय में अकस्मात् आ गई ॥ १११ ॥ वामभाग में जिसका बोलना शुभ माना जाता है वह चातक भी वहाँ उपस्थित हुआ ॥ ११२ ॥ कुल के होने पर भी संसार में जो नकुल कहा जाता है वह भी वहाँ पर दिखाई दे गया ॥ ११३ ॥

सूर्योदये यद्विकासः सूर्यास्ते यन्निमीलनम् ।
तदप्याविरभूत्तत्र कमलं कमलेशयम् ॥११४॥
गण्डभित्तिषु विन्यस्तनानाविधविभक्तयः ।
समदास्तत्र करिणः समाजग्मुरितस्ततः ॥११५॥
शुभानि यानि कथ्यन्ते शकुनानि भुवस्तले ।
सर्वाणि तानि तत्रासन्धर्ममङ्गलहेतवे ॥११६॥
शकुनानि समुद्वीक्ष्य शिवानि मुदितान्तरः ।
धर्मराजः सहामात्यो ग्रहाणां पूजनं व्यधात् ॥११७॥

सूर्य के उदयास्त समय में जिसका विकास और विमुद्रण होता है वह सफेद कमल भी वहाँ समक्ष में आगया ॥ ११४ ॥ जिनके गंडस्थलों से मद टपक रहा था ऐसे मस्त हाथी भी वहाँ पर अम्बारी समेत उपस्थित थे ॥ ११५ ॥ संसार में जितने शुभ शकुन समझे जाते हैं वे सभी उस समय में आकर उपस्थित हुए ॥ ११६ ॥ शुभ शकुनों का अवलोकन करके प्रसन्नचित्त धर्मदेव ने मंत्री के साथ ग्रहपूजन करना आरम्भ किया ॥ ११७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

याज्ञवल्क्येन मुनिना येषां मन्त्राः प्रकल्पिताः ।
यजुर्वेदे फलं येषां याज्ञवल्क्यस्मृतौ स्थितम् ॥११८॥
जैमिनीये गृह्यसूत्रे यत्कल्पःपरिदृश्यते ।
तेषां ग्रहाणां भूलोके को न कुर्यात्प्रपूजनम् ॥११९॥
नानाविधस्तवैःस्तुत्वा नानाविधफलप्रदान् ।
स तेभ्यः सुप्रसन्नेभ्यः समापाशीः परम्पराम् ॥१२०॥
अथर्ववेदसम्प्रोक्तां ग्रहशान्तिं गरीयसीम् ।
ग्रहशान्तिमयैर्मन्त्रैर्यथाकालमकल्पयत् ॥ १२१ ॥

याज्ञवल्क्य ने जिनके मंत्र बनाए, याज्ञवल्क्य स्मृति में जिन का फल लिखा हुआ है ॥ ११८ ॥ एवं जैमिनीय गृह्यसूत्र में, [अध्याय २ खंड ९ में] जिनका कल्प लिखा है उन ग्रहों का कौन पूजन न करेगा ॥ ११९ ॥ अनेक-विध फलों के देने वाले उन नव ग्रहों का अनेक प्रकार से पूजन करके धर्मदेव ने उनसे आशीर्वाद प्राप्त किया ॥ १२० ॥ ग्रहपूजन के अनंतर अथर्ववेदीय ग्रह-नक्षत्र-शांति-सूक्त के मंत्रों से धर्मदेव ने ग्रहशांति का आरम्भ किया ॥ २१ ॥

यथाविधि समाप्यैवं देवपूजनमादरात् ।
चक्रे स्वनामधन्यानां ब्राह्मणानां प्रपूजनम् ॥१२२॥
पादावनेजनं तेषामादौ कृत्वा तदुत्तरम् ।
यथाक्रममदात्तेभ्यः स्वयमेव कुशासनम् ॥१२३॥
कुशासनोपविष्टानां तेषां नीराजितात्मनाम् ।
समक्षमुपसङ्गम्य धर्मस्तानिदमब्रवीत् ॥१२४॥
भवन्त एव भूलोके ब्रह्मणा विश्वकर्मणा ।
कल्पिता मम रक्षार्थं वेदावनविचक्षणाः ॥१२५॥

इस प्रकार विधिपूर्वक देवपूजन समाप्त करके धर्मदेव ने फिर ब्राह्मणों का पूजन आरम्भ किया ॥ १२२ ॥ अपने हाथ से पहले उनके चरण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धोकर उनके लिए स्वयं आसन बिछाया ॥ १२३ ॥ आसन पर उनको बिठाकर नीराजन के अनंतर धर्मदेव ने उनका इस प्रकार गुणवर्णन आरम्भ किया ॥ १२४ ॥ वेदों के रक्षक आप लोगों को ब्रह्मा ने मेरी रक्षा के लिए नियुक्त किया है ॥ १२५ ॥

विपद्रूपघनध्वान्तभेदनाय जगत्त्रये ।
सहस्रभानवो यूयं विधात्रैव विनिर्मिताः ॥१२६॥
समीहितार्थसन्दाने कामधेनुसमप्रभाः ।
अपारभवतोयाब्धेस्तरणाय सुसेतवः ॥ १२७ ॥
धन्यः स भूतले मन्ये कृतकृत्यो महायशाः ।
स्थिता यस्य शिरोदेशे भवताम्पादरेणवः ॥१२८॥
भवदाधारतो वेदा जीविताः सन्ति भूतले ।
भवदाधारमासाद्य देवा जीवन्ति सर्वदा ॥ १२९ ॥

विपत्ति रूपी सघन अंधकार का भेदन करने के लिए आप सूर्यरूप हैं ॥ १२६ ॥ सभी हितार्थ के देने में आप कामधेनु के समान हैं। अपार भवसागर से पार उतरने के लिए आप सेतुरूप हैं ॥ १२७ ॥ वह पुरुष संसार में धन्य है जिसके शिर पर आपके चरणरेणु पड़ते हों ॥ १२८ ॥ आपके आधार पर ही वेद जीवित हैं और देवता भी आपके आधार पर ही जीते हैं ॥ १२९ ॥

पुरा मम कृता रक्षा भवद्भिरमितप्रभैः ।
अधुनाऽपि भवद्धस्ते मम रक्षाऽस्ति भूतले ॥१३०॥
भवतामेव कृपया विजेष्यामि भुवस्तले ।
कलेः शरणमापन्नमधर्मं पापवर्द्धनम् ॥ १३१ ॥
समस्तैश्वर्यसम्पन्नास्ते भवन्ति धरातले ।
ये प्रकुर्वन्ति मनुजा नित्यं ब्राह्मणवन्दनम् ॥१३२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महत्त्वं भवतां वेदे मन्त्रभागेन गीयते ।
अथर्वणाभिधो वेदः प्रत्यक्षं तन्निदर्शनम् ॥१३३॥

मेरी रक्षा पहले भी आपने की और इस समय भी आप ही मेरे रक्षक हैं ॥ १३० ॥ आपकी कृपा से ही मैं इस समय संसार में फैले हुए अधर्म का नाश करूंगा ॥ १३१ ॥ वे मनुष्य संसार में ऐश्वर्यवान् बनते हैं जो नियमपूर्वक आपको प्रणाम करते हैं ॥ १३२ ॥ आपका महत्त्व अथर्ववेद के मंत्रभाग में विद्यमान है जिसका निदर्शन उसके कई सूत्र हैं ॥ १३३ ॥

पुराणे भवतां गाथा दर्शनेषु भवत्कथा ।
गृह्यसूत्रे भवत्कृत्यं बहुधा परिकीर्तितम् ॥१३४॥
न सिद्धिमेति यत्कार्यमन्यैः शतमितैरपि ।
अनायासेन तत्सिद्धिर्भवदाशीःप्रदानतः ॥१३५॥
गीयते मनुजैर्लोके भवद्रक्षणरक्षिता ।
भवदेकान्तशरणा विद्या भगवती सती ॥१३६॥
एवं महत्त्वमादिश्य ब्राह्मणानां स भूपतिः ।
मुहुर्ववन्दे चरणौ तेषां पादरजः स्पृशन् ॥१३७॥

पुराणों में आपकी प्रशंसा है। दर्शनों में आपके महत्त्व का दर्शन है। ब्राह्मण ग्रंथों में भी आपका ही यश गाया गया है ॥ १३४ ॥ जिस कार्य को अन्य वर्ण के मनुष्य सौ भी मिलकर नहीं कर सकते हैं वह केवल आपके आशीर्वाद से ही बन जाता है ॥ १३५ ॥ आप ही ने संसार में भगवती विद्या को अनादि काल से सुरक्षित किया है ॥ १३६ ॥ इस प्रकार ब्राह्मणों का महत्त्व कहकर धर्मदेव ने अपना शिर उनके चरणों में झुकाया ॥ १३७ ॥

ब्राह्मणेभ्यः समासाद्य विजयाशीःपरम्पराम् ।
सस्मार हृदये धर्मः प्रणयेन सरस्वतीम् ॥१३८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवत्यम्ब ! जगतां वेदविद्यात्मिके ! शिवे !
कुरु प्रसादं सुभगे ! मयि धर्मे पदानते ॥१३९॥
पराख्येण भवती परम्ब्रह्मसमाश्रिता ।
पश्यन्ती रूपतः सर्वं पश्यन्ती सचराचरम् ॥१४०॥
मध्यमारूपमाश्रित्य कवीन्द्रहृदयं गता ।
वैखरीरूपमागत्य सर्वत्रैव प्रतिष्ठिता ॥ १४१ ॥

विजयोचित आशीर्वाद उनसे प्राप्त करके फिर धर्मदेव ने सरस्वती जी का इस प्रकार स्मरण किया ॥ १३८ ॥ हे जगन्मातः ! आप इस समय मेरे ऊपर कृपादृष्टि का प्रसाद कीजिए ॥ १३६ ॥ आप पराख्प से पर ब्रह्म में स्थित है। पश्यंती रूप से सब जगत् को देख रहीं है ॥ ४० ॥ मध्यमा रूप से कवियों के हृदय में बैठी हुई हैं और वैखरी रूप से जगन्मात्र में आपका निवास है ॥ १४१ ॥

त्रीणि रूपाणि ते देवि ! ब्राह्मणाः प्रविजानते ।
चतुर्थं भुवि सर्वेऽपि बाहुजाद्याः प्रतिस्फुटम् ॥१४२॥
नियतेर्नियमो न त्वां समेति जगदम्बिकाम् ।
न पारतन्त्र्यं भवती कदाचिदपि गच्छति ॥१४३॥
तन्त्रीगुणानुरणनं तव देवि ! प्रतीयते ।
गुणानां पारवश्येन भवती निर्गुणा कथम् ॥१४४॥
भगवत्याः पदद्वन्द्वान्निर्गता गुणराशयः ॥
विश्वमात्रे प्रतीयन्ते नानारूपसमाश्रयात् ॥ १४५ ॥

हे भगवति ! आपके जो गुप्त तीन स्वरूप हैं उनको केवल ब्राह्मण ही जानते हैं और चौथा जो स्वरूप है वह क्षत्रियादिक भी जानते हैं ॥ १४२ ॥ आपके ऊपर दैव का भी नियम नहीं चलता है इसी लिए आप सर्वदा स्वतंत्र रहती हैं ॥ १४३ ॥ तंत्री के गुणों का अनुरणन गुण की परवशता से आप में विद्यमान है फिर आप निर्गुण कहाँ ? ॥ १४४ ॥ आप के चरणकमल से निर्गत गुणकदम्ब जगन्मात्र में आदर पा रहा है ॥ १४५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नानाविधाः प्रदृश्यन्ते या विद्या भुवि सङ्गताः ।
तवैव देवि ! ते भेदाः स्फुलिङ्गा इव बर्हिषः ॥१४६॥
सर्वत्र विद्यमानाऽपि भवती नैव दृश्यते ।
विना गुरुकृपां तेऽपि गुरवस्तव सेवकाः ॥ १४७ ॥
सदसद्वस्तुसम्बन्धी विवेको यः स भूतले ।
हंसस्वरूपतामेत्य सञ्जातस्तव वाहनम् ॥ १४८ ॥
शरदिन्दुसमानास्या भवती यस्य मानसे ।
विराजते स एवात्र भूतलेऽपि विराजते ॥ १४९ ॥

संसार में अनेक प्रकार की जो विद्यायें दीखती हैं वे सब आपके ही भेद स्वरूप हैं ॥ १४६ ॥ सर्वत्र व्याप्त होने पर भी आप बिना गुरुकृपा के प्राप्त नहीं हो सकती हैं ॥ १४७ ॥ संसार में जो सदसद्वस्तु-विवेक है रूपान्तरसे हंस बनकर वही आपका वाहन हुआ है ॥ १४८ ॥ शरच्चंद्र के समान सुन्दर आपका जिसके हृदय में निवास होता है वही सर्वत्र प्रसिद्ध हो जाता है ॥ १४९ ॥

विजयं प्राप्नुयां युद्धे यथाऽहमजितः परैः ।
तथा भवत्या कर्तव्यं कृपया मन्निरीक्षणम् ॥१५०॥
एवं धर्मेण विनयावनतैर्वचनैः स्तुता ।
तथास्त्विति तमाभाष्य तत्रैवान्तरधीयत ॥ १५१ ॥
अन्तर्हितायां तरसा जगन्मातरि भूपतिः ।
बलमालोकयामास विपक्षोन्मर्दनक्षमम् ॥१५२॥
समाहूय निजामात्यं विश्वासं लोकविश्रुतम् ।
बहिरङ्गबलं सर्वं बोधयामास तत्त्वतः ॥१५३॥

जिस प्रकार मैं अजित होकर औरों पर विजय प्राप्त करलूँ आप ऐसी कृपादृष्टि मेरे ऊपर कीजिए ॥ १५० ॥ इस प्रकार धर्म की प्रार्थना सुन-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर सरस्वती ने "तथास्तु" कहकर वहीं पर अंतर्धान किया ॥ १५१ ॥ जगन्माता के अंतर्धान होने पर धर्म ने अपने बल का निरीक्षण किया ॥ १५२ ॥ और जगत्प्रसिद्ध अपने मंत्री को बुला कर उसके प्रति बहिरंग बल का विभजन इस प्रकार बतलाया ॥ १५३ ॥

[ बहिरङ्गबलं सप्तपत्रम् ]

अतन्ति पदमात्रेण ये रणेषु पदातयः ।
अग्रतस्ते प्रगच्छन्तु गृहीतविजयध्वजाः ॥१५४॥
मणिपुष्पकनिर्घोषैर्वधिरीकृतदिङ्मुखाः ।
वादित्रवादनचणाः पश्चाद्यान्तु सहस्रशः ॥१५५॥
पश्चात्तेषामश्ववाराः सकुन्ताः सपरिच्छदाः ।
करवाललसत्पार्श्वप्रदेशा यान्तु वेगतः ॥१५६॥
अनुयान्तु ततः पश्चादश्ववारानतुद्धताः ।
धनुर्बाणधरा वीरा हस्तीनारुह्य हस्तिपाः ॥१५७॥
उच्चध्वजसमायुक्तं नानायुधपरम्परम् ।
शताश्ववहनं तेषां पृष्ठतो रथयोजनम् ॥१५८॥
रथानां पृष्ठतः सज्जं शतघ्नीघोषदुःसहम् ।
शस्त्रास्त्रबहुलं यातु विनमद्भूतलं बलम् ॥१५९॥
बहिरङ्गबलं पूर्वमेवं यातु तदुत्तरम् ।
अन्तरङ्गबलं यातु यस्याहमधिपः स्वयम् ॥१६०॥

सबसे आगे पदाति चलें जिनके हाथ में "विजयवैजयंती" हो। उनके पीछे रणदुंदुभि के बजाने वाले चलें। उनके पीछे अश्वारोही चलें जो सशस्त्र हों। उनके बाद धनुर्बाणधर गजारोही चलें। उनके पीछे उच्चध्वज शस्त्रास्त्रपूर्ण शताश्ववाहन रथों पर महारथ हों। फिर अस्त्र और शस्त्र चलें। इस प्रकार पहले बहिरंगबल चलना चाहिए। उसके अनंतर अंतरंगबल चलना चाहिए जिसका शासक मैं स्वयं रहूँगा ॥ १५४—१६० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[ अन्तरङ्गबलं दशपद्यम् ]

अग्रतोऽत्र प्रगच्छन्तु कर्मकाण्डपरायणाः ।
प्रणीतापात्रमादाय साग्निकुण्डाः पुरोधसः ॥१६१॥
मध्यभागे निजाभीष्टनानादेवसमर्चकाः ।
उपासनाकाण्डपराः प्रगच्छन्तु धृतस्रजः ॥ १६२॥
अनुव्रजन्तु तान्पश्चाज्ज्ञानकाण्डविचक्षणाः ।
ब्रह्म सत्यं जगन्मिथ्या वदन्तो ब्रह्मवादिनः ॥१६३॥
तत्रापि पूर्वतो यान्तु वेदब्राह्मणपण्डिताः ।
निरुक्त-मेदिनी-विश्वकोषज्ञास्तदनन्तरम् ॥ १६४ ॥
पुराणवेदवेत्तारः कल्पशास्त्रविवेचकाः ।
पश्चात्ताननुगच्छन्तु दर्शनज्ञानदर्शिनः ॥ १६५ ॥
मन्वादिधर्मशास्त्रेषु विशेषेण विचक्षणाः ।
शुक्रादिनीतिमर्मज्ञाः प्रयान्तु शतशस्ततः ॥ १६६ ॥
राजनीतौ दण्डनीतौ धर्मनीतौ कृतश्रमाः ।
पृथक्पृथक्प्रगच्छन्तु शतशः पण्डितव्रजाः ॥१६७॥
क्रियासु कुशला व्याधितत्त्वसत्त्वपरीक्षकाः ।
पीयूषपाणयो वैद्याः प्रतिष्ठन्तु मया समम् ॥१६८॥
धनुर्वेदेऽतिनिपुणाः शिल्पवेदे बहुश्रमाः ।
अनुव्रजन्तु मां सर्वे युद्धाय कृतनिश्चयाः ॥१६९॥
अन्तरङ्गबलं सर्वमेवमाज्ञाप्य सर्वशः ।
सेनासन्नाहकर्तव्ये मन्त्रिणं समयोजयत् ॥१७०॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सबसे पहले प्रणीतापात्र और प्रोक्षणी पात्र लेकर पुरोहित चलें जो कर्मकांडज्ञ हों। उनके अनंतर अपना अपना अभीष्ट देवमन्दिर लेकर उपासनाकांडज्ञ चलें। उनके पीछे ब्रह्मवादी जगन्मात्र को ब्रह्म समझने वाले ज्ञानकांडज्ञ चलें। उनमें भी सबसे पहले मंत्रब्राह्मणवेत्ता वेदज्ञ चलें। उनके अनंतर निरुक्त-विश्व-मेदिनी-आदि कोषज्ञ चलें। उनके पीछे पुराण-वेदज्ञ तथा कल्प-सूत्रज्ञ चलें। उनके अनंतर दार्शनिक चलें। उनके पीछे धर्मशास्त्रज्ञ तथा नीतिशास्त्रज्ञ चलें। तदनंतर राजनीति, दंडनीति, धर्मनीति के जाननेवाले चलें। उनके अनंतर आयुर्वेदज्ञ वैद्य चलें। उनके पीछे धनुर्वेद और शिल्पवेद के जानने वाले मेरे साथ चलें। इस प्रकार अंतरंग बल का विभाग समझा कर सेना तैयार करने के लिए धर्मदेव ने अपने मंत्री को नियुक्त किया ॥ १६१—१७० ॥

अनेकशक्तिसम्पन्नः सहामात्यः स भूपतिः ।
इतिकर्तव्यतामेत्य सर्वमायोजनं व्यधात् ॥१७१॥
प्रास्थानिकं स्वस्त्ययनं समाप्य तदुपक्रमैः ।
ईश्वरादिष्टसमयप्रतीक्षायामदान्मनः ॥ १७२ ॥
सुसज्जितातिसन्नाहा निजवीर्यविशोभिता ।
सेनाऽपि धर्मराजस्य शुशुभे महितैर्गुणैः ॥१७३॥
देवमात्रसहायेन विश्वमात्रप्रतिष्ठितम् ।
विजेतुं स तदा वेगादधर्मं लघ्वमन्यत ॥ १७४ ॥

अनेक शक्तिसंपन्न धर्मदेव ने अमात्य के साथ इस प्रकार समयोचित सभी कार्य तैयार कर लिया ॥ १७१ ॥ शास्त्रविधानपूर्वक प्रास्थानिक स्वस्त्ययन समाप्त करके अब सब केवल विजयमुहूर्त की प्रतीक्षा में ही थे ॥ १७२ ॥ उस समय में सजी हुई दीर्घवेगवती पराक्रमशालिनी सेना भी बड़ी दर्शनीय हो गई ॥ १७३ ॥ देवगणों के सहाय से विश्वमात्र में विद्यमान अधर्म को जीतना धर्मदेव ने एक मामूली काम मान लिया ॥ १७४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मस्य यस्य विजयाय दलद्वयेऽपि
नानाविधप्रधनसाधनसम्पदुक्ता ॥
तस्याद्भुतप्रधनवर्णनमुत्तरार्द्धे
पश्यन्तु धर्मरसिकाः प्रणयेन दिव्यम् ॥१७५॥

जिस धर्म के विजय के लिए हमने दोनों दलों में अनेक प्रकार की युद्ध सामग्री एकत्रित की है उसका अद्भुत युद्धकौशल यदि आपको देखना हो तो इस महाकाव्य का उत्तरार्द्ध देखिए ॥ १७५ ॥

इतिश्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये
विजयसंरम्भो नामैकादशः सर्गः ।

समाप्तमदः पूर्वार्धम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्वादशः सर्गः

सिद्धिं समादिशति यस्य महामहिम्नः
पादारविन्दनमनं परमादरेण।
विघ्नापनोदनकृते विधिपारवश्या-
दादौ तमेव गिरिजातनयं नमामः ॥ १ ॥

जिस महामहिम का चरणवंदन संसार में सिद्धि का देनेवाला माना जाता है हम बड़े आदर के साथ उस विघ्नविनाशक श्रीगणपतिजी को सबसे प्रथम प्रणाम करते हैं ॥ १ ॥

बालेन्दुभूषितमहोन्नतभालदेशं
भागीरथीजलकणोच्चितमञ्जुकेशम्।
भस्मानुलेपनविभूषितभव्यवेषं
भूतेश्वरं विजयकामनया नमामः ॥ २ ॥

जिनका उन्नत मस्तक बाल चंद्रमा से चमक रहा है तथा जिनका जटाजूट भागीरथी के पवित्र जलकणों से अलंकृत हो रहा है और जिनका भव्यवेष भस्म के धारण करने से दमक रहा है हम विजय की कामना से उस भूतेश्वर भगवान् को प्रणाम करते हैं ॥ २ ॥

स्थाणुं वरीतुमुचितं स्ववपुर्विधातुं
याभूत्तपस्यनुरता नितरामपर्णा।
पादारविन्दपतितार्पितसर्वकामा
सा सर्वमङ्गलमयी वरदाऽस्तु मूर्तिः ॥ ३ ॥

स्थाणु के वरने योग्य अपने शरीर को बनाने के लिए जो तप में सर्वदा अनुरक्त हो कर अपर्णा बन चुकी हैं हम उन सर्वमंगला भगवती के चरण कमलों में बार बार प्रणाम करते हैं ॥ ३ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृन्दाटवीपरिसरे धृतमञ्जुवेषो
यो नागमस्तकमुपेत्य ननर्त लोके ।
गोवर्द्धनाचलसमुद्धरणाभिरामो
दामोदरः स वितनोतु मनीषितानि ॥४॥

वृंदावन की पवित्र भूमि में सुन्दर वेष धारण करके जिन्होंने कालिय नागराज के फणमण्डल पर अपनी नर्तनकला का परिचय दिया वे गोवर्द्धन के उठाने से अत्यंत अभिराम भगवान् श्रीकृष्णचन्द्रजी महाराज हमारे समस्त मनोरथों को पूर्ण करें ॥ ४ ॥

सूक्ष्मादिभेदवशतो भुवनप्रसिद्धा
या शब्द-वर्ण-पद-वाक्यभिदामुपैति ।
सा कच्छपीमधुरनादनिमग्नचित्ता
वागीश्वरी मम करोतु जयं विवादे ॥ ५ ॥

परा, पश्यंती, मध्यमा, वैखरी इन चार भेदों से जो वर्ण, पद, वाक्यादि भेदों का धारण करती है वह भगवती सरस्वती हमको विवाद में सर्वत्र विजय प्रदान करे ॥ ५ ॥

यत्पादवन्दनममन्दतया जगत्या-
माविष्करोति निखिलान्यपि मङ्गलानि ।
ते वर्णमात्रगुरवोऽग्निसहोदराङ्गाः
कुर्वन्तु मे विजयमानतपादपद्माः ॥ ६ ॥

प्रत्यक्ष रूप से जिनका चरण स्पर्श संसार में समस्त कल्याण का देने वाला होता है वे समस्त वर्णों के गुरु, अग्निसहोदर ब्राह्मण हमारे इस कार्य में सहयोग दें ॥ ६ ॥

एवं निजेष्टगणमादरतः प्रणत्य
धर्मः पुरा निगदितानि यथावकाशम् ।
सस्मार सर्वशकुनानि शिवं तनोति
येषामनुस्मरणमेव भुवि स्थितानाम् ॥७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इस प्रकार अपने इष्टदेवों को आदर से प्रणाम करके धर्मराज ने शुभ शकुनों का स्मरण किया जो संसार में यात्रा के समय सब का कल्याण करते हैं ॥ ७ ॥

सर्वात्मना समभिपूरयितुं यथाव-
द्धर्माभिलाषमशिवापगमाय तस्य ।
सर्वैरुपागतममन्दगतिं समेत्य
प्रास्थानिके सुसमये शकुनैःप्रशस्तैः ॥८॥

प्रास्थानिक मंगल के समय धर्म का मनोरथ पूरा करने के लिए समस्त शकुन संमति करके क्रमशः उपस्थित हुए ॥ ८ ॥

भागीरथीजलपवित्रितभूमिभागां
ब्रह्मर्षिजन्ममहितां निजवासभूमिम् ।
बद्धाञ्जलिः समभिवाद्य स धर्मराजः
सस्मार पूर्वककुभो हरिदश्वमीशम् ॥९॥

भागीरथी के जल से पवित्रित, ब्रह्मर्षियों के जन्म से प्रशस्त, अपनी जन्मभूमि को प्रणाम करके धर्मराज ने पूर्व दिशा के अधिपति इन्द्रदेव को याद किया ॥ ९ ॥

धर्मेण चित्तविषयं विजयोद्यतेन
सम्प्रापितः समयमेत्य सनातनेन ।
नानाविधायुधविधिप्रधनप्रवीण-
स्तत्राजगाम रभसेन पुरन्दरः सः ॥१०॥

धर्मदेव के स्मरण करने पर अनेकविध आयुधों के प्रहार में प्रवीण इन्द्रदेव बड़ी शीघ्रता से आकर उपस्थित हुए ॥ १० ॥

साङ्गं समागतमवेक्ष्य सशक्तिमेनं
लेखर्षभं तदधिकारमुपागतायाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मोदेन तद्धरिति सानुनयं तमेव
सेनापतिं स्वविजयाय चकार धर्मः ॥ ११ ॥

सांगोपांग शक्ति सहित इन्द्र को आया हुआ देखकर इन्द्र के अधिकार में प्रथम से विद्यमान पूर्व दिशा में धर्मदेव ने उसी इन्द्र को ही सेनापति नियुक्त किया ॥ ११ ॥

देवेन धर्मविजयाय कृतोद्यमेन
सेनापतित्वमधिगत्य पुरन्दरेण
साऽलङ्कृताऽतिमहती पृतना पृथिव्यां
रेजे वधूरिव धवेन समागतेन ॥ १२ ॥

सेना के आधिपत्य में प्रतिष्ठित इन्द्रदेव के सहयोग से धर्म की वह सेना भी प्राणेश के मिलने पर प्राणेश्वरी जैसी सुशोभित हुई ॥ १२ ॥

भव्या पुराणकवचावृतमञ्जुलाङ्गी
वेदादिशास्त्रपरिदर्शितदिव्यमार्गा ।
सा भूसुरप्रवरभूषितपार्श्वदेशा
सेनाधिपेन सहिता पृतना चचाल ॥ १३ ॥

स्वभाव से सुन्दर, पुराण कवच से रक्षित, वेददर्शित मार्गवाली, दोनों ओर से ब्राह्मणों द्वारा विभूषित वह धर्मदेव की सेना सेनाधिपति के साथ चली ॥ १३ ॥

दिक्कालयोर्युगपदेव समप्रसादे
दिष्ट्याऽऽगते समुचिते विजये मुहूर्ते ।
मौहूर्तिकैरनुमतो निगमागमज्ञै-
र्धर्मश्चचाल नवदिग्विजयाय तुष्टः ॥ १४ ॥

देश और काल इन दोनों के एक साथ निर्मल होने पर दैवयोग से प्राप्त हुए विजय नामक मुहूर्त में मौहूर्तिकों की आज्ञा से धर्मदेव ने दिग्विजय के लिए प्रस्थान किया ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतद्विलोकनरसाहृतमानसेन
दामोदरेण निगमोदितविग्रहेण ।
हित्वा पुराणपुरुषोचितदिव्यरूपं
नव्यं गृहीतमतिदीनदयालु रूपम् ॥१५॥

इस समय आपके देखने की इच्छा से वेदवर्णित दामोदर ने अपने प्राचीन दिव्यरूप को त्याग कर नवीन "दीन दयालु" का स्वरूप धारण कर लिया ॥ १५ ॥

विद्योन्नतिप्रहितविश्रुतशक्तिसारो
धर्मोदयाय भुवने विहितप्रयत्नः ।
एनं विलोकयितुमेव हिरण्यगर्भो
भूमण्डले मदनमोहनतामुपागात् ॥१६॥

विद्या की उन्नति में दत्तचित्त तथा धर्मोदय के लिए कृतप्रयत्न ब्रह्मदेव ने इस समय आपको देखने के लिए "मदन मोहन" बनना अंगीकार किया ॥ १६ ॥

देवाङ्गनाकरसरोरुहविप्रकीर्ण-
कल्पद्रुमोद्गतमनोहरनव्यपुष्पम् ।
धर्माभिधस्य नृपतेर्बलमन्तरङ्गं
पादानतारिबलमस्य पुरश्चचाल ॥१७॥

देवांगनाओं के हाथ से बिखरे हुए कल्पवृक्ष के मनोहर पुष्पवाला पादानतारिबल, धर्मराज का अंतरंग बल उनके अगाड़ी अगाड़ी चला ॥ १७ ॥

कश्चित्प्रमाणपटुरस्य बले बलेन
शत्रुं विवादविषये धृतपक्षपातम् ।
वेगान्निपातयितुमेवमियेष वादी
कोलं यथा शवरवेषगतः पुरारिः ॥१८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इनके बल में प्रमाणवाद में चतुर कोई वादी शास्त्रार्थ में पक्षपात युक्त शत्रुपक्ष के वादों को बलपूर्वक नीचा दिखाने के लिए इच्छा रखता था ॥ १८ ॥

कश्चित्प्रबन्धरचनापटुरप्रमेयं
वादानुवादविषयं गतपक्षपातम् ।
देवप्रदत्तनवदर्शनलाभयोगा-
दस्मिन्बले रचयितुं समदश्चचाल ॥१६॥

प्रबन्धकल्पना में प्रवीण कोई वादी अप्रमेय बातों को दिव्यदृष्टि के द्वारा जानकर क्रमबद्ध करने के लिए चला ॥ १६ ॥

अप्रस्तुतेष्वपि वितर्कपरम्पराया-
माकल्पितेषु विषयेषु विपक्षतर्कम् ।
सद्यो निनीषुरुचितेन विकल्पनेन
कोऽप्यत्र दिव्यनयनो विलयं जहास ॥२०॥

कोई दिव्यदृष्टि-प्रसंग से बीच में आए हुए अप्रस्तुत विषयों में भी प्रतिवादी के तर्क को अपने उचित तर्क से नीचे गिराता हुआ चला ॥ २० ॥

एवं विपक्षदलनाय विवृद्धचेष्टं
धर्मस्य तद्द बलमनुद्धतभावविद्धम् ।
ब्रह्मर्षिदेशपरिधेरवसानमेत्य
तत्प्राप पत्तनमनुत्तमनामधेयम् ॥ २१ ॥

इस प्रकार विपक्ष का दलन करने के लिए सन्नद्ध सनातनधर्म का बल ब्रह्मर्षि देश की सीमा के अंत में उस सुन्दरनामधेय नगर में पहुँचा ॥ २१ ॥

शम्भोर्जटावलयवेश्मनि बद्धभावा
भागीरथी सुरसरिज्जगति प्रसिद्धम् ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सापत्न्यभावमपहाय कलिन्दकन्यां
यस्मिन्परिष्वजति दीर्घतरङ्गहस्तैः ॥ २२ ॥

जहाँ पर शंकर की जटाओं में रहने वाली भागीरथी संसार में विख्यात सपत्नीभाव को छोड़ कर प्रेम से यमुना के साथ आलिंगन करती हुई बह रही है ॥ २२ ॥

कल्पान्तकप्रलयवारिधितोयमध्ये
यत्पत्रसम्पुटकुटीरमुपेत्य शेते ।
पीताम्बरः स विलसत्यधुनाऽपि यत्र
प्रत्यक्षमक्षयवटो जगदादिवृक्षः ॥ २३ ॥

महाप्रलय के समय में जलमय जगत् के अन्दर जिसके पत्र पर विष्णु भगवान् सोते हैं वह अक्षयवट जहाँ पर आज भी विद्यमान है ॥ २३ ॥

यस्मिन्नमन्दविहिताध्वरधूमशोभे
देवर्षिसङ्गमनपूतवनप्रदेशे ।
नानाविधाः परिषदो निगमागमाना-
मद्यापि रक्षणकृते बहुधा भवन्ति ॥ २४ ॥

यज्ञधूम से सुगंधित मुनिमहर्षिसंगमनपूत जिस नगरी में आज भी धार्मिकजनों के उद्योग से समय समय पर अनेक महासभायें होती रहती हैं ॥ २४ ॥

तत्रास्य विश्वविजयोत्सुकमानसस्य
धर्मस्य तद्ब बलमवातरदुच्चदेशे ।
यद्द्रष्टुमागतमनुष्यकदम्बकस्य
नेत्रव्रजेन विनिमीलनमप्यपास्तम् ॥ २५ ॥

उस प्रयाग नगरी में सबसे पहले धर्मदेव का शिविर उपस्थित हुआ जिसके देखने के लिए सहस्रों नरनारी निर्निमेष बन गए ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्रावितारिनिवहः स्वयमेव तत्र
सेनापतिर्बहुबलेन निजाधिपस्य ।
साम्राज्यमप्रतिमदुर्गनिबन्धशोभं
मोदादघोषयदुपागतसज्जनेषु ॥ २६ ॥

अपने प्रभाव से शत्रु को भागा हुआ देखकर इन्द्र ने भी अपने प्रभु की साम्राज्य घोषणा करके सनातनधर्म का राज्य स्थापित किया ॥ २६ ॥

वेणीमिवातिकुटिलामवलोक्य तत्र
भूमेरयं दुरितनिर्गमनत्रिवेणीम् ।
तीर्थाधिपानुमतिमाप्य ततः प्रतस्थे
तत्पत्तनं विविधमन्दिरदिव्यशोभम् ॥ २७ ॥

वेणी के समान कुटिल त्रिवेणी को यहाँ पर देखकर धर्मदेव ने तीर्थराज की अनुमति से उस नगरी के लिए प्रस्थान किया ॥ २७ ॥

यद्दर्शनं सपदि भारतभूमिभाजां
पापानि मानसभवानि निवार्य सद्यः ।
बन्धं विभेदयति संसृतिचक्रजन्यं
दाक्षायणीगिरिशयोरनुकम्पनेन ॥ २८ ॥

जिसके दर्शनमात्र से संसार में आवागमन-चक्रपीड़ित मनुष्यों का गिरिजा गिरीश के प्रताप से समस्त बन्धन छूट जाता है ॥ २८ ॥

आनन्ददायिनि समस्तपुरीशिरःस्थे
यस्मिन्पुरे गिरिजया सहितो गिरीशः ।
संसारतारकसुमन्त्रनिदेशनेन
पादारविन्दपतिताननुकम्पते स्म ॥ २९ ॥

समस्त पुरियों में प्रधान जिस आनन्ददायक पुरी में श्रीविश्वनाथ जी महाराज सकुटुंब रहते हुए भक्तों के लिए तारक मंत्र का उपदेश देते हैं ॥ २९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यं पुरःस्थिततमिस्रनिवारणाय
भूतेशभालतिलकीकृतविग्रहेण ।
चन्द्रेण यत्र रजनीषु गृहप्रतिष्ठा
दीपा वृथोदितनवद्युतयः क्रियन्ते ॥ ३० ॥

शंकर की पुरी में कदापि अंधकार न हो इस कारण जहाँ पर भगवान् के भूषणभूत चन्द्रमा के प्रकाश से रात्रि के प्रदीप व्यर्थ बन जाते हैं ॥ ३० ॥

वासाय सर्वनगरेभ्य उपागतानां
भूतेशदर्शनसतृष्णहृदां जनानाम् ।
माभूत्कथञ्चिदपि कष्टमितीव मत्वा
जागर्ति यत्र सततं गिरिजान्नपूर्णा ॥ ३१ ॥

मरणपर्यन्त निवास के लिए सब नगरों से आये हुए महादेवजी के भक्तों को किसी प्रकार का कष्ट न हो इस कारण जहाँ पर भगवती अन्नपूर्णाजी स्वयं रहती हैं ॥ ३१ ॥

विद्यादिसद्गुणगणग्रहणार्थमारा-
द्देशं विहाय विनयेन समागतानाम् ।
विद्यार्थिनां विषमविघ्नविदारणाय
द्वैमातुरो वसति यत्र स ढुण्ढिराजः ॥३२॥

विद्या पढ़ने के लिए बाहर से आए हुए ब्राह्मण कुमारों का विघ्न दूर करने के लिए जहाँ पर विघ्नराज स्वयं सर्वदा उद्यत रहते हैं ॥ ३२ ॥

आनन्दमग्नशिवताण्डवनृत्यतुष्टा
देवैर्नुता भगवती वचसामधीशा ।
प्रत्यक्षमेव निजदर्शनमात्रतुष्टा-
नानन्दयत्यनुदिनं बहु यत्र भक्तान् ॥३३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सायंकाल के समय शंकर भगवान् का ताण्डवनृत्य देखने के लिए आई हुई भगवती सरस्वती जहाँ पर प्रत्यक्षरूप में भक्तों को दर्शन देती हैं ॥ ३३ ॥

भट्टोजिदीक्षित-पतञ्जलि-कौण्डभट्ट-
नागेश-वामनकृतिष्वनुरागवन्तः ।
विद्याविवादपटवो बटवो दिगन्ते
यस्या गुरुत्वमधुनाऽपि निबोधयन्ति ॥३४॥

भट्टोजिदीक्षित-पतंजलि-कौंडभट्ट नागेश-बामन आदि के ग्रंथों के पढ़ने के लिए ब्राह्मण कुमार आज भी जिसका महत्त्व दिगंतों में दिखा रहे हैं ॥३४॥

काव्यप्रकाशपरिवीक्षितकाव्यतत्त्वाः
साहित्यदर्पणविलोकितकाव्यदोषाः ।
दोषज्ञतामनुभवन्ति न के गुणज्ञा
यस्यां परापरविवेकवतां प्रसङ्गात् ॥ ३५ ॥

काव्यप्रकाश और साहित्यदर्पण के पढ़नेवाले जहाँ पर प्रकाश में गुण और दर्पण में दोष देखते देखते गुणज्ञ होने पर भी दोषज्ञ बन जाते हैं ॥ ३५ ॥

तस्यामयं प्रथममेव शशाङ्कमौलेः
पादारविन्दविनिवेशितदिव्यदृष्टिः ।
आतिथ्यभाजनमभूदनुरागभूम्ना
धर्मः समस्तमनुजानतपादपद्मः ॥ ३६ ॥

उस काशीपुरी में सबसे प्रथम शंकर के चरणों में मस्तक नवा कर धर्मराज ने भगवती के अनुरोध से भगवान् का आतिथ्य ग्रहण किया ॥ ३६ ॥

सत्कारमाप्य विनयादमृतांशुमौले-
र्विद्राव्य नास्तिकमतानुगतान्प्रमत्तान् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सेनापतेरतिबलेन धृतप्रतिष्ठो
धर्मो विहारविषयेषु विहर्तुमागात् ॥ ३७ ॥

विनयपूर्वक आतिथ्य ग्रहण करने पर धर्मदेव ने नीच जाति में प्रविष्ट अधर्म को भगा कर विहारप्रांत में विहार करने के लिए प्रस्थान किया ॥३७॥

यस्मिन्ननेकविधशालिविवृद्धशोभे
तालद्रुमव्यजनवारितभूरिदंशे ।
केदारकोणगतदिव्यपटोलपत्रे
देशे समस्तमपि तादृगवस्थमासीत् ॥३८॥

अनेक प्रकार के शालिक्षेत्रों से सुन्दर, तालव्यजन के द्वारा निवारित बहुमशक तथा क्षेत्रकोणगत पटोल पत्रों से सुसज्जित इस विहार प्रांत में धर्मदेव को सभी सामयिक साधन उपस्थित मिला ॥ ३८ ॥

भूमिप्रधानबहुभूसुरवंशगुप्ते
यस्मिन्विहारविषये गतभेदभावम् ।
रूपं विलोकयितुमेव जना विनीता
गच्छन्त्यहो ! हरिहरात्मकमीश्वरस्य ॥३९॥

भूमिहार ब्राह्मणों द्वारा सुरक्षित जिस विहार प्रांत में आपस में भेद भाव छोड़ कर हरिहरात्मक अद्वितीय-भगवान् के रूप को देखने के लिए सैकड़ों भगवत्प्रेमी प्रतिवर्ष शोणपुर में एकत्र होते हैं ॥ ३९ ॥

लोकान्तरं प्रतिगतान्निजतातपादा-
न्वेदोदितेन विधिनाऽविरतं भजन्तः ।
पुत्राः स्वधर्मनिरताः प्रसभम्प्रयान्ति
यद्देशकोणवसनान्नगरीं गयाख्याम् ॥ ४० ॥

मरे हुए माता पिताओं को अथर्ववेद प्रतिपादित श्राद्ध विधान के द्वारा स्वर्ग में पहुँचाने के लिए सब ओर से आए हुए धार्मिक पुत्र जिस विहार प्रांत की गया नगरी में प्रतिवर्ष आया करते हैं ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वेष्टसाधनपरो भुवनप्रसिद्धः
श्रीवैद्यनाथमहनीयवपुर्महेशः ।
प्रत्यक्षमेव किल यद्विषयैकदेशे
निर्निद्रमावसति भक्तजनानुरागात् ॥४१॥

संसार में प्रसिद्ध सबका हित करने वाले भगवान् शंकर जिस प्रांत के एक देश में वैद्यनाथ के स्वरूप में प्रकट होकर भक्तजनों के अनुराग के कारण सर्वदा निवास करते हैं ॥ ४१ ॥

तस्य प्रधाननगरं क्रमशः समेत्य
गङ्गोपकण्ठभुवि पाटलिपुत्रसञ्ज्ञम् ।
धर्मस्य सर्वमपि तद्बलमिन्द्रगुप्तं
मार्गश्रमापनयनाय मतिश्चकार ॥ ४२ ॥

उस विहार प्रान्त की प्रधान राजधानी पाटलिपुत्र में आकर इन्द्र रक्षित धर्मदेव की सेना ने विश्राम के लिए सेनापति से अनुरोध किया ॥ ४२ ॥

सीमाऽऽगतं प्रबलसेनमिमं निपीय
चिन्ताऽऽकुलस्य समुपेत्य निदेशपत्रम् ।
शौद्धोदनेः कतिपये विबुधेषु दक्षा-
स्तत्राऽऽययुश्चपलमेव मदातिरेकात् ॥४३॥

धर्मराज का आगमन सुनकर भयभीत हुए बुद्धदेव का शासन पाकर कुछ बौद्धमतावलम्बी धर्मदेव के शिविर में उपस्थित हुए ॥ ४३ ॥

अभ्यागतानिव विलुञ्चितकेशपाशा-
नेतान्विलोक्य षडभिज्ञमतप्रविष्टान् ।
धर्माधिपाः प्रसभमेव विजित्य वादे
वेदादिशास्त्रवचनैर्विजयं समापुः ॥ ४४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इस धर्मयुद्ध में धर्मशास्त्रज्ञों ने लुञ्चितकेश बौद्धों को बड़े वेग के साथ पराजित करके सबसे पहला विजय प्राप्त किया ॥ ४४ ॥

दृष्ट्वा बलङ्गतबलं निजपक्षगानां
पूर्णां विलोक्य विजयं परपक्षभाजाम् ।
शौद्धोदनिः स्वयमुपेत्य महेन्द्रसेना-
संरक्षितं शिविरमेवमुवाच धर्मम् ॥ ४५ ॥

बुद्ध ने जब अपने पक्षवालों को पराजित सुना तब धर्म के शिविर में स्वयं आकर इस प्रकार अपना पूर्वपक्ष उपस्थित किया ॥ ४५ ॥

[ बौद्धः पूर्वपक्षः ]

वेदाःप्रमाणमिति ये निगदन्ति लोके
विज्ञाः कथञ्चिदपि ते न मते मदीये ।
यस्मात्तदीयरचनाऽग्निसहोदराणां
लीला निजोदरदरोपरिपूरणार्था ॥ ४६ ॥

जो मनुष्य वेदों को स्वतः प्रमाण मानते हैं वे मेरे मत में अल्पज्ञ है क्यों कि उनका संपादन ब्राह्मणों ने अपनी आजीविका के लिए किया है ॥ ४६ ॥

तर्को न यत्र निदधाति पदं स धर्मः
केनापि मन्दमतिनाऽनुगतोऽस्तु मास्तु ।
चर्चाऽपि तस्य बहुतर्कपथाश्रितानां
कर्णेषु भूसुरविनिन्दनपुण्यभाजाम् ॥४७॥

जिसमें तर्क का प्रवेश न हो वह धर्म किसी अल्पज्ञ के मानने योग्य है। केवल तर्कप्रधान हम लोग उसको नहीं मानते हैं ॥ ४७ ॥

अस्मन्मते तु स चकास्ति मनुष्यधर्मो
यस्तर्कमात्रकरणः स्वरतानशङ्कम् ।
भद्रे निवेशयति नापि पदं निधत्ते
यस्मिन्कदापिपशुविश्रपणं निषिद्धम् ॥४८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हमारे मत में वही धर्म है जो तर्क पर निर्भर हो, कल्याणकारी हो और जिस में पशुओं के बध का विधान न हो ॥ ४८ ॥

वेदेषु येषु पशुविश्रपणप्रधानं
वेविद्यते वचनजातमनुक्रमेण ।
ते विश्वमात्रपरिरक्षणसद्व्रतेन
सम्पादिताः कथमहो! जगदीश्वरेण ॥४९॥

मंत्र-ब्राह्मणात्मक जिन वेदों में पशुहिंसा-समर्थक मंत्र विद्यमान हैं उनको ईश्वर ने कैसे बनाया यह समझ में नहीं आता ? ॥ ४९ ॥

सर्वे समानवपुषः समरूपचिह्नाः
सृष्टौ भवन्ति यदि तर्हि मनुष्यजातौ ।
प्राशस्त्यमेव कियदग्निसहोदरेषु
वेविद्यते वदति यन्निगमोऽपि भूयः ॥५०॥

मनुष्य जाति में जब सभी एक से हैं तब ब्राह्मणों का ही उनमें महत्त्व क्यों माना जावे ? ॥ ५० ॥

एवं स्वहृद्गतमुदीर्य समस्तभावं
मौनावलम्बनमुपेयुषि तत्र बुद्धे ।
धर्माज्ञया लघु तदुत्तरपक्षमेवं
चक्रे सनातनपथानुगतोऽपि कश्चित् ॥५१॥

इस प्रकार अपने हृदय का उद्गार निकाल कर मूकता को प्राप्त हुए बुद्ध के प्रति सनातनधर्म की ओर से एक सज्जन ने इस प्रकार उत्तर देना आरम्भ किया ॥ ५१ ॥

[ उत्तरपक्षः ]

शौद्धोदने ! जगति ये तव नामधेयं
सर्वज्ञ इत्यभिवदन्ति न ते प्रवीणाः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुद्धं मयेदमधुना तव बुद्धिमान्द्यं
सम्वीक्ष्य सर्वविषयेषु निवेश्य बुद्धिम् ॥५२॥

हे बुद्धदेव ! आपको जो पुरुष सर्वज्ञ कहकर संबोधित करते हैं वे अल्पज्ञ हैं यह बात आपको देखकर ज्ञात हुई है ॥ ५२ ॥

वेदाः प्रमाणमिति ये निगदन्ति लोके
विज्ञास्त एव बहुबुद्धिमतां समूहे ।
यस्मात्तदीयरचना जगदीश्वरस्य
निःश्वासरूपमरुदुद्गतदिव्यवर्णा ॥ ५३ ॥

संसार में विद्वान् वे ही हैं जो वेदों को स्वतः प्रमाण मानते हैं क्योंकि उसमें जो ज्ञान है वह ईश्वरीय है ऋषियों ने केवल उसका संकलन किया है ॥ ५३ ॥

तर्कोऽप्रतिष्ठ इति यन्मुनिभिः प्रगीतं
सत्यं तदस्य नरबुद्धिसमाश्रयत्वात् ।
बुद्धेश्च चञ्चलतया मनुजोद्भवाना-
मल्पज्ञतादिबहुदोषपरायणत्वात् ॥ ५४ ॥

"तर्कोऽप्रतिष्ठः" ऐसा जो मुनियों का मत है वह सर्वांश में ठीक है क्योंकि वह तर्क बुद्धि पर निर्भर है और अल्पज्ञ मनुष्यों की बुद्धि स्वभाव से चंचल है ॥ ५४ ॥

तर्कः स एव बहुमानमुपैति येन
रक्षामुपैति निगमो मुनिभिः प्रदिष्टः ।
वेदोपघातककुतर्कसमाश्रयस्तु
मन्दात्मनामनुगमादनवस्थ एव ॥ ५५ ॥

तर्क वह ही ठीक है जिससे वेदों की रक्षा हो। वेदोपघातक तर्क तर्क नहीं, किन्तु कुतर्क है और वह भी अनवस्था दोष से दूषित है ॥ ५५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यः पक्षपातरहितो जनजातमात्रे
निःश्रेयसं सततमभ्युदयञ्च सूते ।
धर्मः स एव न समुन्नतिमात्रभूमिः
केनापि विश्ववलये मनुजेन मान्यः ॥५६॥

पक्षपात छोड़कर जो मनुष्यमात्र के लिए अभ्युदय और मोक्ष का देनेवाला हो वही धर्म है। जो केवल अभ्युदय का करनेवाला है वह धर्म नहीं किन्तु मत है ॥ ५६ ॥

यज्ञार्थमत्र पशवो जगदीश्वरेण
सृष्टाः पुरा जगति तद्धितसम्प्रसूत्यै ।
यज्ञः परस्परमहोपकृतिक्रमेण
सृष्टेः परिस्थितिरियं मुनिभिः प्रदिष्टा ॥५७॥

महाकल्प के अनंतर ईश्वर ने यज्ञ के लिए पशु और पशुओं के लिए यज्ञ का आयोजन किया है इस परस्परोपकारभाव से ही सृष्टि रह सकती है ॥ ५७ ॥

स्वाभाविकीं विविधजीवगणप्रतिष्ठां
हिंसां निरोद्धुमुदिते भुवनेषु यज्ञे ।
कः पामरः समधिरोपयति प्रमादा-
त्पापापनोदनपरेऽपि मुधैव पापम् ॥ ५८ ॥

स्वभावतः प्राणिमात्र में प्रवृत्त हिंसाधर्म के रोकने में जिसकी प्रवृत्ति है उस वेद को कौन हिंसाप्रवर्तक कह सकता है ॥ ५८ ॥

पापः स एव भुवने पिशुनः स एव
मन्दः स एव जननीकदनः स एव ।
विश्वोपकारकमनन्तसुखैकरूपं
वेदप्रदिष्टमतिनिन्दति योऽत्र यज्ञम् ॥५६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेद-प्रतिपादित यज्ञ का जो जगत् में निंदन करता है वह स्वयं पाप है, पिशुन है, मूढ़ है और अपनी माता को वृथा कष्ट देने वाला है ॥ ५६ ॥

यः सार्वभौममतिसुन्दरमाधिपत्यं
पुण्योदयेन समुपैति जनः पृथिव्याम् ।
शक्तः स एव किल कर्तुमिहाश्वमेधं
यत्रैकभूतकदनं विधिना प्रदिष्टम् ॥६०॥

प्राचीन पुण्य के फल से जो इस लोक में चक्रवर्ती बन सकता है वह ही अश्वमेध में एक पशु का संज्ञपन कर सकता है ॥ ६ ॥

आपाततः प्रचलितां मनुजान्ववाये
हिंसां निषेधविधिबन्धनिबन्धनेन ।
यो यन्त्रयत्यनुपदं विधिवादरीत्या
धन्यः स मन्त्रनिचयो निगमोदरस्थः ॥६१॥

मनुष्यों में आपाततः प्रवृत्त हिंसा को विधिनिषेध के द्वारा जो पदे-पदे नियंत्रित करता है वह वैदिक मंत्र कदंब धन्यवाद के योग्य है ॥ ६१ ॥

योऽहिंसकानि विनिहन्ति निजार्थहेतो-
र्भूतानि भूमिवलये स नरोऽधमः स्यात् ।
सर्वोपकारकरणाय करोति यज्ञे
यो भूतविश्रपणमादरतः स वन्द्यः ॥६२॥

जो मनुष्य अपने उदर की पूर्ति के लिए जीवों की हिंसा करता है वह वास्तव में अधम है परन्तु जो विश्वोपकार के लिए यज्ञ में पशुहिंसा करता है वह निंदा के योग्य नहीं है ॥ ६२ ॥

सिंहो मृगं जलचरो मकरोऽपि मीनं
मीनो निजान्वयगतान्मनुजः समस्तम् ।
लोके चराचरमहो ! विनिहन्ति सत्त्वं
कस्तत्र दण्डविषयो गुणपारवश्यात् ॥६३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्त्वादि गुणों के तारतम्य से सिंह मृग को, मकर मीन को, मीन अपने कुटुम्ब को, मनुष्य सब को, स्वभावतः मारता हुआ संसार में दीखता है ॥ ६३ ॥

स्वाभाविकी जनिभृतां मनसः प्रवृत्ति-
योषासु गच्छति तथाऽऽमिषभक्षणेऽपि ।
वेदेन सा विधिमुखेन यदि प्रदिष्टा
किञ्चित्कथञ्चिदपराद्धमिदं न तेन ॥६४॥

मांसभक्षण और स्त्रीप्रसंग में मनुष्यों की स्वभाव से प्रवृत्ति होती है। वेद यदि परिसंख्या विधि से उसका नियंत्रण करता है तो इसमें उसका क्या दोष है ? ॥ ६४ ॥

निःश्वासनिर्गमनतो गमनागमाभ्या-
मन्नादने भवति या जलपानमध्ये ।
सा भूतले जनिभृता यदि वारणीया
हिंसा तदाऽस्तु भवतां विषयः समर्थः ॥६५॥

श्वास के निकलने से, चलने फिरने से, भोजन और जलपान के समय, जो आकस्मिक हिंसा होती है उसको यदि आप रोक लें तब आपका पक्ष ठीक हो सकता है ॥ ६५ ॥

शक्नोति नैव यदि कर्तुमलं जगत्यां
सम्प्राप्य जन्म मनुजो मनसाऽप्यहिंसाम् ।
का तर्हि तस्य नरजस्य दया यदन्या-
नेषः समाक्षिपति वेदपथप्रवृत्तान् ॥ ६६ ॥

संसार में जन्म लेकर मनुष्य यदि स्वयं अहिंसा व्रत का पालन नहीं कर सकता है तब उसे औरों पर आक्षेप करने का क्या अधिकार है ? ॥६६॥

सर्वेऽपि बौद्धमतगाः परमामहिंसां
पातुं कथञ्चिदपि सन्ति न शक्तिमन्तः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चेत्सन्ति भूमिवलये कथमस्ति तेषा-
माजीवनं यदि तदस्ति कुतो दयित्वम् ॥६७॥

बौद्ध भी इस प्रकार से अहिंसा व्रत का सर्वथा पालन नहीं कर सकते हैं, यदि करते हैं तो उनका जीवन नहीं रह सकता है। जीवन रखते हुए सर्वांश में दया का पालन नहीं हो सकता है ॥ ६७ ॥

दीनेषु यः करुणया दयितान्तनोति
सूते चराचरमिदं जगदापतङ्गम्।
नो वेत्ति किं स करुणानिलयोऽपि हिंसा-
सम्बन्धि पातकमनन्तकलावतारः ॥ ६८ ॥

स्वभाव से ज़ो दीनवत्सल है तथा चराचर जगत् का कर्त्ता है वह क्या हिंसा संबंधी पाप नहीं जानता है? ॥ ६८ ॥

विश्वेश्वरः स करुणावरुणालयोऽपि
भूत्वा दयालुरपि यद्यजनं जगत्याम्।
आदिष्टवान्निगममन्त्रशतेन तत्र
हिंसामतो निभृतमत्र रहस्यमास्ते ॥ ६९ ॥

दयालु और न्यायकारी बनकर भी ईश्वर ने वेद में सैकड़ों मंत्रों द्वारा यज्ञ में जो पशु-विश्रपण बताया है इसमें कुछ तत्त्व है ॥ ६९ ॥

विश्वं समस्तमपि यत्र विलासमात्रं
निःश्वासमात्रमगमो निगमोऽपि यत्र।
देवे समस्तजगतामधिपे महेशे
का कल्पना मनुजबुद्धिमतामतानाम् ॥७०॥

समस्त संसार जिसका केवल विलासमात्र है तथा जिसके निःश्वास मात्र समस्त वेद हैं उसके कार्य में यदि मनुष्य तर्क करें तो उनकी मूर्खता है ॥ ७० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कश्चिद्रजोगुणपरः परमेश्वरस्य
राज्ये तमोगुणपरः किल कश्चिदास्ते ।
सत्त्वप्रधानकरणः किल कोऽपि तस्मा-
दैक्यं कथं भवितुमर्हति जातिमध्ये ॥७१॥

ईश्वर के राज्य में कोई रजोगुण प्रधान है, कोई तमोगुण प्रधान है, कोई सत्त्वगुण प्रधान है, इस कारण जाति में एकता नहीं हो सकती है ॥ ७१ ॥

वृत्तद्वयानुगतपादविमिश्रणेन
वृत्ताऽऽगमे जनिमुपैति यथोपजातिः ।
सर्वासु जातिषु तथैव महेश्वरेण
सम्वेशितो विनिमयादुपजातिभेदः ॥७२॥

छन्दःशास्त्र में दो वृत्त के मिल जाने से जिस प्रकार उपजाति वृत्त बनता है उसी प्रकार दो भिन्न भिन्न जातियों के मिल जाने से मनुष्य जाति में भी तीसरी उपजाति बन जाती है ॥ ७२ ॥

प्रत्यक्षमत्र वट-पिप्पल-शाल-ताल-
हिन्ताल-शाल्मलि-रसाल-तमालभेदैः ।
भेदङ्गता जगति सा यदि वृक्षजाति-
रेकैव किं पुनरिहान्यविकल्पनेन ॥ ७३ ॥

संसार में वृक्ष जाति एक है उसमें भी यदि वट पिप्पलादि भेद विद्यमान हैं तब अन्य जातियों में विद्यमान भेद कैसे मिट सकते हैं ॥ ७३ ॥

सत्त्वानुरूपपरमाणुसमुद्भवेन
पूर्वं समुद्भवनतोऽग्निसहोदरत्वात् ।
देवाधिदेववदनाम्बुजसम्प्रसूते-
र्न ब्राह्मणोऽन्यमनुजैर्भुवने समानः ॥७४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सात्त्विक परमाणुओं के योग से, सबसे पहले उत्पन्न होने से, अग्नि सहोदर होने से, ब्रह्मा के मुख से उत्पन्न होने के कारण ब्राह्मण जाति सब के समान नहीं है ॥ ७४ ॥

य: पूर्वमेति जननं स महत्त्वमेति
ज्यैष्ठ्यं स एव समुपैति स एव नूनम् ।
श्रैष्ठ्यं समस्तभुवनेष्विदमस्ति सिद्धं
यद् ब्राह्मणे निखिलमस्ति निसर्गसिद्धम् ॥७५॥

जो पहले जन्म लेता है वह बड़ा होता है वही ज्येष्ठ और श्रेष्ठ भी होता है, यह संसार में प्रसिद्ध है, यह बात ब्राह्मण जाति में स्वभाव-सिद्ध है ॥ ७५ ॥

एतावदुक्तवति वेदविदाम्वरिष्ठे
सञ्जातदर्पदलनेऽत्र तथागतेऽपि ।
मूकायितं यदनुगामिजनैस्तदानीं
धर्मस्य पूर्णविजयाय तदाऽऽबभूव ॥७६॥

इतना कहते हुए बुद्ध अंत में निरुत्तर हुए इसीसे सबको उनके बुद्धि बल का पता लग गया। अंत में सनातनधर्म का विजय हुआ ॥ ७६ ॥

वृत्तं निवेदयितुमेतदनुग्रहेण
पातालतालुतलगानयमुष्णरश्मिः ।
अस्ताचलं प्रतिजगाम निजांशुवृन्दै-
र्विद्रावयन्नरिमिवाधिगतं तमिस्रम् ॥७७॥

इस वृत्तांत को पाताल में पहुँचाने के लिए भगवान् सूर्य अस्ताचल की चूड़ा पर पहुँच गए ॥ ७७ ॥

आलोक्य तस्य चरमाचलचूडचुम्बि-
बिम्बं सहस्रकिरणस्य विहाय सर्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मानुरोधवशतोऽग्निसहोदराणां
सान्ध्यो विधिः समुदयं समुपाजगाम ॥७८॥

सूर्य को अस्ताचल पर जाता हुआ देखकर धर्म के पारवश्य से ब्राह्मणों ने अपना अपना सन्ध्यावन्दन करना आरम्भ किया ॥ ७८ ॥

यज्ञोपवीतविलसद्धृदयप्रदेशं
स्कन्धप्रतिष्ठितसुगन्धितदिव्यमालम् ।
कर्पूरचन्दनविलेपनभव्यभालं
वृन्दं तदाऽतिशुशुभेऽग्निसहोदराणाम् ॥७९॥

हृदय प्रदेश में यज्ञोपवीत, गले में सुन्दर-सुन्दर पुष्पमाला और मस्तकों पर विभूति धारण किये हुए ब्राह्मणों का समूह उस समय बड़ा ही सुन्दर प्रतीत होता था ॥ ७९ ॥

सन्ध्याविधेरनुगमेन विधेर्नियोगा-
त्सन्ध्याऽपि तत्र समये सगुणाभिधाना ।
तादृग्बभूव न यथा कविभिः पुराणै-
रालोकिता न वचनैरतिवर्णिताऽपि ॥८०॥

सन्ध्या कर्म के अनुष्ठान से सार्थकता को प्राप्त हुआ सन्ध्या समय भी ऐसा सुन्दर प्रतीत होता था जैसा पहले कभी न हुआ था ॥ ८० ॥

अस्तङ्गते विधिवशादरुणांशुबिम्बे
सान्ध्ये विधावपि समाप्तिमनुप्रयाते ।
धर्मानुगैर्बुधवरैरभितो निबद्धं
बुद्धं सभाजयितुमागमदन्धकारः ॥८१॥

सूर्य के छिप जाने पर जब सन्ध्या समय समाप्त हुआ तब धर्म के द्वारा पराजित हुए बुद्ध का आश्वासन करने के लिए अन्धकार आ गया ॥ ८१ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मेऽधिशासति भुवं विगतान्धकारे
भूमण्डलेऽपि बहु नष्टमतप्रवादे ।
युक्तं तवागमनमत्र न वेति वक्तुं
रोषादिवायमुदयाचलमापदब्जः ॥८२॥

भारत में धर्म का समाज होने पर और उसके द्वारा अन्धकार के मिट जाने पर भी अन्धकार का फिर दुबारा आना उचित नहीं यह कहते हुए चन्द्रोदय हुआ ॥ ८२ ॥

तारापथं समधिरोहति पूर्वभागा-
त्ताराधिपे कुमुदिनीवनितैकनाथे ।
तारागणो गतमदः प्रबभूव यस्मा-
न्निस्तारकं वियदभूदत एव तस्य ॥८३॥

तारापथ में ताराधिप के आने पर समस्त तारागण विगतमद हो गये इसीलिए उसका निस्तारक आकाशमण्डल हुआ ॥ ८३ ॥

धर्मोऽप्यधर्मसहचारिणमेनमादौ
वादे विजित्य कलिकालनवावतारम् ।
वेदादिशास्त्रगततर्कबलेन तत्र
देशे चकार निगमप्रथमावतारम् ॥८४॥

अधर्म के साथ सहयोग करने वाले बुद्ध को विवाद में पछाड़ कर धर्म ने भी बिहार प्रांत में सर्वत्र सनातन धर्म का डंका बजा जिया ॥८४॥

धर्मावतारमवलोक्य बिहारदेशे
पापावतारविलयाय कृतप्रतिज्ञम् ।
रामावतारसमयः स्वयमेव तत्र
वेदावतारमवलम्ब्य समाजगाम ॥८५॥

बिहार प्रदेश में पाप नाश करनेवाले धर्मदेव को देखकर वेदावलंबी श्रीरामावतार का समय फिर आकर उपस्थित हुआ ॥ ८५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुद्धं विवादविषये विजितं निशम्य
धर्माधिपप्रतिभुवा जगति प्रसिद्धम् ।
धर्मं विलोकयितुमुत्तरलायताक्षी
देवी गिरामवततार नभः प्रदेशात् ॥८६॥

धार्मिक पंडितों के द्वारा बुद्ध को पराजित सुनकर धर्मदेव के देखने के लिए आकाश मार्ग से भगवती सरस्वती अवतीर्ण हुई ॥ ८६ ॥

विद्युत्प्रभामिव समस्तदिगन्तराणि
लोकोत्तरद्युतिचयेन विनिद्रयन्तीम् ।
तामीक्ष्य धर्मपथगा वचसामधीशां
पादाभिवन्दनपरा विनयादभूवन् ॥८७॥

विद्युत् के समान सर्वत्र प्रकाश करनेवाली भगवती सरस्वती को देखकर सभी सनातन धर्मी उनके चरणों में प्रणाम करने लगे ॥ ८७ ॥

दत्त्वाऽऽशिषं विजयसन्ततिसाधनार्हां
धर्माय पादपतिताय गिरामधीशा ।
देवी तदा भगवती द्रुतमन्तरिक्षे
लीना बभूव चपलेव नवाभ्रवृन्दे ॥८८॥

पादपतित धर्मदेव के प्रति उत्तरोत्तर विजय सूचक आशीर्वाद देकर भगवती वागीश्वरी अन्तरिक्ष में अन्तर्हित हो गई ॥ ८८ ॥

अन्तर्हितां भगवतीमवलोक्य हर्षा-
द्धर्मानुगो बुधगणो विजयप्रसन्नः ।
सेनाधिपेन सह तत्र विहारदेशे
सर्वात्मनाऽऽरभत सामयिकं विहारम् ॥८९॥

भगवती के अन्तरिक्ष होने पर विजय से प्रसन्न हुए विद्वानों के साथ इन्द्र भी विहार में सामयिक विहार करने लगे ॥ ८९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चन्द्रज्योतिं नभसि विमले शारदीमाशु पश्य-
न्मानोपेतामतिगुणवतीं मालतीञ्चाभ्युपेत्य ।
वेदप्राणः प्रमुदितमनास्तत्र रत्नैरुपेतां
भेजे भूमिं सततमखिलानन्दजुष्टः स धर्मः ॥६०॥

विमल आकाशमण्डल में शरत्कालिक चन्द्रमा का प्रकाश, तथा भूमण्डल में मानवती मालती का विकास इन दोनों को एक साथ प्राप्त करके वेदप्राण धर्मदेव ने वहाँ रत्नगर्भा पृथिवी पर अपना आधिपत्य स्थापित किया ॥ ६० ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये
बुद्धपराजयो नाम द्वादशः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## त्रयोदशः सर्गः

विजितं प्रबलेन भूभुजा
बुधमाकर्ण्य विहारमण्डले ।
ववृधे बहु नास्तिकव्रजे
नवविक्षोभपरम्परायितम् ।। १ ।।

प्रबल राजा के द्वारा विहार में पराजय को प्राप्त हुए बुद्ध को सुन कर नास्तिक मण्डली में बड़ा विप्लव मच गया ॥ १ ॥

अगमन्बहवो दिगन्तरं
बुधपक्षापगमेन भिक्षवः ।
बहवो निजकेशलुञ्चनं
व्यदधुर्वीक्ष्य तथाविधान्दशाम् ।। २ ।।

बुद्ध का पक्ष गिर जाने के कारण बहुत से भिक्षु इधर उधर भाग गए। रहे सहों ने केशलुंचन करना आरम्भ किया ॥ २ ॥

विगते सुगतेऽप्यनुक्रमा-
दपहाय स्वजनं वियोगिनी ।
विरहाग्निविदूनमानसा
विललापास्य वधूरनारतम् ।। ३ ।।

राजपाट छोड़कर गए हुए अपने पति को सुन कर वियोगिनी बुद्धबधू ने जो विलाप किया वह इस प्रकार है ॥ ३ ॥

हृदयेश्वर ! कुत्र शासनं
तव तद्यातमितो वदाधुना ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिदिवेऽपि न तेऽधुना पदं
परिपश्यामि महेन्द्ररक्षिते ॥ ४ ॥

हे हृदयेश्वर ! भारतवर्ष में जो आपका राज्य था वह अब कहाँ गया ? इन्द्र के द्वारा रक्षित स्वर्ग में भी अब आपको कोई स्थान नहीं मिलेगा ॥ ४ ॥

अवतारपदं भवान्गतः
कृपया यस्य स एव भूतले ।
भवता न कदापि सत्कृतः
फलमीदृक्किल तस्य सङ्गतम् ॥ ५ ॥

जिस की दया से आप अवतार तक माने गए, आपने उस ईश्वर का भी निरादर किया इसी कारण से आपकी यह दशा हुई है ॥ ५ ॥

न शिवार्चनमत्र भूतले
विहितं नैव जनार्दनार्चनम् ।
न गणाधिपतेः पदार्चनं
भवता किं विहितं यथोचितम् ॥ ६ ॥

आपने नकली शिव का पूजन किया, न भगवान् विष्णु का अर्चन किया न गणपति को प्रणाम किया, इसलिए आपने कुछ भी न किया ॥६॥

न पुराणकथा समादृता
निगमानामपि नादृतिः कृता ।
न कृतं परलोकसाधनं
विफलं सर्वमभूदतः कृतम् ॥ ७ ॥

न पुराण वेद का आदर किया, न वेद का आदर किया, न दर्शनों का दर्शन किया, इस कारण आपका किया हुआ सब निष्फल हो गया ॥७॥

सुजनैरनुभूयते फलं
भुवि यस्यातितरां पदे पदे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विविधाध्वरजातमत्र त-

द्भवता नैव कदाप्यनुष्ठितम् ।। ८ ।।

सञ्चय जिसके फल का प्रति दिन अनुभव करते हैं वह अनेक प्रकार का यज्ञ भी आपने कभी नहीं किया ॥ ८ ॥

विनिपात्य बलेन भूसुरा-

न्भवता यद्विधवाकदम्बकम् ।

परिवर्द्धितमत्र भूतले

तदिदानीं मम दुःखकारणम् ।।९।।

आपने बहुत से ब्राह्मणों को समूल नष्ट कर के जो विधवाओं का समूह एकत्र किया है वही आज मेरे दुःख का कारण बन गया है ॥ ९ ॥

विलपन्ति यथा विना पतिं

विधवाः शोकवशेन भूतले ।

सधवा विलपाम्यहन्तथा

त्वयि सर्वज्ञ ! पराभवं गते ।।१०।।

जिस प्रकार संसार में पति के बिना विधवा विलाप करती है उसी प्रकार आपके चले जाने पर मैं सधवा भी विलाप कर रही हूँ ॥ १० ॥

बहुशो विनिवारितो मया

निजकर्तव्यवशेन भूतले ।

जगदीशविनिन्दनात्परं

न वचो मे भवता समादृतम् ।।११।।

मैंने अपना कर्तव्य समझ कर आप को कई वार ईश्वर की अवहेलना करने से बचाया परन्तु आपने मेरी बातों पर ध्यान नहीं दिया ॥ ११ ॥

अधिगत्य जगत्त्यनारतं

करुणां भारतमात्रविश्रुताम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पशुमात्रकुले दयालुना
कथमाविष्कृतमन्यपीडनम् ॥१२॥

संसार में दयालु बनकर आपने पशुओं पर तो दया दिखाई परन्तु औरों के ऊपर उसका व्यवहार नहीं कया ॥ १२ ॥

सह गच्छति यो जनव्रजै-
र्मरणान्तेऽपि सखेव सत्वरम् ।
निगमानुमतः सनातनो
बत ! धर्मः स विमर्दितस्त्वया ॥१३॥

मरण के बाद भी मित्र के समान जो जीव के साथ जाता है उस वैदिक सनातन धर्म का आपने कदापि आदर नहीं किया ॥ १३ ॥

अदयस्त्वयि भारतेऽधुना
विधिरप्यस्ति यतो भवानलम् ।
प्रगतो बत ! कान्दिशीकतां
बलवानप्यबलः समाभवः ॥१४॥

भारत में इस समय आपके ऊपर दैव भी कुपित हो रहा है इसीलिए आप भयभीत और बलहीन हो गए हैं ॥ १४ ॥

बहवः कथयन्ति भूतले
मनुजा धैर्यसमावलम्बनम् ।
विपदः शमनं परन्न तद्
विपदि स्थातुमपीच्छति क्षणम् ॥१५॥

धैर्य के धारण करने से विपत्ति नष्ट होती है ऐसा बहुतों का मत है परन्तु विपत्ति काल में धैर्य ठहरता नहीं है ॥ १५ ॥

समयस्य विचेष्टितं मया
जगतीदं बहुधाऽनुमीयते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिवर्तनमन्यथा कथं
मम भाग्यस्य बलादुपस्थितम् ॥१६॥

मेरी समझ में यह सब काल की वक्र गति प्रतीत होती है अन्यथा इतना परिवर्तन मेरे भाग्य में न होता ॥ १६ ॥

भवितव्यमिदं बलीयसा
बत ! भाग्याक्षरलेखकेन मे ।
लिखितं मम भालपट्टिका-
मुपलभ्यातितरां सुदुःसहम् ॥१७॥

विधाता ने मेरे भाल पटल में यह कष्ट भवितव्यता के वश में पड़ कर लिखा है जो मुझे इस समय सहन करना पड़ता है ॥ १७ ॥

अलिखद्विधिरक्षरावलिं
स कपाले मम निश्चितं यदा ।
विशदाशयलेखलेखिका
पतिता किन्न तदाऽस्य लेखनी ॥१८॥

जिस समय विधाता मेरे मस्तक पटल में भाग्याक्षर लिखने बैठे थे उस समय उनके हाथ से कलम छूट गई थी, ऐसा प्रतीत होता है ॥ १८ ॥

अथवा कर एव कम्पनं
मम भाग्येन कुशेशयस्थितेः ।
समवापदतो मदक्षरा-
वलिमध्ये निपपात तन्मसी ॥१९॥

अथवा मेरे भाग्याक्षर लिखते हुए ब्रह्मा का हाथ काँपने लगा होगा, इससे उन अक्षरों पर कलम से स्याही झड़ पड़ी ॥ १९ ॥

मम कष्टपरम्परामनु-
स्मरतस्तस्य नवाश्रुबिन्दवः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपतन्किमु मल्लिपिक्षणो
मम भाग्याक्षरनाशहेतवः ॥२०॥

अथवा भाग्याक्षर लिखते समय मेरे कष्ट का उल्लेख करते करते विधाता रोने लगे इस कारण उन पर उनके अश्रु-विन्दु गिर गये होंगे ॥ २० ॥

इति नास्ति यदि प्रकल्पनं
मम भाग्याक्षरलेखनिर्णये ।
कथमाविरभूदियन्तदा
कुदशा याऽद्य दुनोति मानसम् ॥२१॥

मेरे भाग्याक्षरों के निर्णय में यदि यह कल्पना ठीक नहीं है तो मुझ पर ऐसा दारुण कष्ट कहाँ से आ गया है ? ॥ २१ ॥

अदयोऽसि दयापरोऽसि वा
मयि नैतत्समुदेति मानसे ।
परमेतदुदेति नाधुना
मम भाग्ये तव दर्शनं पुनः ॥२२॥

आप मुझपर दयावान् हैं, या निर्दय हैं, यह बात अब मेरे विचार में नहीं आती है। मेरे मन में तो अब यह आता है कि आप का मिलना मेरे लिए सर्वथा असंभव है ॥ २२ ॥

मयि नास्ति दयापरस्य ते
यदि केनाप्युदितेन हेतुना ।
करुणा करुणारुणोक्षणैः
क्षणमेनं प्रविलोकयात्मजम् ॥२३॥

हे प्राणनाथ ! यदि आप किसी कारण से मुझ पर दया नहीं रखते तो इस अपने आत्मज पर तो क्षण भर दया कीजिए ॥ २३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भुवि तिष्ठति येन निश्चलो
निजवंशस्तनयेन सोऽधुना।
विरहे तव दीनरोदनै-
र्निजशय्यामपि नैव वीक्षते ॥२४॥

संसार में जिससे अपना वंश चलता है वह पुत्र आप के वियोग में आपकी सूनी शय्या को देख कर रो रहा है ॥ २४ ॥

पशवो विलुठन्ति ये त्वया
दयितामेत्य पुराऽतिरक्षिताः।
शतशो विलपन्ति पत्रिण-
स्तव नामस्मरणेन पीडिताः ॥२५॥

दयावान् होकर आपने जिन पशु और पक्षियों की रक्षा की थी वे आज आप के वियोग में विलाप कर रहे हैं ॥ २५ ॥

नवदाडिमबीजदानतो
बहुमानं गमिता त्वयैव या।
विधुरा वत ! सारिकाऽद्य सा
तव चित्राणि विलोक्य वेपते ॥२६॥

अनार के दाने खिला खिला कर जो शुक आप ने पाले थे वे आप का चित्र देख देख कर आप के वियोग में व्याकुल हैं ॥ २६ ॥

तव नामपदाक्षरावलिं
निजकण्ठे विनिवेश्य मामपि।
मुदितामकरोदनुत्तरा
विरहाग्नौ वत ! साऽद्य मेनका ॥२७॥

जो आप का नाम ले ले कर जो मुझको बार बार प्रसन्न करती थी वह मैना भी आपकी विरहाग्नि में भुन रही है ॥ २७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निहितो नवनागदन्तके
स मयूरोऽपि निशम्य ते गतिम् ।
न करोति कदापि मण्डली-
कृतबर्हः प्रमदेन नर्तनम् ॥२८॥

नागदंतक पर बैठा हुआ आप का मयूर भी आप के वियोग में मंडल बाँध कर कभी नृत्य नहीं करता है ॥ २८ ॥

मधुराननवीक्षणाकुला
हरिणी या भवतैव वर्द्धिता ।
नयनाम्बुकणैरनुक्षणं
विधुरा सा भुवमद्य सिञ्चति ॥२९॥

आपकी पाली हुई जो हिरनी सर्वदा आप का मुख देखा करती थी वह आज आप के वियोग में नयनजल से पृथ्वी का सिंचन कर रही है ॥ २९ ॥

स्फटिकोपलबद्धचत्वरे
यदभूत्ते जलयन्त्रमन्दिरम् ।
जलनिर्गमनच्छलेन त-
द्रुत ! रोदित्यधुना प्रतिक्षणम् ॥३०॥

स्फटिक शिला पर जो आपने सुन्दर जल-यन्त्र लगाया था वह भी आज आपके वियोग में जलबिन्दु के बहाने से रोदन कर रहा है ॥ ३० ॥

ममलोचनसाम्यमस्ति वा
भुवि नास्तीति निरोक्षितुं त्वया ।
शफरीयुगलं यदाहृतं
जलमध्येऽपि तदद्य निश्चलम् ॥३१॥

मेरा नयन उपमित करने के लिए आपने जो शफरीयुग मंगाया था वह भी आज जल में क्रीड़ा नहीं करता है ॥ ३१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निजमन्दिरगोपुरोदरे
तव मोदाय निबद्धमुद्धतम् ।
मृगराजकुलं न दृश्यते
वद तत्कुत्र गतं भवत्प्रियम् ॥३२॥

महल के दरवाजे पर मनोविनोद के लिए जो आप ने शेर पाले थे वे आज बन्धन तोड़कर न जाने कहाँ चले गये हैं ॥ ३२ ॥

गगनोदरमण्डलभ्रमै-
रनिशं ये कलहुङ्कृतिप्रियाः ।
भवनोदरमाविशन्क ते
वत ! पारावतपोतका अपि ॥३३॥

आकाश में मंडलभ्रमण के द्वारा आपका मन बहला कर जो शब्द करते हुए आकाश से उतरते थे वे पारावत भी आज दृष्टि में नहीं आते हैं ॥ ३३ ॥

इति यावदनुज्झितक्रमः
स विलापो न समाप्तिमागमत् ।
तदवध्ययमाविशद्गृहं
त्रिवशस्तस्य महीपतेः सुहृत् ॥३४॥

इस प्रकार जब तक राजमहल में विलाप शांत न होने पाया तब तक बुद्ध का मित्र चार्वाक उपस्थित हुआ ॥ ३४ ॥

भवने स निशम्य रोदन-
ध्वनिमध्वन्यपि मूर्छितं जनम् ।
परिवीक्ष्य नितान्तदुःखितो
गतधैर्यः प्रबभूव तत्क्षणम् ॥३५॥

महल में रोने की आवाज सुनकर और मार्ग में मनुष्यों को मूर्छित देखकर उसका भी धैर्य्य मित्रवियोग में छूट गया ॥ ३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गतभूषणादीप्तिमाकुलां
हृदयस्थेन वियोगवह्निना ।
विधवामिव तां महीपतेः
स ददर्शात्र महीपतेः प्रियाम् ॥३६॥

वियोगविधुर, वस्त्राभरणशून्य, दीनाक्रंदनपरायण राजमहिषी को महल में विधवा की तरह विलाप करते हुए उसने देखा ॥ ३६ ॥

वचनैरतिसान्त्वनोचितैः
स तदानीं परितोष्य सत्वरम् ।
सुहृदो गृहिणीं तदाज्ञया
शिविरं प्राप्य महेन्द्रमब्रवीत् ॥३७॥

येनकेन प्रकारेण उसको सान्त्वनोचित वचनों से शान्त करके उसकी आज्ञा लेकर चार्वाक धर्म्मदेव के शिविर में जाकर इन्द्र से यह कहने लगा ॥ ३७ ॥

सुगतस्य पराजयं जना-
दधिगत्य प्रधनार्थमुद्यतः ।
अहमस्मि तवाग्रतः स्थितो
वद किञ्चिद्यदि शक्तिरस्ति ते ॥३८॥

बुद्ध का मनुष्यों से पराजय सुनकर मैं आपके समक्ष विवाह के लिए आया हूँ, आप में कुछ साहस हो तो बोलिए ॥ ३८ ॥

अनिपात्य बलेन दुर्द्धरं
भुवि मामुग्रतरप्रकल्पनम् ।
विजयः क तवास्ति भूतले
मदधीनः किल ते पराजयः ॥३९॥

विवाद में मुझ चार्वाक को न जीत कर आपका विजय झूठा है। इस समय आपका पराजय मेरे अधीन है ॥ ३९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति तस्य निशम्य भाषितं
मदमत्तस्य महेन्द्रविक्रमः ।
विबुधः समवोचदादरा-
दुचितं तत्पुरतो यथाक्रमम् ॥४०॥

इस प्रकार चार्वाक की बात सुनकर इन्द्रतुल्य पराक्रम एक सनातन-धर्मी विद्वान् ने चार्वाक से कहा ॥ ४० ॥

अधितिष्ठति कुत्र मानवे
कियतो सद्‌गुणसन्ततिः क्रमात् ।
इति वेदविदो विदन्ति नो
गुणशून्या भुवने भवद्विधाः ॥४१॥

किस मनुष्य में कितना गुण है इसका परिमाण विद्वान् ही लगा सकते हैं। आप जैसे इसका अनुमान नहीं कर सकते हैं ॥ ४१ ॥

यदि सन्ति गुणास्त्वयि द्रुतं
स्वयमेष्यन्ति विकासमद्य ते ।
मृगनाभिरहो ! निबोध्यते
शपथैः केन मनुष्यजन्मना ॥४२॥

यदि आप में गुण हैं तो वे आज स्वयं प्रकट हो जावेंगे। शपथ खाकर कस्तूरी के गुण का कोई वर्णन नहीं करता है ॥ ४२ ॥

इति वादिनमेनमुद्धतः
कृतनानाविधतर्ककल्पनः ।
परपक्षविदारणक्षमं
झटिति प्राह स नास्तिकोत्तमः ॥४३॥

इस प्रकार कहते हुए धार्मिक विद्वान् के प्रति जो कुछ चार्वाक ने कहा वह ज्यों का ज्यों हम भी उपस्थित करते हैं ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[ पूर्वपक्षः ]

निगमानुगताः प्रतिज्ञ्चणं
जगदीशं समुदाहरन्ति यम् ।
स किमस्ति यदस्ति तद्भवे
वद मानं हृदि ते यदि स्थितम् ॥४४॥

आप जिस ईश्वर को जगत् का कर्त्ता मानते हैं उसके सद्भाव में आप के पास प्रमाण क्या है ? ॥ ४४ ॥

जगदेतदनुज्झितक्रमं
जलधारावदनन्तकालतः ।
प्रचलत्युपचीयते स्वयं
स्वयमेवापचयं प्रगच्छति ॥४५॥

यह संसार अनन्तकाल से जलधारा के समान चला आ रहा है। यह कभी उपचय को प्राप्त होता है, कभी अपचय को ॥ ४५ ॥

न हि तस्य विनिश्चये क्षमं
किमपि ज्ञानमलं यदक्षजम् ।
निगमस्य कथैव तत्र का
जगदीशे सति तस्य सम्भवात् ॥४६॥

ईश्वर के सद्भाव में इन्द्रियजन्य ज्ञान पर्याप्त नहीं हो सकता है। अब रहा वेद ? उसका प्रमाण तब माना जा सकता है जब पहले ईश्वर सिद्ध हो ॥ ४६ ॥

दधिगोमयमिश्रणाद्यथा
स्वयमुद्भूतिमुपैति वृश्चिकः ।
परमाणुसमूहसङ्गमा-
ज्जगदेतत्सचराचरं तथा ॥४७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिस प्रकार दही और गोबर के मिल जाने से अपने आप बिच्छू पैदा हो जाता है इसी प्रकार आपस में परमाणुओं के मिलने से चराचर जगत् बन जाता है ॥५७॥

परमाणुकदम्बकं ततो
जगतः कारणमस्ति नेश्वरः ।
अपकर्षणमेषु कारणं
परमाणुष्वनुकर्षणं क्रमात् ॥४८॥

परमाणुओं में अपकर्षण तथा अनुकर्षण इन दो शक्तियों के योगायोग से जगत् बनता है । इसलिए ईश्वर उसका कर्ता नहीं है ॥ ४८ ॥

अनुकर्षति लोहगोलकं
निजशक्तेरुदयेन चुम्बकः ।
जलवह्निमयास्तथा कणाः
स्वयमाकर्षणभावतः स्थिराः ॥४६॥

जिस प्रकार चुम्बक अपनी शक्ति से लोहे को अपनी ओर आकृष्ट कर लेता है उसी प्रकीर परस्पर तत्त्वों के परमाणु भी आपस में आकृष्ट हो जाते हैं ॥ ४६ ॥

[ उत्तरपक्षः ]

हृदयस्थितमेवमादरा-
त्समुदीर्य स्थितवत्यतःपरम् ।
सुगतप्रतिपक्षखण्डने
मतिमानेवमदात्समुत्तरम् ॥५०॥

इस प्रकार अपने हृदय का भाव कह कर शान्त हुए चार्वाक के प्रति धार्मिक पंडित ने जो कहा वह इस प्रकार है ॥ ५० ॥

भवता यदगादि तन्मतं
न मतं बुद्धिमतां यतः स्थितम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगदीशविनिश्चयक्रमे
जगदेवेदमनुक्रमागतम् ॥५१॥

हे नास्तिकशिरोमणे ! आपका जो मत है वह विद्वदनुमत नहीं है क्योंकि ईश्वर के सद्भाव में पहला निदर्शन स्वयं जगत् है ॥५१॥

प्रकृतिः परमाणुरूपता-
मुपयाता जडतां स्वभावतः ।
प्रगताऽनुमतैव कोविदैः
कथमस्यां परिवृत्तिसम्भवः ॥५२॥

परमाणुरूप जो प्रकृति है वह स्वभावतः जड़ है, चेतन नहीं है । इस कारण बिना चेतनता के उसमें परिवर्तन होना असम्भव है ॥ ५२ ॥

चितिशक्तिमपास्य सर्वथा
यदि तस्यां परिवृत्तिरुच्यते ।
उदयं समुपैति सा कथं
वद चार्वाक ! विचार्य सूत्तरम् ॥५३॥

चेतन सत्ता को छोड़ कर यदि आप उसमें परिवर्तन मानते हैं तो उसका कारण क्या है क्योंकि बिना कारण के कार्य नहीं होता है ॥५३॥

अनिशं दिवि सूर्यचङ्क्रमः
समये भूमितले ऋतुक्रमः ।
कथमाविरभूदनुक्रमा-
दिति सर्वं हृदये विचार्यताम् ॥५४॥

अन्तरिक्ष में सर्वदा सूर्य का भ्रमण, भूलोक में समय समय पर ऋतुओं का परिवर्तन, यथाक्रम जो होता है इसका कर्त्ता कौन है ॥५४॥

न हि तन्तुमृते पटोदयः
क कुलालेन विना घटोदयः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगतो रचना पुनः कथं
जगदीशेन विना भविष्यति ॥५५॥

तन्तुवाय के बिना जब पट नहीं बन सकता, कुलाल के बिना घट नहीं बन सकता, तब जगदीश के बिना जगत् कैसे बनेगा ॥ ५५ ॥

दधिगोमययोर्विमिश्रणे
यदि शक्तिः परिनिष्ठिता कथम् ।
न करोत्यहिकच्छपात्मनां
भुवि साऽऽविष्कृतिमेतदुच्यताम् ॥५६॥

दही और गोबर के मिलने में यदि आप वृश्चिक उत्पन्न होने की शक्ति मानते हैं तो उससे सर्प, कच्छप आदि प्राणी क्यों नहीं उत्पन्न होते ॥५६॥

यदि जन्तुविशेषसम्भवे
विनियुक्तं रभसेन केनचित् ।
दधिगोमययोर्विमिश्रणं
वद कस्तत्र नियामकः प्रभुः ॥५७॥

यदि जन्तुविशेष के ही उद्भव में दधि-गोमय कारण हैं तब उस का नियमन करनेवाला कौन है जो इतर प्राणी उत्पन्न नहीं होने देता है ॥ ५७ ॥

यदि काऽपि विशेषयन्त्रणा-
प्रतिकर्त्री नवशक्तिसंहतिः ।
उभयोर्निहिताऽस्ति साऽपि कं
समुपाश्रित्य चिराय तिष्ठति ॥५८॥

यदि इन दोनों में आप विशेष शक्ति का अस्तित्व मानते हैं तो वह विशेष शक्ति शक्तिमान् के बिना किसके आधार पर रहती है ॥ ५८ ॥

परमाणुसमूहसम्भवं
जगदेतद्यदि कथ्यते त्वया ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथमस्य पुनः परिस्थितिः
परमाणुप्रभवस्य दृश्यते ॥५९॥

यदि केवल परमाणुओं से ही आप जगत् की उत्पत्ति मानते हैं तो जगत् अत्यणु होना चाहिए क्योंकि कारण के विपरीत कार्य नहीं होता है ॥ ५९ ॥

अनुयोजकशक्तिसम्भवे
जगतः सम्भवनं यथा तथा ।
विलयोऽपि वियोगशक्तिजः
परमेकैव बलीयसी भवेत् ॥६०॥

परमाणुओं में स्वभावतः दो शक्ति हैं एक संयोगज, दूसरी वियोगज। इन दोनों में आप बलवान् किसको मानते हैं ? ॥ ६० ॥

अतियोगपरा बलीयसी
यदि शक्तिर्न तदा जगल्लयः ।
प्रबलाऽतिवियोगिनी तदा
जगतः सम्भवनं न विद्यते ॥६१॥

यदि संयोगज शक्ति बलवती है तो जगत् का लय नहीं होना चाहिए । यदि वियोगज शक्ति बलवती है तो सृष्टि न होनी चाहिए ॥ ६१ ॥

युगपद्गतिरस्ति यर्हि त-
द्युगले भिन्नपथानुगामिनी ।
न लयो न च सम्भवस्तदा
जगतः सर्वमिदं विचार्यताम् ॥६२॥

यदि अपने अपने स्थल पर दोनों को आप बलवान् मानते हैं तब जगत् न बन सकता है न बिगड़ सकता है, क्योंकि जितना बनेगा उतना ही बिगड़ेगा ॥ ६२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जलजाः परमाणवो जले
विनियुक्ता गुणपारवश्यतः ।
वद केन विना जगत्पतिं
दहनोत्था दहने निवेशिताः ॥६३॥

जलीय परमाणुओं को जलीय परमाणुओं में मिलाना तथा अग्नि के परमाणुओं को अग्नि में मिलाना बिना नियन्ता के नहीं हो सकता है ॥६३॥

न विकर्षणमत्र कारणं
न च सङ्कर्षणमेव पीलुषु ।
विनियोजयितुर्विना कृतिं
न हि पीलुर्न च पीलुजं जगत् ॥६४॥

परमाणुओं में ईश्वर के बिना न संकर्षण होता है न विकर्षण। कहाँ तक कहें भगवदिच्छा के बिना परमाणु भी नहीं रह सकते हैं जगत् का तो कहना ही क्या ? ॥ ६४ ॥

अनवस्थितिदोषदूषितं
जगतस्ते मतमेत्य कल्पनम् ।
अविकल्पनमेव तत्त्वया
जगदीशस्य कृतौ विधीयताम् ॥६५॥

आपके मन में अनवस्था दोष के कारण पहले जगत् बन ही नहीं सकता है। इसलिए आपको ईश्वर मानना ही पड़ेगा ॥ ६५ ॥

इदमेव मया निवेद्यते
जगदीशस्य यथार्थसम्भवे ।
हृदि मानमलं विचार्यता-
मुदयं याति यदत्तसङ्गमात् ॥६६॥

हमने ईश्वर के सद्भाव में पहला प्रमाण यही दिया है जो मन का विषय होने के कारण मानव प्रत्यक्ष में आ जाता है ॥ ६६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अमरेण चितेः समाश्रया-
न्मनसा योगिजना महेश्वरम् ।
अवलोकयितुं यतन्त्यतो
भवताऽप्यत्र तथा विधीयताम् ॥६७॥

योगीजन चेतन सत्ता के होने के कारण अमर अविनाशी मन के द्वारा ईश्वर को प्रत्यक्ष देख लेते हैं ॥ ६७ ॥

मलमावरणं हृदि स्थिरं
भुवि विक्षेपकथाऽपि यद्गता ।
भगवन्तमुमापतिं न ते
मनुजा द्रष्टुमलं भुवि क्षमाः ॥६८॥

जिनके हृदयपटल पर मल, विक्षेप, आवरण, यह तीनों रहते हैं वे मनुष्य भगवान् का दर्शन नहीं कर सकते हैं ॥ ६८ ॥

निगमानुगतेन कर्मणा
विमलज्ञानसमुद्भवेन तत् ।
त्रितयं भगवत्समर्चना-
द्विनिपात्य क्रियतां मनः स्थिरम् ॥६९॥

कर्म, उपासना, ज्ञान, इन तीन के द्वारा यथासंख्य मल, विक्षेप, आवरण इन तीनों को दूर करके पहले आप अपना मन स्थिर कीजिए ॥ ६९ ॥

अचले विमले निरावृतौ
वदनं यद्वदुदेति दर्पणे ।
जगदीश्वरदर्शनं तथा-
विधचित्ते भवताऽनुभूयताम् ॥७०॥

निश्चल, निर्मल, निरावरण, आदर्श में जिस प्रकार मुख स्वयं दीखने लगता है उसी प्रकार तथाविध मन के होने पर भगवान् स्वयं दीख जाते हैं ॥ ७० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जलवेगवशाद् घनो यथा-
ऽनुमितिं याति जगत्समुद्गमम् ।
अवलोक्य तथा जगत्पते-
रनुमानं भवताऽपि बुध्यताम् ॥७१॥

नदी में जल की वृद्धि देख कर जिस प्रकार वर्षा का अनुमान किया जाता है उसी प्रकार जगत् का उदय देखकर जगत्पति का अनुमान किया जाता है ॥ ७१ ॥

उपमानमपीश्वरे रसा-
दुपमेयोपमया निवेश्यते ।
यदि किञ्चिदिहास्ति विस्मयः
क्रियतामत्र तदा परिग्रहः ॥७२॥

उपमेयोपमालंकार के द्वारा ईश्वर में उपमान भी घट जाता है। यदि इसमें आप को संशय हो तो अलंकार शास्त्र का स्वाध्याय कीजिए ॥ ७२ ॥

गगनं गगनेन तोयधि-
र्विशदस्तोयधिना यथा स्वयम् ।
उपमानमुपैति दृश्यतां
जगदीशो जगदीशवत्तथा ॥७३॥

जिस प्रकार गगन गगन से, सागर सागर से उपमित होता है उसी प्रकार ईश्वर ईश्वर से उपमित हो जाता है ॥ ७३ ॥

सति सम्भवने जगत्पतेः
करणानां त्रितयेन सम्भवः ।
स्वयमेव तदन्तरे स्थितिं
निगमानां कृपया गमिष्यति ॥७४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईश्वर के अस्तित्व मानने पर जगत् के तीन समवायि, असमवायि, निमित्त कारण भी आप को विदित हो जायँगे ॥ ७४ ॥

निगमे सति तद्विनिर्मिते
ऋषिभिर्ज्ञानवशात्प्रदर्शिते ।
न परं जगदीशनिर्णये
भुवि मानं प्रतिभात्यपेक्षितम् ॥७५॥

ज्ञान के द्वारा अनुभूत, ईश्वर के निःश्वास से उत्पन्न, वेद की विद्यमानता में और ईश्वर के अस्तित्व में प्रमाणता की अपेक्षा नहीं है ॥ ७५ ॥

इति विप्रतिपन्नखण्डनं
बहु कृत्वा विरते विदांवरे ।
पुनरुद्धतभावभावितः
स विचार्येदमुवाच हृद्गतम् ॥७६॥

इस प्रकार प्रतिपक्षी के खण्डन में तथा अपने पक्ष के मण्डन में इतना कह कर बैठे हुए धार्मिक विद्वान् के समक्ष चार्वाक ने फिर पूर्व-पक्ष इस प्रकार रखना आरम्भ किया ॥ ७६ ॥

[ पूर्वपक्षः ]

निगमो न कदापि नित्यता-
मुपगन्तुं कथमप्यलं क्षमः ।
कृतकत्वनिदानसम्भवा-
त्पदवाक्यादिकदम्बकस्थितेः ॥७७॥

पद और वाक्यों के कृतक होने पर वेद कदापि नित्य नहीं माना जा सकता है क्योंकि कृतक पदार्थ सभी अनित्य होते हैं ॥ ७७ ॥

म्रियते स्वरजातमादरा-
द्भुवि यैस्ते प्रतियान्ति वर्णताम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रभवन्ति त एव हेतवः
पद्वाक्योदयने यथाक्रमम् ॥७८॥

स्वरों का वरण करने के कारण व्यंजन वर्ण कहाते हैं। वे ही पद एवं वाक्यों के प्रति कारण बनकर क्रिया कर्मादि स्वरूप बन जाते हैं ॥ ७८ ॥

निगमेषु वसन्ति ये क्रमा-
न्मनवस्ते पद्वाक्यसम्भवाः।
कृतकत्वसमाश्रये कथं
पुनरेष्यन्ति कदापि नित्यताम् ॥७९॥

वेदों के मंत्र पद और वाक्यों से बने हुए हैं इस कारण वे कृतक हैं। कृतक मन्त्रों को नित्य मानना उचित नहीं है ॥ ७९ ॥

यदनित्यमसत्प्रगीयते
मनुजैस्तत्त्वविनिश्चयस्थिरैः।
कथमेष्यति तद्विनित्यता-
मिति सर्वं भवता न बुध्यते ॥८०॥

"यद्यत्कृतकं तत्तदनित्यम्"—इस नियम की जागरूकता में वेदों की नित्यता का संभवन केवल असत्प्रतिपक्ष स्थापनमात्र है ॥ ८० ॥

हृदयस्थितभावमीदृशं
समुपस्थाप्य विमूकताङ्गते।
स्वयमेव विपक्षपण्डिते
पुनरस्योत्तरमाह धार्मिकः ॥८१॥

इस प्रकार अपने हृदय का उद्गार निकाल कर मूकभाव को प्राप्त हुए चार्वाक के प्रति धार्मिक पण्डित ने यह कहा ॥ ८१ ॥

कृतकं तदुदीर्यते बुधै-
र्नवतामेति यदीयकारणम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतके करणे न विद्यते
कृतकत्वं निगमेषु दृश्यताम् ॥८२॥

कृतक वह माना जाता है जिसका कारण नवीन हो; कारण के नित्य होने पर कृतकत्व सिद्ध नहीं होता है इसलिए वेद कृतक नहीं हैं ॥ ८२ ॥

मनुजास्यविनिर्गमाद्यदा
कृतकत्वं पदजातमेष्यति ।
भवतामपि वाक्यसञ्चये
कृतकत्वं न कथं तदेष्यति ॥८३॥

मनुष्य के मुख से निकलने मात्र के कारण यदि आप पदों को कृतक मानते हैं तब तो आपके मुख से निकले हुए वाक्य भी कृतक क्यों नहीं ? ॥ ८३ ॥

निगमोऽस्ति यथा भवन्मते
कृतकस्तादृशमेव मन्मते ।
कथनं भवतामिदं ततो
गतमेतद्विषये भवन्मतम् ॥८४॥

जिस प्रकार आपके मत में वेद कृतक हैं उसी प्रकार हमारे मत में आपका कथन कृतक है ॥ ८४ ॥

पदवाक्यमयस्य शब्दता-
मुपयातस्य वियद्गुणात्मनः ।
कथमस्ति कदाप्यनित्यता
यदि सा तर्हि भवद्वचोऽप्यसत् ॥८५॥

पदवाक्यमय तथा आकाश के गुणस्वरूप शब्द का अनित्यत्व नहीं है, यदि है, तो आपका भी कथन अनित्य है ॥ ८५ ॥

समवायपदेन भूतले
समवस्थानमनादिकालतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणिनोऽथ गुणस्य दृश्यते
न विपर्यासलवोऽत्र लभ्यते ॥८६॥

नैयायिकों के मत में गुण और गुणी में समवाय सम्बन्ध माना जाता है जो कि नित्य है, आपके इस कथन से वह भी अनित्य ही ठहरता है ॥ ८६ ॥

जगदेव यदस्ति ते मते
वद नित्यं मनुजार्थसाधनः।
कथमस्ति तदा न तद्गतो
भुवि शब्दः पदवर्णसम्भवः ॥८७॥

यदि आपके मतमें संसार नित्य है तब उसके अन्दर प्राणिमात्र का कार्यसाधक शब्द नित्य क्यों नहीं ? ॥ ८७ ॥

करणेन तदेव साध्यते
यदसिद्धं नहि सिद्धसाधनम्।
भुवि कोऽपि करोति मन्मते
कुरुते यः स भवादृशो भवेत् ॥८८॥

संसार में मनुष्य उसी को सिद्ध करते हैं जो स्वतःसिद्ध न हो। सिद्ध का साधन कोई नहीं करता है ॥ ८८ ॥

ऋषिभिर्बहुतत्त्वदर्शिभिः
परमात्मप्रतिपाद्यपण्डितैः।
निगमः परमेश्वरेच्छया
न कृतः किन्तु निदर्शितः क्रमात् ॥८९॥

तत्त्वदर्शी ऋषियों ने संसार के कल्याण की इच्छा से ईश्वरीय ज्ञान का अनुगमन करके उसका केवल संकलनमात्र किया है ॥ ८९ ॥

मुनिवंशपरम्पराऽऽगतं
तदिदानीं निगमस्य वर्णनम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवताऽप्यनुमोद्यतां यथा
सकलत्रापि सुखोदयो भवेत् ॥६०॥

ऋषियों की वंशपरम्परा से अनुगत उस वैदिक विज्ञान का आप भी आदर करें जिससे संसार का कल्याण हो ॥ ६० ॥

मुनिभिर्निगमप्रभावतः
सकलं वीक्षितमात्मदर्शिभिः ।
मनुजैः परमेश्वरोऽप्यलं
निगमज्ञानबलेन लभ्यते ॥६१॥

मुनियों ने वेदों के अभ्यास से त्रिकालदर्शी बन कर त्रिलोकी तक का अनुभव कर लिया और मनुष्यों ने उनकी कृपा से ईश्वर तक देख लिया ॥ ६१ ॥

निगमेन पदे पदे धृता
परमार्थानुगतेन यत्कथा ।
जगतामधिपः स केशवो
भवतामस्तु शिवाय सर्वतः ॥६२॥

परमार्थप्रतिपादक वेद ने जिसका पदे पदे गुणगान किया है वह जगदीश्वर आपका कल्याण करे ॥ ६२ ॥

भुवि नास्तिकतामुपागताः
कृपया यस्य भवद्विधा अपि ।
प्रभवन्ति स दीनवत्सलो
भगवानेव तवास्तु शङ्करः ॥६३॥

संसार में बहुत से आप जैसे नास्तिक भी जिसकी कृपा से महत्त्व को प्राप्त होते हैं वह दीनवत्सल भगवान् आपका कल्याण करे ॥ ६३ ॥

हृदये कुरु तत्पदद्वयं
वचने तद्गुणवर्णनक्रमम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निजकर्मणि तत्समर्चनं
शिवमेवं तव सोऽभिधास्यति ॥६४॥

आप हृदय में उनके चरणयुगल का ध्यान कीजिए, वाणी से उनका गुणानुवाद गाइए और कर्म से उनकी पूजा कीजिए। ऐसा करने से आप का कल्याण होगा ॥ ६४ ॥

इति सम्यगवाप्य सूत्तरं
गतदर्पो धृतशान्तिरानतः।
स ननाम महेन्द्रवन्दितं
भुवि धर्मं निगमप्रतिष्ठितम् ॥६५॥

इस प्रकार धार्मिक विद्वान् से उचित उत्तर पाकर चार्वाक ने महेन्द्रवन्दित धर्मदेव के समक्ष दण्डवत् प्रमाण किया ॥ ९५ ॥

चरणानतमेनमुन्नतं
स विलोक्यात्र विपक्षपण्डितम्।
द्रुतमेव विहारमण्डले
विजयस्तम्बमहोत्सवं व्यधात् ॥६६॥

प्रतिवादी को चरणों में पड़ा हुआ देख कर इन्द्र ने भी विहार प्रांत में विजयवैजयन्ती का संस्थापन किया ॥ ६६ ॥

सदुपायनदानतत्परा-
न्मघवत्त्रातविहारभूमिपान्।
मधुरैर्वचनैरयं नृपः
परितोष्यालमिदं समावदत् ॥६७॥

इन्द्र के द्वारा रक्षित विहार प्रांत के समस्त राजाओं को उपायन सहित देख कर धर्मदेव ने उनके प्रति कहा ॥ ६७ ॥

निगमस्य विहारमण्डले
प्रथनं निष्प्रधनं यथा भवेत्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सदुपायमुपेत्य तादृशं
यतनीयं प्रमदाद्भवद्भिर्यैः ॥६८॥

विहार प्रांत में जिस प्रकार वेदों का प्रचार हो उस प्रकार आप लोग इस समय में परिश्रम करें ॥ ९८ ॥

न कदापि मतिर्ममाज्ञया
विनिवेश्याऽधमपापसङ्ग्रहे ।
यदुपाश्रयतः पदे पदे
बहु कष्टं प्रतियान्ति मानवाः ॥६६॥

आप लोग पाप की ओर अपना ध्यान कदापि न दें क्योंकि पाप से संसार में मनुष्य पदे पदे कष्ट भोगते हैं ॥ ६६ ॥

पतितानि महेशमन्दिरा-
एयधुना भारतभूमिभूतये ।
नगरे नगरे भवद्भिर्यैः
प्रथनीयानि निजैर्धनव्ययैः ॥१००॥

बौद्धों ने जिन मन्दिरों को गिरवाया है आप उनको धन से फिर दुबारा तैयार करावें ॥ १०० ॥

प्रभवेद्वचसामधीश्वरी
परितुष्टा भवतां कुले यथा ।
यतनीयमहर्दिवं तथा
विगतालस्यतया ममाज्ञया ॥१०१॥

आपके वंश में भगवती सरस्वती जिस प्रकार प्रसन्न रहे उस प्रकार उसकी आराधना आप करें ॥ १०१ ॥

नियमेन पुराणसत्कथा-
श्रवणं सर्वजनैर्विधीयताम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवद्भजनं गृहे गृहे
मम भूत्यै सुतरामुपास्यताम् ॥१०२॥

आप नियम से पुराणवेद का श्रवण करें, गृह गृह में हरिभजन करें और वैदिक धर्म का पालन करें ॥ १०२ ॥

इति पादनतान्प्रबोधय-
न्विजयी धर्मनृपः सनातनः ।
द्रुतमेव विहारमण्डला-
द्गमद्वङ्गमनङ्गमण्डनम् ॥१०३॥

धार्मिक मनुष्यों को इस प्रकार अपना आदेश सुनाकर विजयी सनातन धर्म ने यहाँ से बंगमण्डल के लिए प्रस्थान किया ॥ १०३ ॥

समुपागतमेनमादरा-
त्प्रणिपत्य प्रभुमिन्द्रगोपितम् ।
बहवो विनयेन सज्जना
निगमोक्तं बिभराम्बभूविरे ॥१०४॥

बंगप्रदेश में पहुँचे हुए इन्द्ररक्षित धर्मदेव को सुनकर वहां के सज्जन नम्रतापूर्वक आपकी आज्ञा का पालन करने लगे ॥ १०४ ।

बहवः किल कल्ककल्पना-
कुलकालोत्कमनःप्रवृत्तयः ।
सहसा हृदये न्यधुर्न तं
वचसा धर्मपथं प्रपेदिरे ॥१०५॥

बहुत से मनुष्य हृदय से आपका स्वागत करने में हिचकते रहे परन्तु वाणी से उन्हों ने आपका स्वागत किया ॥ १०५ ॥

निगमस्य महेन्द्रशासना-
त्स महत्त्वं द्रुतमेव तद्गतान् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विनिबोध्य कलेः पराजयं
दिशि तस्यां समघोषयद्बलैः ॥१०६॥

महेन्द्र के प्रताप से समस्त बंगमण्डल में इस प्रकार वेद का महत्त्व स्थापित करके धर्मदेव ने पूर्व दिशा में अपना विजयस्तम्भ गाड़ दिया ॥ १०६ ॥

अथ बङ्गभुवि प्रतिष्ठितां
नरमुण्डाभरणां महेश्वरीम् ।
विनयावनतः सनातनो
हृदि तुष्टाव पदैर्मनोहरैः ॥१०७॥

इसके अनंतर बंगदेश में प्रतिष्ठित भगवतीजी का धर्मदेव ने इस प्रकार स्तवन किया ॥ १०७ ॥

[ भगवतीस्तवः ]

जय देवि ! सुरेन्द्रवन्दिते !
जय कामाक्षि ! विपक्षभक्षिके !
गुणगौरि ! गणेशजन्मदे !
जय कल्याणि ! जगद्धितव्रते ! ॥१०८॥

जय चण्डनिपातहर्षिते !
जय मुण्डप्रधनार्थमुद्यते ।
जय शुम्भनिशुम्भदर्पहे !
जय दुर्गे ! जयदेव्यमन्तिके ! ॥१०९॥

जय चण्डि ! कपालमण्डिते !
जय दाक्षायणि ! दिव्यदर्शने !
जय हैमवति ! प्रकम्पने !
जय मातङ्गि ! जगत्त्रयाधिपे ! ॥११०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हे सुरेन्द्रवन्दिते ! हे शत्रुओं का भक्षण करनेवाली ! हे कामाक्षि ! हे गुणगौरि ! हे गणेशजननि ! जगद्धितरते हे कल्याणि ! हे चण्डमुण्ड-मर्दिनि ! हे शुम्भनिशुम्भदर्पदलिनि ! हे दुर्गे ! हे अमन्तिके देवि ! हे कपालमण्डने चण्डि ! हे दिव्यदर्शने दाक्षायणि ! हे प्रकम्पने ! हे हैमवति ! जगत्त्रयाधिपे हे मातंगि ! आपका जय हो ! आपका जय हो !! आपका जय हो !!! ॥ १०८ ॥ १०९ ॥ ११० ॥

इति तामभयप्रदायिनीं
वरदां मातरमेष भूपतिः ।
वचनैः परितोष्य पूर्वदि-
ग्विजयश्रीपरिरम्भणं व्यधात् ॥१११॥

इस प्रकार अभयदायिनी भगवती का स्तवन करके धर्मदेव ने पूर्वदिग्विजयश्री को प्राप्त किया ॥ १११ ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये चार्वाकपराजयो नाम त्रयोदशः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# चतुर्दशः सर्गः

विजित्य पूर्वां दिशमिन्द्रगुप्ता-
मानन्दसन्दोहसमुद्भवेन ।
प्रसन्नचित्तः स तदाऽनुरागा-
द्धर्मो ववन्दे चरणौ स्वमातुः ॥ १ ॥

पूर्वदिग्विजय के अनंतर अति प्रमुदित धर्मदेव ने ब्रह्मर्षि देश में आकर अपनी जन्मभूमि को प्रणाम किया ॥ १ ॥

जयश्रियाऽलङ्कृतमेनमारा-
त्सा वीक्ष्य सर्वोन्नतदेशभूमिः ।
निमग्नचित्ता प्रमदाम्बुसिन्धौ
मोदात्तमभ्यागतमभ्यनन्दत् ॥ २ ॥

विजयलक्ष्मी से अलंकृत धर्मदेव का अवलोकन करके आनंद समुद्र में निमग्न माता ने उसका अभिनंदन किया ॥ २ ॥

निपीय मातुर्वचनं स तस्याः
प्रवृद्धमोदो विजयोपगत्या ।
मुरारिमाराध्य मनस्यमन्दं
सेनापतिं चेतसि तत्र दध्यौ ॥ ३ ॥

माता से आशीर्वाद लेकर विजयप्रवृत्त धर्मदेव ने मन में मुरारि का अर्चन करके दक्षिण देश के लिए सेनापति का स्मरण किया ॥ ३ ॥

अधर्मनाशाय कृतप्रतिज्ञं
धर्मं समालोक्य विवृद्धशोभम् ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अधीश्वरस्तद्धरितोऽनुरागा-
त्सेनापतित्वं स्वयमाजगाम ॥ ४ ॥

अधर्म के नाश में कृतप्रतिज्ञ धर्मदेव को देखकर दक्षिणदिक्पाल ने आपका सेनापतित्व अङ्गीकृत किया ॥ ४ ॥

विलोकनाद्यस्य भयं समेति
धैर्येण युक्तोऽपि नरः प्रकामम् ।
यमः स सेनापतितामुपेत्य
धर्मस्य पापेषु चकार दृष्टिम् ॥ ५ ॥

धैर्यवान् भी मनुष्य जिसके दर्शन से भयभीत बन जाते हैं उसको सेनापति देख कर पापियों का मन क्यों न चंचल हो ? ॥ ५ ॥

विलोक्य धर्मस्य बलाधिपन्तं
स्वस्यां दिशि प्राणहरं प्रधानम् ।
भयेन भीताः किल कल्कचित्ताः
प्रत्यक्षमेवाधिययुः प्रकम्पम् ॥ ६ ॥

अपनी दिशा में धर्म की ओर से यम को सेनापति देखकर भय से भीत पापी जन सचमुच काँपने लगे ॥ ६ ॥

गर्भे भुवो यस्य भयेन शेते
विन्ध्याद्रिराकल्पमकम्पनस्य ।
अगस्त्यनामा स मुनिः प्रसादा-
त्तस्यां दिशि स्वागतमेवमाह ॥ ७ ॥

जिनके भय से आज तक विंध्य पर्वत पृथिवी के गर्भ में सो रहा है उस अगस्त्य मुनि ने आपका स्वागत उस दिशा में इस प्रकार किया ॥ ७ ॥

शुभागमस्ते भुवने चकास्तु
सदैव चित्ते विजयाभिलाषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनोरथस्ते सफलः सदाऽस्तु
ममास्तु देशे भवतां निवासः ॥ ८ ॥

आपका आगमन शुभ हो, आपकी विजयाभिलाषा सफल हो और इस प्रांत में आपका सर्वदा के लिए निवास हो ॥ ८ ॥

मुनेरितिस्वागतभावगर्भं
वचः समाकर्ण्य सनातनोऽपि ।
स धर्मदेवः स्वबलाधिपेन
समं प्रतस्थे दिशि दक्षिणस्याम् ॥ ९ ॥

मुनिराज का इस प्रकार स्वागत वाक्य सुनकर सनातनधर्म ने भी सेनापति के साथ दक्षिण दिशा के लिए प्रस्थान किया ॥ ९ ॥

अपश्यदस्यां दिशि सर्वतः प्राक्
स धर्मदेवः सह धर्मराजः ।
ब्रजाङ्गनालिङ्गितविग्रहस्य
दामोदरस्योत्तमजन्मभूमिम् ॥ १० ॥

सब से पहले धर्मदेव ने इस दिशा में श्रीकृष्ण भगवान् की जन्मभूमि का अवलोकन किया ॥ १० ॥

इतस्ततस्तीरलसत्तमाला
निमज्जनोन्मज्जनमुक्तजाला ।
जलावगाहागतगोपबाला
यमस्वसा यत्र तनोति लक्ष्मीम् ॥ ११ ॥

इधर उधर दोनों किनारों पर तमालपंक्ति से सुशोभित तथा निमज्जन-मात्र से पाप हरनेवाली यमुना जहाँ पर शोभा को द्विगुणित कर रही है ॥ ११ ॥

समस्तभूमण्डलविश्रुताना-
मशेषवेदागमकोविदानाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

* सनाढ्यवंशोद्भवभूसुराणां
दद्दर्श तस्यां भवनानि धर्मः ॥ १२ ॥

उस व्रज मंडल में धर्मदेव ने वेदवेदाङ्गपंडित ब्रह्मदेव के मानस पुत्र सनाढ्य ब्राह्मणों के गृहों का अवलोकन किया। इस प्रान्त में प्रायः सनाढ्य ही रहते हैं ॥ १२ ॥

सहोदरं वीच्य बलाधिनाथं
यमस्वसा तत्र समागतस्य।
बलस्य नानाविधतर्पणेन
जनुः स्वकीयं सफलीचकार ॥ १३ ॥

यमराज को धर्म का सेनापति देखकर उसकी सहोदरी यमुना ने तीन दिन दलबल समेत धर्मराज का आतिथ्य किया ॥ १३ ॥

परस्परालिङ्गनहेतुभूतां
यमद्वितीयामिह धर्मराजः।

---

* सनाढ्यशब्देन तपोविद्याविशिष्टा ब्राह्मणा गृह्यन्ते। [ सनस्तपसि वेदे चेति कोपात् ] सनशब्दोऽयं वैदिकः। अतएव ऋग्वेदे [ ९। ४। १, मन्त्रे ८। ६८। १७, मन्त्रे, ३। १। ६ मन्त्रे, १०।८।३० मन्त्रे ] अकारान्तः सनशब्दः समुपलभ्यते। तत्रैव [ १०। २६। ८] मन्त्रे सनजा इति शब्दः। तत्रैव [१।१३९। ८] मन्त्रे सदातनानीत्यर्थे सायणाचार्येणानुमतं "सनानीति" पदम्। तत्रैव [ १। १७४। ९] मन्त्रे प्राचीनार्थे प्रयुक्तं "सना" इति पदम्। तत्रैव [ १।११। ६] मन्त्रे रमणीयार्थे प्रयुक्तं सनेति पदम्। तत्रैव [ १०। ६९। १२ ] मन्त्रे सम्भजनीयमित्यर्थे प्रयुक्तं "सनेति "पदम्। यजुर्वेदे ६४। ५४ मन्त्रे प्रयुक्तं सनादिति पदम्। सामवेदे ५।२।१, मन्त्रे पठितं सदादिति पदम्। अथर्ववेदे बहुषु मन्त्रेषु पदमिदमुपलभ्यते यदन्यत्रोद्धरिष्यामः प्रसङ्गात्। एवमेव [ आदौ सनात् स्वतपसः सचतुःसनोऽभूत् ॥ २। ७। ५ ] इति श्रीमद्भागवतपद्यव्याख्याने [ सनात्-अखण्डितात् ] इति श्रीधरः। भागवतचन्द्रिकायां [सनादिति तपोविशेषणमिति ] वीरराघवाचार्यः। [ सनादादौ सनोत्पत्तेः ] इति पदरत्नावलीकारः। [सनं सनशब्दं अतति व्याप्नोतीति सनात्] इति पारार्थदर्शिनीकारः। अन्यदत्रोपयुक्तमग्रे वक्ष्यामः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समाप्य सेनाधिपतेर्निदेशा-
दितः प्रतस्थे नगराणि पश्यन् ॥ १४ ॥

भाई और बहन को आपस में मिलानेवाली यमद्वितीया को यहाँ पर समाप्त करके धर्मदेव ने यहाँ से प्रस्थान किया ॥ १४ ॥

अथ क्रमादुज्जयिनीं प्रयाते
बलाधिपे तत्र सनातनस्य ।
बभूव धर्मस्य सदाभिवृद्ध्यै
तदा महाकालशिवावलोकः ॥१५॥

मार्ग में आये हुए अनेक नगरों को देखते हुए उज्जयिनी में महाकाल के दर्शन का अवसर प्राप्त हुआ ॥ १५ ॥

शिवं महाकालमयं स तत्र
निजेष्टपूर्त्यै द्रुतमष्टमूर्तिम् ।
प्रसादमाधुर्यगुणानुगेन
नवेन तुष्टाव निजस्तवेन ॥१६॥

आपने वहाँ पर महाकाल का दर्शन करके अपनी इष्ट सिद्धि के लिए भगवान् का इस प्रकार स्तवन किया ॥ १६ ॥

[ शङ्करस्तवः ]

गुणत्रयातीतमहत्स्वरूपं
गुणानुरूपे जगति प्रविष्टम् ।
गुणीभवत्पन्नगरत्नभूषं
वयं नमामो नियतं महेशम् ॥१७॥

गुणत्रय से अतीत महान् है स्वरूप जिनका ऐसे त्रिगुणात्मक जगत् में व्यापक, सर्परत्नभूषित भगवान् को हम प्रणाम करते हैं ॥ १७ ॥

गणेशपुत्रं वृषभैकपत्रं
सदा विपत्त्रं विलसत्पवित्रम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धनेशमित्रं विनयातपत्रं

शिवाकलत्रं गिरिशं नमामः ॥१८॥

जिनके गणेशजी पुत्र हैं, वृषभ वाहन है, जो विपत्ति से सर्वदा रक्षा करते हैं, हाथ में जिनके पवित्र है, जिनका कुवेर मित्र है, विनय ही जिनका आतपत्र है तथा श्रीमती पार्वती ही जिनका कलत्र है ऐसे शंकरजी को हम प्रणाम करते हैं ( पविर्वज्रम् ) ॥ १८ ॥

करे धृतव्यग्रकुरङ्गबालं

तृतीयनेत्रोदयभव्यभालम् ।

पदारविन्दप्रणतार्त्तिकालं

कपालमालं शरणं व्रजामः ॥१९॥

जिनके कर में मृगशावक है, तृतीय नेत्र के उदय से जिनका मस्तक सुन्दर है तथा जो शरणागत की विपत्ति के नाशक हैं ऐसे मुण्ड-मालाधारी शंकर को हम प्रणाम करते हैं ॥ १९ ॥

गिरीन्द्रपुत्रीरचितार्द्धदेहं

महोच्चकैलासविशालगेहम् ।

चितारजोलेपनमात्रवेशं

महेश्वरं सप्रमथं नमामः ॥२०॥

पार्वती के शरीर से जिनका अर्धभाग बना है तथा कैलास पर जिनका निवास स्थान है और चिता भस्म ही जिनका वेष है हम उन गणसमेत शंकर को प्रणाम करते हैं ॥ २० ॥

कपर्दसम्बद्धसमृद्धगङ्गं

गणेशगौरीविहितान्तरङ्गम् ।

सुहृज्जनाभ्यर्थनपीतभङ्गं

नमन्निलिम्पं शरणं व्रजामः ॥२१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिनके जटाजूट में गंगा है तथा गौरी, गणेश ही जिनके अंतरंग है और जो मित्रों के अनुरोध से विजया पीते हैं, हम समस्त देवस्तुत उन शंकरजी को प्रणाम करते हैं ॥ २१ ॥

इति स्तुतिं धर्मकृतां यथाव-
न्निशम्य तुष्टः समयोचितेन ।
नियोजयामास वरेण धर्मं
सकृत्तिवासास्त्रिजगन्नमस्यः ॥२२॥

धर्मदेव-कृत इस अपने स्तव को सुनकर प्रसन्नवदन उमापति ने धर्म को समयोचित आशीर्वाद दिया ॥ २२ ॥

असावपि प्राप्तवरप्रदान-
स्तदा महाकालगुरोर्निदेशात् ।
बृहस्पतिं धर्षयितुं तरस्वी
ततः प्रतस्थे किल मद्रदेशम् ॥२३॥

धर्मदेव ने भी आपसे आशीर्वाद प्राप्त कर नास्तिक बृहस्पति को परास्त करने के लिए यहाँ से मद्र की ओर प्रस्थान किया ॥ २३ ॥

अभद्रदूरीकरणाय मद्रं
प्रयातुकामं दिविषत्प्रधानम् ।
निशम्य पापाकुलमानसानां
मनश्चकम्पे विषयावलग्नम् ॥२४॥

पाप को नष्ट करने के लिए मद्रप्रांत में धर्म को आता हुआ सुनकर उस प्रांत के पापियों का मन काँपने लगा ॥ २४ ॥

स्वनेत्रपात्रीकृतसोमनाथो
मनस्यवस्थापितविश्वनाथः ।
स धर्मराजः स्वपथि स्थितानि
वनान्यपश्यद्विलसद्वनानि ॥२५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मार्ग में सोमनाथ का दर्शन करके विश्वनाथ को हृदय में रखकर धर्मदेव ने भी अपने मार्ग में आए हुए वनों का अवलोकन किया ॥ २५ ॥

इतस्ततोदृष्टवनप्रदेशः
स मद्रदेशं भुवनप्रसिद्धम् ।
क्रमेण धर्मस्य विवर्द्धनाय
जगाम देवोचितमञ्जुवेशः ॥२६॥

इधर उधर वनों का दर्शन करते हुए धर्मदेव ने संसार में प्रसिद्ध मद्रदेश-प्रतिष्ठित मद्र नामक नगर में जाना निश्चित किया ॥ २६ ॥

अयं समायात इतीरयन्तः
परस्परं तत्र समस्तदेशे ।
जनाः प्रमोदेन तदाऽवदानं
गृहे गृहे सञ्जगदुः प्रकामम् ॥२७॥

धर्मदेव का आगमन सुनकर समस्त मद्रप्रांत में धार्मिक जन धर्मदेव का अवदान पद्य पढ़ने लगे ॥ २७ ॥

पुराद्बहिः स्वागतहेतुभूतं
समीक्ष्य तत्तत्करणं जनानाम् ।
शिवाय तेषामशिवापनुत्त्यै
बभूव धर्मो धृतपक्षपातः ॥२८॥

नगर से बाहर धार्मिक जनों के द्वारा एकत्रित की हुई स्वागत की सब सामग्री देखकर धर्मदेव ने धार्मिकों का आतिथ्य स्वीकृत किया ॥ २८ ॥

अथागमाचारपरम्परायां
समापितायां नगरोपकण्ठे ।
अदात्पदं स्वे शिविरे स पश्चा-
द्विपक्षभाजां हृदये पुरस्तात् ॥२९॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वागताचार की समाप्ति होने पर धर्मदेव ने अपने शिविर में पीछे और पापी जनों के हृदय में पहले पादन्यास किया ॥ २९ ॥

समीपदेशेऽपि विपक्षभाजां
विमर्दनाय प्रसभं प्रविष्टम् ।
विलोक्य धर्मं हृदयं चकम्पे
बृहस्पतेः पापपरायणस्य ॥३०॥

पापियों के दलन के लिए अपने पास ही आए हुए धर्मदेव को सुनकर नास्तिक बृहस्पति का हृदय दहल गया ॥ ३० ॥

अथावमन्तुं भुवि धर्मराजं
विपक्षपक्षक्षपणं विधातुम् ।
कृतातिसन्धः स समाजगाम
बृहस्पतिर्धर्मसभां विशालाम् ॥३१॥

इसके अनन्तर सनातन धर्म की अवज्ञा करने के लिए कृतप्रतिज्ञ नास्तिक बृहस्पति धर्मसभा में प्रविष्ट हुआ ॥ ३१ ॥

इहास्यतामत्र पदं प्रसादा-
न्निधीयतामेतदुदीरयन्तः ।
सभाविभागाधिकृता महेच्छा
विपक्षमेनं मदयाम्बभूवुः ॥३२॥

यहाँ पर बैठिए, इधर पदार्पण कीजिए, ऐसा कहते हुए सभा के प्रबन्धक गण बृहस्पति के स्वागत करने में प्रवृत्त हुए । ३२ ॥

नवासनालङ्कृतमुत्पताकं
विभागभक्तं बहुचित्रशोभि ।
प्रविश्य शत्रोः शिविरं विशालं
बृहस्पतिर्धर्ममिदं जगाद ॥३३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नवीन आसनों से अलंकृत, पताकासहित, विभाग-विभक्त-मार्गवाले, चित्रों से विचित्र उस शत्रु के विशाल शिविर में जाकर बृहस्पति ने धर्मदेव के समक्ष इस प्रकार कहा ॥ ३३ ॥

[ पूर्वपक्षः ]

यदग्निहोत्रं क्रियते मनुष्यै-
र्घनोदयं चेतसि संविभाव्य ।
न तत्र मानं विगतानुमानं
यदस्ति तद् ब्रूहि वचः समानम् ॥३४॥

वर्षा की कामना से जो मनुष्य संसार में अग्निहोत्र करते हैं उसमें कुछ प्रमाण नहीं है यदि है, तो उपस्थित कीजिए ॥ ३४ ॥

न दृष्टिमार्गं समुपैति लोके
जनस्य कस्यापि यदत्र तस्य ।
प्रकल्पनं तेन च लोकमात्र-
प्रतारणं मे न मतं कथञ्चित् ॥३५॥

जो विषय संसार में दृष्टिगोचर नहीं है उसकी व्यर्थ कल्पना करके संसार को वञ्चित करना मेरे मत में अच्छा नहीं है । ३५ ॥

मनुष्यदेहे विलयं प्रयाते
वृथैव लोकान्तरकल्पनायाः ।
समर्थनं मन्दजनैर्जगत्यां
विधीयते यत्र न तत्प्रमाणम् ॥३६॥

शरीर के नष्ट होने पर स्वर्गादि लोकों में जाने की कल्पना मूढ़जन व्यर्थ ही करते हैं इसमें भी कुछ प्रमाण नहीं है ॥ ३६ ॥

न मन्मते श्राद्धफलं प्रयाति
यमालयं तत्र गतस्य जन्तोः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतारणामात्रमिदं जगत्यां
विधीयते यन्मनुजैश्छलेन ॥३७॥

मेरे मत में श्राद्ध का फल यमालय में गए हुए मनुष्यों को नहीं मिलता है इसलिए यह केवल प्रतारणमात्र है ॥ ३७ ॥

मुखप्रसूतोदरगं प्रयाति
यदन्नपानादि यमालयस्थम् ।
कथं न तद् घोषगतस्य जन्तोः
करोति तृप्तिं भुवि जीवतोऽपि ॥३८॥

ब्राह्मणमुक्त पदार्थ यदि यमालय तक पहुँच जाता है तो घोषगत मनुष्यों की तृप्ति उससे क्यों नहीं होती है ? ( घोष आभीरपल्ली स्यात् ) ॥ ३८ ॥

न पितृलोको न यमस्य लोको
न देवलोको न च विष्णुलोकः ।
न तत्र यानं न च पितृयानं
वृथा मनुष्यैः क्रियते विवादः ॥३९॥

संसार में न कोई पितृलोक है, न यमलोक है, न देवलोक है, न विष्णुलोक है, मनुष्य व्यर्थ ही इस विषय में विवाद करते हैं ॥ ३९ ॥

यदग्निमध्ये निहितं मृतस्य
शरीरमेतत्कथमन्यलोकम् ।
प्रयाति तस्माद्विपरीतभावे
वृथैव गोदानमपास्तमानम् ॥४०॥

जो शरीर अग्नि में जल गया है वह लोकान्तर में किस प्रकार पहुँच जाता है ? यदि नहीं पहुँचता है तब गोदान करने की क्या आवश्यकता है ? ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवन्ति ये ये मनुजं त एव
भवन्ति लोके पितरस्तदन्ये ।
न केऽपि तस्माज्जलदानकृत्यं
वृथैव मन्ये विगतस्य जन्तोः ॥४१॥

मनुष्य की जो रक्षा करते हैं वे ही पितर हैं। उनसे अलग कोई पितर नहीं हैं इसलिए मरे हुओं के लिए जलदान देना व्यर्थ है ॥ ४१ ॥

यदद्यते तल्लघुतामुपैति
पदार्थजातं परमत्र पिण्डः ।
यथायथं तिष्ठति तेन मन्ये
न भुञ्जते ते पितरः कदाचित् ॥४२॥

जो पदार्थ खाया जाता है वह किसी अंश में घटता अवश्य है। परन्तु पितरों को दिया हुआ पिण्ड घटता नहीं है । इसलिए उनका खाना असिद्ध है ॥ ४२ ॥

इतो गताश्चन्द्रमसं प्रविश्य
यमालयं यान्ति यदि स्वभावात् ।
यमालयस्थाः क्व पुनः प्रयान्ति
न यान्ति चेद्व्यर्थमहो ! विवादः ॥४३॥

यहाँ से गए हुए पितर चन्द्रमा में प्रविष्ट होकर यदि स्वभाव से यमालय में पहुँच जाते हैं तो यमालय के मनुष्य किस लोक में जाते हैं ? ॥४३।

इदं यथावद्विनिवेद्य तत्र
विमूकभावं प्रगते विपक्षे ।
बृहस्पतौ धर्मसभोदरस्थ-
स्तदुत्तरं दातुमुवाच कश्चित् ॥४४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इस प्रकार अपना पूर्वपक्ष समाप्त करके मूकभाव को प्राप्त हुए बृहस्पति के प्रति धार्मिक विद्वान् ने जो उत्तर दिया वह इस प्रकार है ॥ ४४ ॥

[ उत्तरपक्षः ]

बृहस्पते ! यद्भवता समुक्तं
न तत्प्रमाणानुमतं विभाति ।
विचारयान्तःकरणे मदुक्तं
निपीय पश्चादपरं वद त्वम् ॥४५॥

हे बृहस्पते ! आप ने जो अपना पूर्वपक्ष उपस्थित किया है वह प्रमाणशून्य है। आप हमारा उत्तर सुनकर विचार कीजिए । उसके अनन्तर कुछ कहने का साहस कीजिए ॥ ४५ ॥

मरुज्जलाग्निप्रहितोऽतिधूमो
वियत्पथं याति यदा तदैव ।
भवन्ति लोके जलदा महान्तः
पदार्थविज्ञानमिदं प्रसिद्धम् ॥४६॥

अग्नि, वायु और जल के योग से जो धूम बनकर आकाश में जाता है उसी से मेघ बनते हैं यह बात पदार्थविज्ञान से सिद्ध है ॥ ४६ ॥

रवेर्मयूखैर्धरणीतलस्थं
जलं यदा धूमवदन्तरिक्षे ।
समीरणप्रेरणया समेति
घनत्वमभ्येति तदा यथावत् ॥४७॥

सूर्य के किरणों से जो जल बाष्परूप में परिणत होता है वही वायु की प्रेरणा से आकाश में पहुँच कर मेघ बन जाता है ॥ ४७ ॥

ऋते न धूमं भुवने कदापि
घनोदयः सम्भवति प्रशस्तः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवत्यहो ! यर्हि वद त्वमेव
प्रमाणमस्मिन्विषये विबाधम् ॥४८॥

बिना धूम ( वाष्प ) के संसार में कहीं बादल नहीं बनते हैं यदि बनते हैं तो आप इसमें कोई अकाट्य प्रमाण उपस्थित करें ॥ ४८ ॥

सदाऽनुरूपं भुवि कारणाना-
मुदेति कार्यं यदि तर्हि यादृक् ।
खमण्डलं यास्यति धूमसङ्घ-
स्तथोदयं यास्यति मेघसङ्घः ॥४९॥

कारण में विद्यमान गुण ही यदि कार्यरूप में परिणत होता है तो जैसा धूम आकाश में जायगा वैसा ही बादल बनेगा ॥४९॥

सुगन्धितद्रव्यसमाश्रयेण
सुगन्धवान्धूमचयः पृथिव्याः ।
समुत्थितो वायुबलेन याति
खमण्डलं यज्ञपरम्परायाम् ॥५०॥

यज्ञों के होने से सुगन्धित धूम पृथ्वी से चल कर वायु के द्वारा आकाश में पहुँचता है ॥ ५० ॥

हुतं यदग्नौ हविरन्तरिक्षे
तदेति सूर्यं पुरतो विभागात् ।
क्रमेण पर्जन्यपदं समेत्य
पुनर्जलाभं धरणीमुपैति ॥५१॥

अग्नि में जो हवन किया जाता है वह सूर्य को पहुँच कर बादलों में होता हुआ अन्तमें जल बन कर फिर पृथ्वी पर आता है ॥५१ ॥

परस्परं भावयतां जनाना-
मनेन यज्ञात्मककर्मणैव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स यज्ञरूपो भगवान्मुकुन्दः
फलानि सूते त्रिजगद्धितानि ॥५२॥

यज्ञ के द्वारा परस्परोपकार भाव रखते हुए मनुष्यों के लिए यज्ञ स्वरूप भगवान कल्याणकारक फल देते हैं ॥ ५२ ॥

जगत्प्रसिद्धे निगमप्रतिष्ठे
यदध्वराणां भवता वृथैव ।
फले विसंवादि वचः प्रयुक्तं
न तत्र सारं किमपि प्रतीमः ॥५३॥

वेदप्रतिपादित जगत्प्रसिद्ध यज्ञ के फल के विषय में जो आप ने तर्क किया है उसमें कुछ तत्त्व नहीं है ॥ ५३ ॥

विलोक्यते यद्भवता तदेव
यदि प्रमाणीक्रियते जगत्याम् ।
कथं पिता ते कथमात्मजोऽपि
त्वमेव तस्यासि वदात्र मानम् ॥५४॥

यदि आप जो देखते हैं वही प्रमाण मानते हैं तब तो आप अपने पिता के ही पुत्र हैं इसमें प्रमाण दीजिए ? ॥ ५४ ॥

अभूद्यदा ते जननी सगर्भा
न तत्र काले तव दृष्टिरासीत् ।
यदा भवान्दृष्टिमवाप्तवान्
सुदूरमेवाशु तदा स कालः ॥५५॥

जिस समय आप की माता ने गर्भ धारण किया था उस समय आप के नेत्र नहीं थे, जब आप नेत्रवान् हुए तब वह काल नहीं रहा ॥५५॥

असङ्गतस्ते यदि लोकवादः
प्रमाणवादं प्रगतोऽपि तर्हि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पितुः स्वकीयस्य धनं समस्तं
न ते कदाचिन्न स ते कदाचित् ॥५६॥

यदि आप लोकवाद को प्रमाण नहीं मानते हैं तो आप के पिता का धन आपका नहीं हो सकता है ॥ ५६ ॥

यदि प्रमाणीक्रियते जनन्या-
वचः प्रमाणं विषयेऽत्र तर्हि ।
न दृष्टमात्रं जगति प्रमाणं
वचः समस्तं महतां प्रमाणम् ॥५७॥

यदि इस विषय में आप अपनी माता का कथन प्रमाण मानते हैं तो केवल प्रत्यक्ष ही प्रमाण नहीं किन्तु सज्जनों का वाक्य भी प्रमाण सिद्ध हुआ ॥ ५७ ॥

परिस्थितिर्वेदमुखेन येषां
प्रतीयते पूर्णतया खगानाम् ।
त एव लोका मुनिभिः प्रदिष्टा
रवीन्दु-भू-शुक्र-बुधाभिधानाः ॥५८॥

पूर्णतया जिनकी परिस्थिति वेदमन्त्रों द्वारा वेदों में कही गई है वे ही सूर्यचंद्रादिक मुनियों ने लोक माने हैं ॥ ५८ ॥

अजं यमस्मिन्नमरं निसर्गा-
त्पुराणवेदेषु समामनन्ति ।
स एव जीवश्चितिसंश्रयेण
करोति सर्वेषु गतागतानि ॥५९॥

जिस जीवात्मा को पुराण वेद में अज तथा अमर कहा है वही चेतन होने के कारण इन लोकों में आता जाता है ॥ ५९ ॥

यदि प्रकामं सुकृती स जीवः
प्रयाति सूर्यादिगतिं प्रशस्ताम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विपर्यये तद्विपरीतभूतां
स्वयं समभ्येति विधेर्निदेशात् ॥६०॥

यदि जीवात्मा पुण्यशाली है तो वह सूर्य्यादि लोकों में जायगा। यदि पापी है तो अधोलोक में उसका निवास होगा ॥ ६० ॥

असंशयं श्राद्धफलं यथाव-
द्यमालयस्थानुपयाति सूक्ष्मम् ।
प्रमाणमस्मिन्विषये दधावा-
नथर्ववेदः परमात्मगीतः ॥६१॥

श्राद्ध का फल निःसन्देह यमालय में विद्यमान पितरों को मिलता है, इसमें ईश्वर का ज्ञानस्वरूप अथर्ववेद प्रमाण है ॥ ६१ ॥

उदन्वतीमेत्य दिवं पुरस्ता-
त्ततः परां पीलुमतीमतीत्य ।
प्रयाति जीवः शुभकर्मयोगा-
त्तदुत्तरं प्रद्युपदं क्रमेण ॥६२॥

जीवात्मा उदन्वती और पीलुमती इन दो कक्षाओं को पार करके यथाक्रम प्रद्यु नामक कक्षा में पहुँच जाता है जहां पर पितर रहते हैं। [ उदन्वती द्यौरवमा इति वेदमन्त्रः] ॥ ६२ ॥

पथावुभौ स्तोनिगमप्रदिष्टौ
समेति याभ्यां जगदेतदाद्यः ।
तयोः पितृणां यजुषा समुक्तः
प्रसिद्ध एव द्युसदां द्वितीयः॥६३॥

वेद में प्राणिमात्र के लिए दो मार्ग कहे गये हैं। उनमें पहला पितृयान मार्ग है और दूसरा देवयान मार्ग है। [ द्वे सृती अशृणवम् इति वेदमन्त्रः ] ॥ ६३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पथद्वयं वेदमनोः प्रमाणा-
द्यथायथं वेत्ति यतः प्रकामम् ।
प्रदीयतेऽतो मनुजैः प्रयाणे
स्वयं सवत्सा सुरभिः स्वकीया ॥६४॥

वेदमन्त्र के प्रमाण से इन दोनों मार्गों को गौ जानती है इसी कारण मरण काल में गोदान कराया जाता है । [ प्रजानत्यघ्न्ये जीवलोकम् ] इति वेदमन्त्रः ॥ ६४ ॥

घृतह्रदा माक्षिकपूर्णकुल्याः
सुरोदकाः क्षीरघृताम्बुधाराः ।
यमालयस्थानुपयान्ति सर्वा-
न्वदत्यथर्वाभिधवेद एतत् ॥६५॥

घृत के ह्रद, मधु की नहरें, सुरोदक, दुग्ध की धारा ये सब यमालय में रहने वालों को मिलती हैं । यह अथर्ववेद कहता है [ घृतह्रदा मधुकुल्या इति वेदमन्त्रः ] ॥६५॥

शतानि पञ्चाप्सरसां प्रयातं
विधिक्रमादाञ्जनमञ्जुलानि ।
प्रयान्ति जीवं सुकृतोपयोगा-
दिदं वदत्यादरतोऽत्र वेदः ॥६६॥

सुकृती मनुष्य के स्वर्ग में पहुँचने पर पांच सौ अप्सरागण प्राप्त होती हैं । वेद इस बात को मन्त्र के द्वारा कहता है । [ तं पञ्चशतान्य-प्सरसां प्रतिधावन्तीति वेदमन्त्रः ] ॥ ६६ ॥

स्वयं निखाता भुवि ये परोक्षा-
स्तथा विदग्धाः पितरः परेताः ।
भुवं समायान्ति हविस्तदाऽत्तुं
तिथिर्यदैषां समयादुपैति ॥६७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जब पितरों का श्राद्ध समय आता है उस समय निखात, परोप्त, दग्ध, उद्धृत सभी पितर, भूलोक में उतर आते हैं। [ये निखाता ये परोप्ता इति वेदमन्त्रः ] ॥ ६७ ॥

अदन्ति यद्वद्धविरग्निदत्तं
विभागशो देवगणास्तथैव ।
मुखेषु दत्तं भुवि भूसुराणा-
मदन्ति सर्वे पितरो दिविस्थाः॥६८॥

जिस प्रकार अग्निहुत हव्य देवगणों को मिलता है उसी प्रकार ब्राह्मणभुक्त कव्य पितरों को मिल जाता है। [इममोदनं निदधे ब्राह्मणेषु, इति वेदमन्त्रः ] ॥ ६८ ॥

यतः प्रदिष्टो निगमेन दैवा-
त्सहोदरोऽग्नेर्मुखजस्ततोऽयम् ।
नियोज्यते श्राद्धविधानकृत्ये
न पक्षपातो विधिनोदनायाम् ॥६९॥

ब्राह्मण अग्नि का सहोदर है ऐसा वेद कहता है इसी कारण ब्राह्मण ही श्राद्ध में नियुक्त है। इसमें पक्षपात नहीं है [ब्राह्मणोऽस्य मुखमासीत्; मुखादग्निरजायत इति वेदमन्त्रः ] ॥ ६९ ॥

यथा नियुक्तः किल देवदौत्ये
स वीतिहोत्रो जगदीश्वरेण ।
तथैव तेनैव स पैत्रदौत्ये
नियन्त्रितो ब्राह्मणवंशजातः ॥७०॥

जिस प्रकार जगदीश्वर ने देवदौत्य में अग्नि को लगाया है इसी प्रकार पितृदौत्य में ब्राह्मण को लगाया है ॥ ७० ॥

किमर्थमस्मिन्निहितो विधात्रा
स भूसुरः श्राद्धविधानकृत्ये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न शक्यते वक्तुमिदं जगत्यां
जनेन केनापि भवादृशेन ॥७१॥

ईश्वर ने पितृदौत्य में ब्राह्मणों को क्यों नियुक्त किया है इस बात का उत्तर ईश्वर की सृष्टि में कोई नहीं दे सकता ॥ ७१ ॥

न भूसुरे विश्वसितिर्यदा ते
कथं तदा तत्सहजे न तत्र ।
कृपीटयोनौ यदि सा तदानीं
वृथैव तस्मिन्हविषां निवेशः ॥७२॥

यदि ब्राह्मण में आपका विश्वास नही है तो उसके सहोदर अग्नि में विश्वास क्यों है ? यदि नहीं है तो उसमें हवन करना भी व्यर्थ है ॥७२॥

निरूढमेतन्मृतकक्रियायां
निसर्गतः श्राद्धपदं प्रसिद्धम् ।
न विद्यतेऽन्यासु ततः क्रियासु
प्रवृत्तिरस्य प्रथिता पदस्य ॥७३॥

यह श्राद्ध शब्द प्रेतकार्य में रूढ़ है इसी कारण से अन्य कार्यों में इस शब्द की प्रवृत्ति नहीं दीखती है ॥ ७३ ॥

न मन्यसे रूढमिदं यदि त्वं
पदं तदा दारपरिग्रहेऽपि ।
कथं न शक्तिं प्रहिणोषि तस्य
यथा तदर्थस्य परिग्रहः स्यात् ॥४७॥

यदि आप इसको प्रेतकार्य में रूढ़ नहीं मानते हैं तब विवाह के समय में भी इसी शब्द का प्रयोग क्यों नहीं करते हैं ? ॥ ७४ ॥

न भुञ्जते स्थूलपदार्थजातं
यमालयस्थाः पितरो यतस्ते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतीन्द्रियं विग्रहमाप्य तत्र
नयन्ति कालं नियतिप्रदिष्टम् ॥७५॥

यमालय में रहनेवाले पितर सूक्ष्म शरीर होने के कारण मोटा पदार्थ नहीं खा सकते हैं यह नियम है, क्योंकि वे अतीन्द्रिय होकर वहां पर रहते हैं ॥ ७५ ॥

यथाऽर्भको गर्भगतोऽतिसूक्ष्मं
प्रपद्यते भुक्तरसं तनुत्वात् ।
तथैव लोकान्तरगोऽपि जीव-
स्तदंशमात्रं समुपैत्यदृष्टम् ॥७६॥

जिस प्रकार गर्भगत जीवात्मा सूक्ष्म होने के कारण सूक्ष्म रस लेता है उसी प्रकार पितर भी अति सूक्ष्म होने के कारण अन्न का रस मात्र लेते हैं ॥ ७६ ॥

कियन्तमश्नन्ति तदंशमेत-
न्न शक्यते वक्तुमतीन्द्रियत्वात् ।
तदंशजातस्य यमालयस्थाः
सुमस्य सौरभ्यमिवानिलस्थम् ॥७७॥

अन्न का कितना रस वे लेते हैं यह बात अतीन्द्रिय होने के कारण नहीं कही जा सकती है जिस प्रकार वायु में पुष्पगन्ध ? ॥ ७७ ॥

यथाऽत्र वायुं समुपागतस्य
मनुष्यवर्यैः क्रियतेऽनुमानम् ।
विशिष्टगन्धस्य तथैव पिण्ड-
स्थितांशमानं भवता विधेयम् ॥७८॥

वायु में मिले हुए पुष्पगन्ध का जिस प्रकार अनुमान किया जाता है उसी प्रकार पिण्डस्थित अंश का भी अनुमान कर लीजिए ॥ ७८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कन्यांशगे सिध्यति सूर्यदेवे
यस्मादिदं श्राद्धमतस्तदुक्तम् ।
कन्यागतं ज्योतिषमत्र मान
सन्दृश्यतां यद्यनवस्थितिस्ते ॥७९॥

सूर्य्य भगवान् जब कन्या राशि पर आते हैं उस समय श्राद्ध किया जाता है। इसीलिए इसका नाम "कन्यागत" है ॥ ७९ ॥

अहर्निशं यद्वददन्ति लोका
यमालयस्था न कदापि तद्वत् ।
यतः प्रदिष्टो निगमेषु तेषां
स मास एको दिवसायमानः ॥८०॥

जिस प्रकार भूलोक के प्राणी सर्वदा खाते हैं इस प्रकार पितर नहीं खाते हैं उनके लिए केवल श्राद्ध पक्ष तथा अमावस्या ही नियत है ॥ ८० ॥

कुहूमुपागत्य विधिप्रदिष्टां
यमालयस्थाः पितरोऽपराह्णे ।
पदार्थमश्नन्ति मुखप्रजाता-
न्प्रविश्य वेदो वदतीदमेवम् ॥८१॥

पितृगण अमावास्या के दिन अपराह्ण काल में ब्राह्मणों में प्रविष्ट होकर भोजन करते हैं। वेद इस बात को कहता है ॥ ८१ ॥

परस्परोपक्रियया जगत्यां
परस्परोत्त्थस्य विधेः प्रकामम् ।
समुद्भवः सम्भवति प्रसादा-
न्निदर्शनं वैधमिहास्ति लोकः ॥८२॥

संसार में सभी कार्य्य परस्परोपकार भाव से बनता है। इसमें विधिप्रदिष्ट निदर्शन संसारमात्र है ॥ ८२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा निराधारपरिस्थितिः खे
पुराऽस्मदीयाऽतितराम्बभूव ।
तथैव सा सम्प्रति वेदवाक्या-
त्प्रयातजीवस्य दिवि स्थितस्य ॥८३॥

जिस प्रकार गर्भ में आने से पहले आकाश में जीव निराधार रहता है इसी प्रकार पितर भी निराधार मार्ग में रहकर श्राद्ध तर्पण का अवलम्ब चाहते हैं ॥ ८३ ॥

अदुर्यथास्मत्पितरः स्ववीर्यं
प्रदाय विश्रामगृहं तथैव ।
स्वधांशदानादधुना पितृभ्यः
स्थलं प्रदेयं विधिनाऽन्तरिक्षे ॥८४॥

हमारे माता पिता ने रजवीर्य देकर जिस प्रकार हमको अवलम्ब दिया है उसी प्रकार स्वधा देकर हमको भी उनके लिए अवलम्ब देना चाहिये ॥ ८४ ॥

प्रसन्नतामेत्य यमालयस्था-
मनीषितार्थं भुवि सङ्गतानाम् ।
स्ववंशजानां वितरन्ति तस्मा-
न्न वंशनाशः प्रभवत्यशङ्कम् ॥८५॥

पितृगण प्रसन्न होकर मनुष्यों को मनोवांछित फल देते हैं उसी से संसार में मनुष्यों का वंश चलता रहता है ॥ ८५ ॥

स्वमातरं यद्वदुपैति वत्सो
नवोऽपि गोयूथगतस्तथैव ।
स्वधा निजानेव यमालयस्था-
नुपैति मध्ये परिहाय सर्वान् ॥८६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिस प्रकार वत्स गोसमूह में अपनी माता को पहचान लेता है उसी प्रकार पुत्र-प्रदत्त स्वधा भी उनके पितरों को ही मिलती है, अन्य को नहीं ॥ ८६ ॥

प्रबन्ध एषः पुरुषोत्तमस्य
चराचरव्याप्तमहत्कलस्य ।
समस्तलोकेषु यथावकाशं
प्रतिष्ठितो भाति समानसानाम् ॥८७॥

यह प्रबन्ध सर्वव्यापक ईश्वर का है । वही समस्त लोकों का प्रबन्ध अपनी इच्छा के अनुसार करता रहता है ॥ ८७ ॥

गतिस्त्रिधा वेदमते समुक्ता
भुवि स्थितानां प्रथमाभिधेया ।
विभिद्य सूर्यं परमात्मरूपे
परिस्थितिस्तासु तपोविशेषात् ॥८८॥

वेद में भूमिगत प्राणियों की तीन प्रकार की गति कही है उनमें पहली गति सूर्य्यमण्डल भेद कर परमेश्वर में मिलना है ॥ ८८ ॥

विसृज्य देहं मनसोऽतिवेगा-
दुपेत्य शीतांशुमयूखसङ्गम् ।
यमालयस्थानफला समुक्ता
गतिर्द्वितीया मुनिभिः प्रशस्तैः ॥८९॥

मरने के अनन्तर मनःशक्ति की अधिकता से चन्द्रमा की किरणों में मिलकर पितृलोक में जाना दूसरी गति है ॥ ८९ ॥

न ये स्वकर्मानुगमेन सूर्यं
विशन्ति नो चन्द्रमसं यथावत् ।
व्रजन्ति ते तिर्यगवस्थितिं ता-
मितस्ततो भूतपरिस्थितिस्थाम् ॥९०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिनमें न प्राणशक्ति प्रबल है न मन की ही शक्ति वे भूतयोनि में प्रविष्ट होकर इधर उधर घूमते घूमते कीट पतंग बनते हैं ॥ ६० ॥

अनस्थिदेहाः पवनेन पूता
यमालयं ये शुचयः प्रयान्ति ।
ऋते शरीरं न हि तन्निवासः
शरीरमेषां निगमे समुक्तम् ॥६१॥

जो पुण्यात्मा अस्थिरहित वायुपूत स्वभावतः पवित्र स्वर्ग में जाते हैं उनको शरीर मिलता है, बिना शरीर के वे नहीं रहते हैं [अनस्था: पूताः इति वेदमन्त्रः ] ॥ ६१ ॥

दृशोः पदं यान्ति मनुष्यलोके
यमालयस्थाः पितरः परन्तु ।
न दिव्यनेत्रद्युतिमन्तरा ते
विशन्ति नेत्राणि भुवि स्थितानाम् ॥६२॥

पितृगण मनुष्यों को दर्शन देते हैं परन्तु वे दिव्यदृष्टि से देखे जाते हैं चर्मचक्षु से उनका दर्शन नहीं होता है [ तिर इव हि पितरो मनुष्येभ्यः इति श्रुतिः ]॥ ६२ ॥

मदुक्तवाक्ये यदि ते कदाचि-
च्छवेदशङ्केऽपि भवेन शङ्का ।
विलोक्यतां पद्मपुराणभागः
स तत्र यस्मिन्मम वाग्विभागः ॥६३॥

मेरे कथन में यदि आप को कुछ शंका है तो पद्म पुराण का वह भाग देखिए जिसमें ये बातें विद्यमान हैं [ पद्मपुराण-सृष्टि खण्ड अ० १२ श्लोक ७४—११० ] ॥ ६३ ॥

निमन्त्रितानत्र विशेषकृत्ये
मुखप्रजातानुपयान्ति सर्वे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समागते श्राद्धदिने यमस्थाः
प्रयान्ति यातेषु च तेषु तेऽपि ॥९४॥

श्राद्ध में निमन्त्रित ब्राह्मणों का पितर अनुगमन करते हैं और उनके चले जाने पर चले जाते हैं [ निमन्त्रितान्हि पितर इति मनुः ] ॥ ९४ ॥

यतस्त्रिलोकप्रगतिः समुक्तो
मुखप्रजातो निगमेन मन्त्रैः ।
विशेषधर्मानुगतैर्नियुक्त-
स्ततः स एवात्र निवापकृत्ये ॥९५॥

ब्राह्मण त्रिलोकगामी हैं ऐसा वेद में कहा है। इसी कारण मुनियों ने इस कार्य्य में उनको नियुक्त किया है [ त्रयो लोकाः सम्मिता ब्राह्मणेन इति वेदमन्त्रः ] ॥ ९५ ॥

यदन्नमश्नन्ति नराः पृथिव्यां
तदेव तत्पितृगणाः प्रसन्नाः ।
समुक्तमेतन्मुनिपुङ्गवेन
परापरज्ञानविचक्षणेन ॥९६॥

मनुष्य जिस अन्न से अपना निर्वाह करता है उसी का अंश पितर भी लेते हैं यह बात महर्षि वाल्मीकि ने रामायण में कही है। [ यदन्नः पुरुषो लोके तदन्नास्तस्य देवताः ] ॥ ९६ ॥

न ये मनुष्या भुवि नास्तिकत्वा-
त्परिस्थितिं श्राद्धगतां भजन्ति ।
पतन्ति तेषां पितरो जवेन
विलुप्तपिण्डप्रतिदानकृत्याः ॥९७॥

जो मनुष्य नास्तिक होने के कारण श्राद्ध नहीं करते हैं उनके पितर पिण्ड न मिलने के कारण नरक में गिरते हैं। [ पतन्ति पितरोह्येषां लुप्तपिण्डोदकक्रियाः इति भगवद्गीतावाक्यम् ] ॥ ९७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ममार यो मर्त्यकुले पुरस्ता-
दगाच्च यः स्वस्थमिमं स्वलोकम् ।
विवस्वतो वंशमणिः स एव
यमः समुक्तो निगमागमेषु ॥६८॥

मर्त्यों में जो सब से पहले मर कर यमलोक में पहुँचा वही वैवस्वत यमराज है ऐसा वेद में कहा है [ यो ममार प्रथमो मर्त्यानां, इति वेदमन्त्रः ] ॥ ६८ ॥

सनातनं श्राद्धमिदं यथाव-
द्यतः समुक्तं निगमेषु तस्मात् ।
कदापि लोके मनुजैर्न हेयं
विधेर्विधाने विनियोज्य बुद्धिम् ॥६६॥

यह श्राद्ध वैदिक होने के कारण सनातन है । वेद पर विश्वास करने वालों को यह कभी नहीं छोड़ना चाहिए ॥ ६६ ॥

वदन्ति ये जीवितपूर्वजानां
मदाकुलाः श्राद्धमलं प्रयान्तु ।
यमालयं ते नियतं यमोऽपि
करोतु तेषां नरके निवासम् ॥१००॥

जो मनुष्य मदमत्त होने के कारण जीते माता पिता का ही श्राद्ध करते हैं वे यमलोक में जाकर यमराज का दण्ड भोगें ॥ १०० ॥

इदं महद्दर्पहरं रिपूणां
वचः सभायां प्रथयत्यमन्दम् ।
बुधे परास्तः सुतरामधर्मो
जगाम वेगाद्विजयं स धर्मः ॥१०१॥

धार्मिक विद्वान् के इस प्रकार कहने पर अधर्म का नाश हुआ और वैदिक सनातन धर्म का विजय हुआ ॥ १०१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विजित्य कल्कानुगतं महान्तं
बृहस्पतिं तत्र बलोदयेन ।
यमोऽपि मेने सफलं प्रयासं
विपक्षवर्गः प्रथितं स्वहासम् ॥१०२॥

पापपरायण बृहस्पति के इस प्रकार पराजय होने पर यमराज ने भी अपना परिश्रम सफल माना और शत्रुवर्ग का उपहास हुआ ॥१०२॥

विजित्य मद्रं विलसद्विनिद्रं
स भद्रमप्यत्र निवेशयित्वा ।
सुवर्णयूपं निचखान तस्यां
दिशि स्वनामाङ्कितमप्रमत्तः ॥१०३॥

मद्र प्रांत का इस प्रकार विजय करके धर्मदेव ने यहाँ पर भी विजय स्तम्भ का आरोपण कर दिया ॥ १०३ ॥

अगस्त्यनामानमृषिप्रकाण्डं
प्रणम्य चक्रायुधमप्यनन्तम् ।
जयश्रियाऽऽलिङ्गितविग्रहः स-
न्नयं स्वजन्मस्थलमाप धर्मः ॥१०४॥

ऋषियों में प्रसिद्ध अगस्त्य जी को तथा विष्णु भगवान् को प्रणाम करके विजय-लक्ष्मी-समेत धर्मदेव मद्रदेश से फिर अपनी जन्मभूमि को आगए । १०४ ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये बृहस्पतिदर्पदलनं नाम चतुर्दशः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# पञ्चदशः सर्गः

त्रिशङ्कुतिलकामाशां विजित्य विजयोद्यतः ।
धर्मः सनातनो दध्यौ दिशं वरुणलाञ्छनाम् ॥१॥
दिशमेतां हृदि ध्यात्वा सत्वरं तदधीश्वरम् ।
वरुणं भगवान्धर्मः सस्मार बलवर्धनम् ॥२॥
मधूसूदनसन्देशं वरुणोऽपि हृदि स्मरन् ।
धर्मदेवसहायार्थं शम्भलं समुपागमत् ॥ ३ ॥
तमागतं समालोक्य धर्मोऽपि वरुणं द्रुतम् ।
समयोचितकार्येण वर्धयामास सत्वरम् ॥ ४ ॥

दक्षिण दिग्विजय के अनन्तर विश्वविजयी सनातनधर्म ने अपने मन में पश्चिम दिशा का स्मरण किया ॥ १ ॥ इस दिशा का स्मरण आते ही धर्मदेव ने इसके अधिपति वरुणदेव का स्मरण किया ॥ २ ॥ भगवान् की आज्ञा का स्मरण करके वरुण भी धर्म की सहायता के लिए उनके पास पहुँचे ॥ ३ ॥ वरुण को आया हुआ देखकर धर्मदेव ने भी शीघ्र ही उनको सेनापति के पदपर अभिषिक्त कर दिया ॥ ४ ॥

अथ गङ्गां समुत्तीर्य यमुनामपि मार्गगाम् ।
सबलो भूपतिरयं कुरुक्षेत्रमुपागमत् ॥ ५ ॥
देवलब्धवरव्रातः शतमन्युसमुद्भवः ।
दलं विदलयाञ्चक्रे सिताश्वो यत्र कौरवम् ॥ ६ ॥
परापवादनिरतं परस्वहरणोद्यतम् ।
गदया पातयामास यत्र भीमः सुयोधनम् ॥ ७ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुरुक्षेत्रमतिक्रम्य बहुतीर्थसमाकुलम् ।
विजेतुं प्रययौ धर्मो देशं पञ्चनदाभिधम् ॥८॥

इसके अनन्तर धर्मदेव ने गंगा और यमुना को पार करके सेनासमेत उस कुरुक्षेत्र में पदार्पण किया ॥ ५ ॥ जिसमें देवताओं से वर प्राप्त करके अर्जुन ने कौरवों का बल नष्टभ्रष्ट कर दिया ॥ ६ ॥ और दूसरे की निन्दा में तत्पर, परस्व-हरण में उद्यत, दुर्योधन को जहां पर भीम ने गदा से नीचे गिराया ॥ ७ ॥ कुरुक्षेत्र के अनन्तर तीर्थसमाकुल पञ्चनद देश को जीतने के लिए धर्मदेव चले ॥ ८ ॥

अथागतं समाकर्ण्य धर्ममेकान्तशर्मदम् ।
चकम्पे हृदयं वेगात्पापाचारवतां नृणाम् ॥ ६ ॥
मुख्यांशतामुपगतः कलेरत्र प्रवर्धनः ।
दयानन्दाभिधः कश्चिद्धर्ममभ्याययौ मदात् ॥१०॥
कलिरेनमनुप्राप्य स्वानुरूपमनोरथम् ।
देशे पञ्चनदाभिख्ये वञ्चयामास दुर्मदान् ॥११॥
अथावददयं तत्र समागत्य महोदयः ।
नावतारा भगवतः सम्भवन्ति भुवस्तले ॥१२॥

यहाँ पर धर्म का आगमन सुनकर पापियों का मन डरके मारे हिल गया ॥ ६ ॥ यहां पर कलि का चतुर्थ अंशावतार दयानन्द धर्मदेव के साथ युद्ध करने के लिए आया ॥ १० ॥ स्वानुरूप मनोरथ, इस दयानन्द को पाकर, कलि ने इस देश में मूर्खों को ठग लिया ॥ ११ ॥ इसके अनन्तर दयानन्द ने कहा कि संसार में ईश्वर का अवतार होना असम्भव है ॥ १२ ॥

[ पूर्वपक्षः ]

यः सर्वशक्तिमाँल्लोकैर्गीयते जगताम्पतिः ।
हेतुना केन स विभुर्भूतलेऽवतरत्ययम् ॥१३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वव्यापकरूपेण यस्यावस्थितिरुच्यते ।
अवतारकथा तस्य भूतले निष्प्रयोजना ॥१४॥
भूतले योऽवतरति प्रभुः स जगताङ्कथम् ।
यदि प्रभुर्नागमनं परस्परविरोधतः ॥१५॥
एकत्र सम्भवात्तस्य सर्वव्यापकता कथम् ।
तस्यां सति कथं लोके सम्भवस्तस्य तादृशः ॥१६॥
रामादयो भगवतो नावताराः कथञ्चन ।
वृथा मन्दात्मभिस्तेषामवतारकथाऽऽहृता ॥१७॥
एतावदुक्त्वा विरते दयानन्दे तदुत्तरम् ।
प्रदातुमतुलप्रज्ञो बुधः प्रावोचदीदृशम् ॥ १८ ॥

जिसको संसार में सर्वशक्तिमान् माना जाता है वह ईश्वर किस कारण अवतार लेता है ? ॥ १३ ॥ जो जगत् में सर्वव्यापक बनकर रहता है उसका संसार में अवतार लेना व्यर्थ है ॥ १४ ॥ जिसका भूतल में अवतार होता है वह जगदीश्वर कैसा ? और जो जगदीश्वर है उसका अवतार कैसा ? ॥ १५ ॥ अवतार लेने से उसकी सर्वव्यापकता नष्ट होती है, उसके मानने पर उसका अवतार नहीं बनता है ॥ १६ ॥ रामचन्द्र आदि ईश्वर के अवतार नहीं हैं उनको व्यर्थ ही मनुष्य अवतार मानते हैं ॥ १७ ॥ इतना कह कर मूर्खता को प्राप्त हुए दयानन्द के प्रति धार्मिक विद्वान् ने इस प्रकार कहा ॥ १८ ॥

[ उत्तरपक्षः ]

विद्यन्ते शक्तयो यत्र सर्वा अपि जगत्पतौ ।
नास्ति किन्तत्र भूभारहारिणी शक्तिरुच्यताम् ॥१९॥
एकोनशक्तिमान्देवः प्रतिभाति मते तव ।
गतान्यथाऽवतरणात्मकशक्तिः क्व तद्गता ॥२०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिस ईश्वर में समस्त शक्तियां हैं क्या उसमें भूभार-हरण करने की शक्ति नहीं है ? ॥ १९ ॥ आपके मत में ईश्वर एक शक्ति कम सर्व शक्तिमान् प्रतीत होता है । यदि ऐसा नहीं तो उसकी अवतरणात्मक शक्ति कहाँ गई ? ॥ २० ॥

स्वभाव एव तस्यायं प्रसिद्धो जगतीतले ।
यदागमनमीशस्य धर्मावनकृते विभोः ॥२१॥
न सम्भूतिमुपागच्छेद्विश्वात्मा यदि भूतले ।
भक्तकष्टहरं कोऽत्र मनुजो हृदि चिन्तयेत् ॥२२॥
हेतुना येन विश्वात्मा विश्वं निर्माति लीलया ।
स एव हेतुरत्रापि विद्यते किन्न दृश्यताम् ॥२३॥
सर्वव्यापकतामेव सम्बोधयितुमीश्वरः ।
प्रकटीभवति प्रायो यत्र तंत्र युगे युगे ॥२४॥

धर्म की रक्षा के लिए अवतार लेना भगवान् का स्वभाव है इस लिए ऐसा होता है ॥ २१ ॥ भूतल में यदि भगवान् अवतार न लें तो उनको भक्त-कष्ट-हर कौन कहे ? ॥ २२ ॥ जिस कारण से भगवान् सृष्टि रचते हैं उसी कारण से अवतार भी लेते हैं ॥ २३ ॥ सर्वव्यापकता को बतलाने के लिए ही भगवान् युग युग में अवतार लेते हैं ॥ २४ ।

न स्याद्यदि स सर्वत्र वस्तुमात्रेऽपि संस्थितः ।
मीनादिषु कथं तस्य समुद्भूतिस्तदा भवेत् ॥२५॥
सर्वत्र विद्यमानोऽपि यथाऽग्निरुचितस्थले ।
प्राकट्यमेति विश्वात्मा तथा सर्वत्र सर्वगः ॥२६॥
काष्ठमध्यगतो यद्वदग्निर्न दहनात्मकः ।
तथान्तर्गतरूपेण जगदीशोऽपि निष्प्रभः ॥२७॥
निष्प्रयोजनता लोके तावत्तमुपगच्छति ।
यावदग्निरिवानन्तो न बहिर्भवति प्रभुः ॥२८॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदि भगवान् पदार्थमात्र में न होते तो मीन आदि में उनका अवतार कैसे होता ? ॥ २५ ॥ सर्वत्र विद्यमान भी अग्नि जिस प्रकार उचित स्थल में प्रकट होता है उसी प्रकार विश्वात्मा भगवान् भी उचित उचित स्थल में प्रकट होते हैं ॥ २६ ॥ काष्ठमध्यगत वह्नि जिस प्रकार दहन शक्ति नहीं रखता है। उसी प्रकार ईश्वर भी बिना अवतार के निष्प्रयोजन है ॥२७॥ निष्प्रयोजनता तब तक ईश्वर में रहती है जब तक अग्नि की तरह वह प्रकट नहीं होता है ॥ २८ ॥

रसाः सर्वेऽपि भूमिस्था यथाऽलं निष्प्रयोजनाः ।
फलवत्तां विना लोके तथा सर्वगतः प्रभुः ॥२६॥
प्रभुरेवावतरति प्रकर्षेण भुवस्तले ।
प्रपूर्वकस्य भूधातोस्तादृगर्थे नियन्त्रणात् ॥ ३० ॥
सर्वत्रावस्थिता विद्युद्यथा हेतुविशेषतः ।
प्रयाति सम्भवं तद्वत्सर्वत्रावस्थितः प्रभुः ॥३१॥
एकत्रोद्गमनं तस्य सर्वव्यापकतां यथा ।
न नाशयति दिव्याग्नेस्तथा विश्वात्मनो भवः॥३२॥

भूमिगत रस जिस प्रकार फलादि के बिना काम के नहीं होते हैं उसी प्रकार सर्वव्यापक ईश्वर भी बिना अवतार के काम का नहीं होता है ॥ २६ ॥ प्रपूर्वक भूधातु का अर्थ प्रकर्षेण सम्भवन है। वह केवल अवतार ही में घट सकता है अन्यत्र नहीं ॥ ३० ॥ सर्वत्र विद्यमान भी बिजली जिस प्रकार कारण विशेष से प्रकट होती है उसी प्रकार भगवान् भी समय समय पर प्रकट हो जाते हैं ॥ ३१ ॥ जिस प्रकार बिजली का प्रकट होना उसकी सर्वव्यापकता में बाधक नहीं होता है उसी प्रकार ईश्वर में भी समझना चाहिए ॥ ३२ ॥

अलौकिकचमत्कारशालिता न महेश्वरम् ।
विनाऽवतिष्ठते लोके सामान्यमनुजव्रजे ॥३३॥
गोवर्धनांचलधरः सप्तवर्षात्मकः शिशुः ।
किं कचिल्लभ्यते लोके विना तं नन्दनन्दनम् ॥३४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पादन्यासैस्त्रिभिः केन लोकत्रितयमावृतम् ।
वदान्धशिष्य ! भूलोके भगवन्तं विना हरिम् ॥३५॥
रामावतारतां लोके यदि यायान्न केशवः ।
ज्ञानं वेदगतं कोऽत्र साक्षात्कृत्य निदर्शयेत् ॥३६॥

संसार में जितने लोकोत्तर चमत्कार हैं वे ईश्वर के अतिरिक्त सामान्य मनुष्य में नहीं रहते हैं ॥ ३३ ॥ गोवर्धन का उठाने वाला सात वर्ष का बालक श्रीनन्दनन्दजी को छोड़ कर और कौन हो सकता है ॥३४॥ तीन चरणों में तीनों लोकों को ख़तम कर देना श्रीवामनावतार के अतिरिक्त किसकी सामर्थ्य में है ? ॥ ३५ ॥ यदि भगवान् श्रीरामावतार में प्रकट नहीं होते तो वैदिक ज्ञान का चरित्र दर्शन और कौन कराता ? ॥ ३६ ॥

एवंविधान्यनन्तानि चरितानि जगत्पतेः ।
अलौकिकचमत्कारबोधकानि महोतले ॥ ३७ ॥
परं न गुरुशुश्रूषां विना तादृशकर्मणाम् ।
बोधः सञ्जायते चित्ते न विना दिव्यदर्शनम् ॥३८॥
विशालाक्षः सिताश्वोऽपि न शशाक यमीश्वरम् ।
द्रष्टुं विना तत्करुणां त्वादृशां तत्र का गतिः ॥३९॥
एवमुत्तरमादिश्य विरते धर्मपण्डिते ।
दयानन्दः पुनरिदं प्राह धर्मसभां गतः ॥४०॥

इस प्रकार के अनेक चरित्र भगवान् की अलौकिकता के बताने वाले भूतल में हुए हैं ।३७। परन्तु गुरु कृपा विना उन चरित्रों का रहस्य सामान्य मनुष्य के मन में नहीं आ सकता है ॥ ३८ ॥ विशाल नेत्र अर्जुन भी बिना भगवान् की कृपा के जिनको नहीं देख सका वहां आप जैसों की गति ही कहाँ है ॥ ३९ ॥ इस प्रकार उत्तर देकर धार्मिक पण्डित के बैठने पर दयानन्द ने फिर कहा ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[ पूर्वपक्षः ]

न मूर्तावीश्वरस्थानं चिन्मयस्य जगत्पतेः ।
यतः सा दृश्यते लोके जडप्रकृतिसम्भवा ॥ ४१ ॥
सर्वदैव निराकारो न साकारो मते मम ।
स सर्वव्यापकः सर्वशक्तिमान्परमेश्वरः ॥ ४२ ॥
सर्वभूतान्तरगतः सर्वतो बहिरास्थितः ।
यैरुच्यते मूर्तिमध्ये न ते तत्त्वं विजानते ॥ ४३ ॥
ईश्वरप्राप्तये येन मूर्तिपूजावलम्बनम् ।
समाश्रितं भूमितले गतं तत्प्रेक्षया वनम् ॥ ४४ ॥

चेतन ईश्वर की सत्ता मूर्ति के अन्दर नहीं है क्योंकि मूर्ति जड़ है ॥४१॥ ईश्वर सर्वदा ही निराकार है। वह साकार किसी काल में भी नहीं होता है ॥ ४२ ॥ सबके भीतर और सब के बाहर रहनेवाले ईश्वर को जो मूर्ति में मानते हैं वे अल्पज्ञ है ॥ ४३ ॥ ईश्वर की प्राप्ति के लिए जिसने मूर्तिपूजा का अवलम्बन लिया उसको बुद्धिमान् नहीं समझना चाहिये ॥४४॥

बुद्धेर्मान्द्यादिदं जैनैर्मूर्तिपूजनमादृतम् ।
न तदार्षं न तद्वैधं द्वैधमत्र निदर्शनम् ॥ ४५ ॥
इमं प्रश्नमुपस्थाप्य मूकतामुपसङ्गते ।
तत्र तस्योत्तरं दातुमेवमाह बुधाग्रणीः ॥ ४६ ॥

अल्पज्ञता के कारण जैनों ने इसको चलाया न यह आर्ष है न वैध है, द्वैध इसमें प्रमाण है ॥ ४५ ॥ इस प्रश्न को उपस्थित करके दयानन्द के बैठने पर उत्तर देने के लिए धार्मिक विद्वान् फिर उठे ॥ ४६ ॥

[ उत्तरपक्षः ]

न मूर्तावीश्वरोऽस्त्यत्र प्रमाणं वेदसङ्ग्रहे ।
भवता न किमप्युक्तं मृषाऽतस्तव जल्पनम् ॥४७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देहान्तर्गतजीवस्य यथा चेतनतावशात् ।
देहश्चेतनतामेति तथैव प्रकृतिः सदा ॥ ४८ ॥
चिन्मयो जगतामीशः प्रकृतिं व्याप्य सर्वदा ।
यतः सन्तिष्ठते तस्माज्जडत्वं तत्र न स्थिरम् ॥४६॥
शरीरजीवयोर्लोके यथा विश्लेषणं स्थिरम् ।
प्रकृत्यन्तर्गतस्यास्य न तथा जगताम्पतेः ॥ ५० ॥

वे बोले कि मूर्ति में ईश्वर नहीं है इसमें आपने कोई प्रमाण उपस्थित नहीं किया है ॥ ४७ ॥ देहान्तर्गत जीव की चेतनता से जिस प्रकार देह चेतन माना जाता है उसी प्रकार ईश्वर के सहयोग से प्रकृति भी चेतन है ॥ ४८ ॥ चेतन ईश्वर प्रकृति में सर्वदा व्याप्य व्यापकभाव से रहता है इसलिए प्रकृति में जड़ता नहीं है ॥ ४६ ॥ जिस प्रकार देह से जीव अलग हो जाता है उस प्रकार प्रकृति से ईश्वर अलग नहीं होता है ॥ ५० ॥

स सर्व इति वेदेन गीयते जगताम्पतिः ।
सर्वव्यापकरूपेण स सर्वत्रावतिष्ठते ॥५१॥
व्याप्यव्यापकसम्बन्धबन्धनात्स महेश्वरः ।
न कदापि बहिर्याति यद्वेति तदुदीर्यताम् ॥५२॥
सर्वदैव निराकार इति यत्समुदाहृतम् ।
भवता नैव तद्युक्तं प्रमाणाभावसम्भवात् ॥५३॥
सर्वासु विद्यते देवः स मूर्तिषु जगत्पतिः ।
सर्वव्यापकता नोचेत्कथं तमुपसंविशेत् ॥५४॥

वेद में भगवान् का नाम "सर्व" है। सर्वभगवान् सर्व व्यापक होकर सर्वमय बन जाते हैं ॥ ५१ ॥ समवाय सम्बन्ध से नित्य व्याप्यव्यापक सम्बन्ध से ईश्वर जगत् से अलग नहीं होता है ॥ ५२ ॥ भगवान् सर्वदा निराकार रहते हैं, यह जो आपने कहा है इसमें कुछ प्रमाण नहीं है ॥५३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवान् व्याप्यव्यापक सम्बन्ध से सब मूर्तियों में विद्यमान हैं इसीलिए वे विश्वात्मा कहाते हैं ॥ ५४ ॥

यस्मान्निर्गतआकारः स निराकार उच्यते ।
नासीद्यदि तदा तस्मान्निर्गतिं किमुपागतम् ॥५५॥
य एव सूक्ष्मरूपेण वाय्वाकाशमयः शिवः ।
स एव स्थूलरूपेण जलाग्निधरणीमयः ॥ ५६ ॥
पञ्चभूतात्मकं ब्रह्म न तद्भिन्नमिति स्थितिः ।
यादृशी वेदविज्ञानां तद्वद्वेदान्तवादिनाम् ॥५७॥
लूता यथा तन्तुततिं स्वयमाविष्करोत्यरम् ।
सर्वशक्तिमयस्तद्वज्जगतामीश्वरो जगत् ॥५८॥

निर्गत हुआ है आकार जिससे वह निराकार होता है उसमें यदि आकार पहले से न था तो निकल क्या गया? ॥ ५५ ॥ भगवान् ही वायु और आकाश के रूप से सूक्ष्म हैं तथा भगवान् ही जल, अग्नि और पृथिवी के रूप से स्थूल हैं ॥ ५६ ॥ ब्रह्म पञ्चभूतात्मक है, ब्रह्म से भिन्न कुछ नहीं है, यह जो सिद्धान्त है वह वेद और वेदान्त से भिन्न नहीं है ॥ ५७ ॥ ऊर्णनाभ जिस प्रकार अपनी इच्छा से जाल पूर देता है उसी प्रकार ब्रह्म भी अपनी लीला से जगत् बनाता है ॥ ५८ ॥

बुद्बुदानां यथा लोके जलादेव समुद्भवः ।
न भिन्नः कमलात्तद्वज्जगदेतत्तदीश्वरात् ॥ ५९ ॥
"या ते रुद्रेति" मन्त्रेण वैदिकेन जगत्पतेः ।
निगद्यते तस्य तनूरघोरा पापकाशिनी ॥६०॥
प्रजापतिर्गर्भगतो बहुधा सम्प्रजायते ।
अदृश्यरूपस्तद्योनिं धीराः पश्यन्ति नेतरे ॥ ६१ ॥
स एवाग्निस्वरूपेण गीयते जगताम्पतिः ।
स एव जलरूपेण वरुणः सम्प्रगीयते ॥ ६२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुदबुदे जिस प्रकार जल से उत्पन्न होने के कारण जल से भिन्न नहीं हैं इसी प्रकार जगत् भी ब्रह्म से भिन्न नहीं है ॥ ५९ ॥ [या ते रुद्र शिवा तनूः] इस मन्त्र से भगवान् का शरीरवान् होना भी वेदसम्मत है ॥ ६० ॥ [ प्रजापतिश्चरति गर्भे ] इस मन्त्र के आधार पर भगवान् का गर्भ में आना भी सिद्ध है परन्तु वह सब को नहीं दीखता है ॥ ६१ ॥ वह ईश्वर ही अग्नि स्वरूप है, वही जल रूप से वरुण कहाता है [ तदेवाग्निस्तदादित्य इति मन्त्रः ] ॥ ६२ ॥

स एव पृथिवीरूपः स एवाकाशतां गतः ।
स एव वायुरूपेण श्रुतिभिः परिगीयते ॥६३॥
यजुर्वेदगता दिव्या "पद्भ्यां भूमिरिति" श्रुतिः ।
पृथिव्याः कथयत्येव प्रत्यक्षं चरणात्मताम् ॥६४॥
शरीरं यस्य पृथिवी न यं वेद निजस्थितम् ।
स एवोपनिषन्मन्त्रैर्गीयते परमेश्वरः ॥६५॥
अश्मा चेत्यादिमन्त्रेण पृथिव्यन्तर्गतात्मनाम् ।
वेदेन कथ्यते यज्ञरूपता जगताम्पतेः ॥६६॥

वे ही भगवान् पृथिवीरूप हैं, आकाश और वायु के स्वरूप में भी वे ही विद्यमान हैं ॥ ६३ ॥ २ [ यस्य पृथिवी शरीरं ] इस प्रकार कहते हुए उपनिषदों के मन्त्र उसको पृथिवी स्वरूप भी मानते हैं ॥ ६४ ॥ यजुर्वेद में [ पद्भ्यां भूमिः ] यह मन्त्र पृथिवी को भगवान् का चरण-स्थानीय बतलाता है ॥ ६५ ॥ [ अश्मा च मे ] यह वेदमन्त्र पृथिवी के अन्तर्गत द्रव्यों को यज्ञभगवान् का स्वरूप बतलाता है ॥ ६६ ॥

चित्तस्य देशबन्धोऽत्र धारणा परिकीर्त्यते ।
यथाभिमतसत्त्वस्य ध्यानतस्तत्परिस्थितिः ॥६७॥
एतदेव जगद्धातुर्महत्त्वं यन्मनोगतम् ।
स पूरयति सर्वत्र सर्वभावेन सर्वदा ॥६८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा देहगतो जीवो देहसत्कारयोगतः ।
तोषमेति तथा लोके भगवान्भूतवन्दनात् ॥६९॥
सर्वव्यापकतायोगान्न कदापि स चिन्मयः ।
सर्वं विहाय कुत्रापि प्रयाति विषयान्तरम् ॥७०॥

चित्त का देशबन्ध धारणा पदवाच्य है "यथाभिमत ध्यान से" उस का समन्वय हो जाता है ॥६७॥ भगवान् का यही महत्त्व है कि वह मनोगत भावों को सर्वत्र पूर्ण करते रहते हैं ॥ ६८ ॥ देह के सत्कार से जिस प्रकार देहगत जीव सतुन्ष्ट होता है उसी प्रकार पृथिव्यादि भूतों के पूजन से भगवान् तुष्ट होते हैं ॥ ६९ ॥ सर्वव्यापक होने के कारण भगवान् पञ्चमहाभूतों को छोड़कर अन्यत्र कदापि नहीं रह सकते हैं ॥७०॥

अतएव स विश्वात्मा विश्वमात्रे व्यवस्थितः ।
यैरुच्यते मूर्तिमध्ये त एव भुवि पण्डिताः ॥७१॥
मानसे यद्विभोर्ध्यानं तदप्यत्र यथोत्तरम् ।
मूर्तिपूजनमेवास्ति मनसो भुक्तसम्भवात् ॥७२॥
यदुक्तं भवता भूमौ जैनैरिदमुपाहितम् ।
मूर्तिपूजनमत्रांशे न मानं हृदयङ्गमम् ॥७३॥
अनादिकालसंसिद्धं वेदमन्त्रप्रतिष्ठितम् ।
मूर्तिपूजनसद्भावं ये न जानन्ति तेऽधमाः ॥७४॥

इसलिए उस विश्वात्मा को जो मूर्ति में मानते हैं वास्तव में वे ही पण्डित हैं ॥ ७१ ॥ मन भुक्तान्न के सूक्ष्म भाग से बनता है। जो मनुष्य मन में ईश्वर का पूजन करते हैं वे भी मूर्तिपूजा से अलग नहीं हैं ॥ ७२ ॥ आपने जो यह कहा है कि जैनों ने इसको चलाया है यह बात प्रमाणाभाव से मानने योग्य नहीं है ॥ ७३ ॥ अनादि काल से प्रचलित वेदमन्त्र-सिद्ध इस मूर्तिपूजन को जो नहीं मानते हैं वे अल्पज्ञ हैं ॥ ७४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रामो रामेश्वराभिख्यं यदा शिवमपूजयत् ।
जैनास्तदा भूमितले कुत्रासन्निति चिन्त्यताम् ॥७५॥
जाम्बूनदमयं लिङ्गं रावणेन यदाऽर्चितम् ।
शङ्करस्य तदा लोके कुत्रासीज्जैनसम्भवः ॥ ७६ ॥
उमासहायो भगवान् गिरीशो मदनान्तकः ।
कैवल्योपनिषन्मन्त्रे वर्णितः किन्न दृश्यते ॥७७॥
देवकीपुत्ररूपेण मधुसूदनवर्णनम् ।
छान्दोग्योपनिषन्मन्त्रे विस्पष्टमुपलभ्यते ॥७८॥

प्रभु रामचन्द्रजी ने जिस समय रामेश्वर का पूजन किया था उस समय में पृथिवी पर जैन कहाँ थे ? ॥ ७५ ॥ सुवर्णमय शिवलिंग का रावण ने जब पूजन किया था तब भारत में जैन कहाँ थे ? ॥ ७६ ॥ [ उमासहायं परमं महेश्वरम् ] कैवल्योपनिषद् के इस मन्त्र में शंकर भगवान् का वर्णन है । आप देखते क्यों नहीं हैं ? ॥ ७७ ॥ [ कृष्णाय देवकीपुत्राय ] छांदोग्य के इस मन्त्र में भगवान् श्रीकृष्ण का विस्पष्ट वर्णन है ॥ ७८ ॥

वासुदेवः शिवः स्कन्द इत्यादिपददर्शनात् ।
भाष्यकारोऽपि भगवानेषामस्तित्वमब्रवीत् ॥७९॥
इष्टापूर्ते संसृजेथामितिमन्त्रे निदर्शितम् ।
पूर्तशब्देन यल्लोके तदेव शिवमन्दिरम् ॥ ८० ॥
अष्टचक्रा नवद्वारा वेदमन्त्रेण गीयते ।
अयोध्या नगरी यस्यां प्राकट्यमगमद्धरिः ॥ ८१ ॥
नामस्मरणमाहात्म्यं प्रत्यक्षमुपलभ्यते ।
छान्दोग्योपनिषन्मन्त्रे तदेव हरिकीर्तनम् ॥ ८२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[ जीविकार्थे चापण्ये ] इस सूत्र के भाष्य में पतञ्जलि ने भी वासु-देव, शिव, स्कन्द का पूजन माना है ॥ ७९ ॥ [ इष्टापूर्ते संसृजेथाम् ] इस मन्त्र में पूर्त शब्द के आने से शिव मन्दिरों का बनाना ही पूर्त अर्थात् वैदिक यज्ञ है ॥ ८० ॥ [ अष्टचक्रा नवद्वारा ] इस अथर्व के मन्त्र में प्रभु रामचन्द्रजी की जन्मभूमि अयोध्या का विस्पष्ट वर्णन है ॥८१॥ भगवान् के नामस्मरण का महत्त्व छांदोग्य में विद्यमान है। रूपान्तर में इसी को हरिगुणकीर्तन कहते हैं ॥ ८२ ॥

यज्ञो विष्णुरिति प्रोक्तं यजुर्वेदेन यत्स्वयम् ।
तत्र विष्णुस्वरूपस्य वर्णनं वामनात्मकम् ॥८३॥
षड्विंशब्राह्मणे चक्रपाणये शूलपाणये ।
इत्यादिमन्त्रनिचयैर्यदुक्तं तद्विचार्यताम् ॥ ८४ ॥
एतावदुत्तरं दत्त्वा विरते धर्मपण्डिते ।
दयानन्दः पुनरिदं प्राह संसदि हृद्गतम् ॥ ८५ ॥

[ यज्ञो वै विष्णुः ] इस शतपथ की श्रुति में जो भगवान् का वर्णन है, उसमें वामनावतार सिद्ध है ॥ ८३ ॥ [ चक्रपाणये स्वाहा; शूलपाणये स्वाहा ] इन षड्विंश ब्राह्मण के मन्त्रों में जो लिखा है उस पर ध्यान दीजिए ॥ ८४ ॥ इतना उत्तर देकर आसनासीन हुए धार्मिक विद्वान् के प्रति दयानन्द ने फिर कहा ॥ ८५ ॥

[ पूर्वपक्षः ]

यानि तीर्थानि विद्यन्ते भूतले तानि पामरैः ।
कल्पितानि निजस्वार्थपारवश्येन सर्वतः ॥ ८६ ॥
न तेषु स्नानतः पुण्यं जायते न विसर्जनम् ।
पापानां प्रत्युत मृतिर्जायते मज्जनादिना ॥ ८७ ॥
न गङ्गादिनदीनाम्नां वेदमन्त्रेषु सम्भवः ।
अयोध्यादिपुरीणान्तु कथैव निगमेषु का ॥८८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतावदुक्त्वा विरते दयानन्दे द्विजद्रुहि ।
तदुत्तरं दातुमिदं प्राह धर्मप्रचारकः ॥ ८६ ॥

संसार में जितने तीर्थ हैं वे सब मनुष्यों ने स्वार्थ के लिए बनाए हैं इसलिए उन पर विश्वास नहीं करना चाहिए ॥ ८६ ॥ उनमें स्नान करने से न पुण्य होता है न पाप ही छूटता है, डूबने पर मृत्यु अवश्य प्राप्त होती है ॥ ८७ ॥ गङ्गा आदि नदियों का वेद में वर्णन नहीं है फिर अयोध्या आदि नगरों की बात तो जाने ही दीजिए ॥ ८८ ॥ इतना कह कर मूकता को प्राप्त हुए दयानन्द के प्रति धर्म के प्रचारक ने इस प्रकार उत्तर दिया ॥ ८६ ॥

[उत्तरपक्षः]

देवखाताः प्रगीयन्ते तीर्थशब्देन भूतले ।
गङ्गादिसरितः पुण्याः परमात्मविनिर्मिताः ॥६०॥

गङ्गादिदिव्यसरितां विस्पष्टमुपलभ्यते ।
वेदमन्त्रेषु नामापि पश्य वेदमनुत्तमम् ॥ ६१ ॥

जलावतार एवात्र वेदे तीर्थपदाभिधः ।
पारावार-प्रतरण-कूल्यादि-पददर्शनात् ॥ ६२ ॥

नमस्तीर्थ्याय चेत्यादि मन्त्रेषु विधियोगतः ।
फेन्यादिपदसद्भावः प्रत्यक्षं तन्निदर्शनम् ॥ ६३ ॥

ईश्वर विनिर्मित देवखात तथा गङ्गा आदि नदियाँ वेद और लोक में सर्वत्र प्रसिद्ध हैं ॥ ६० ॥ [इमं मे गंगे यमुने सरस्वति] इस ऋग्वेद के मन्त्र में गङ्गा आदि अनेक दिव्य नदियों के नाम भी विद्यमान हैं ॥ ६१ ॥ पार, अवार, प्रतरण, कूल्य आदि पदों के सद्भाव से वेद में जलावतार को ही तीर्थ कहा है [नमः पार्याय चावार्याय च नमः इति मन्त्रः] ॥६२॥ [ नमस्तीर्थ्याय च ] इस मन्त्र में फेन्य आदि शब्दों के सद्भाव से इस बात की और भी पुष्टि होती है ॥ ६३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनुना तीर्थसद्भावमुद्दिश्यैव यथोचितम् ।
निजग्रन्थे समादिष्टं "मा गङ्गां मा कुरून् गमः" ॥९४॥
अयोध्यावर्णनं वेदे मया प्रागुपदर्शितम् ।
यस्याः प्राधान्यमन्यासु पुरीष्वद्यापि लभ्यते ॥९५॥
एषु भाग्यवशाद्येन लभ्यते विनिमज्जनम् ।
न मज्जनं तस्य मन्ये भवसागरवारिषु ॥ ९६ ॥
प्रदाय सूत्तरमिदं विरते धर्मपण्डिते ।
पुनस्तत्रावददयं दयानन्दो महोदयः ॥ ९७ ॥

मनु ने मनुस्मृति में तीर्थों का सद्भाव मानकर हो [मा गङ्गां मा कुरून् गमः] ऐसा लिखा है ॥ ९४ ॥ अयोध्या नगरी का वैदिक वर्णन हमने मन्त्र द्वारा पहले ही वेद में दिखा दिया है ॥ ९५ ॥ भाग्यवश से इनमें जिनको स्नान करने का अवसर मिलता है वे भवसागर में गोते नहीं खाते हैं ॥ ९६ ॥ इतना कह कर धार्मिक पण्डित के बैठने पर दयानन्द फिर बोला ॥ ९७ ॥

[पूर्वपक्षः]

न पुराणकथाः सत्या न च ता वेदमूलकाः ।
कृष्णद्वैपायनस्तासां प्रवक्ता न मते मम ॥ ९८ ॥
नासां वेदेषु नामापि विद्यते न परिस्थितिः ।
परस्परं विरुद्धानां पुराणानामुपक्रमात् ॥ ९९ ॥
अश्लीलतादिदोषाढ्यपदपूरितविग्रहैः ।
पुराणैः किं फलं लोके परवञ्चनशालिभिः ॥१००॥
स्वतःप्रमाणराहित्याद्वेदानुगमनादपि ।
ब्राह्मणानां न वेदत्वं कथञ्चिदपि मन्मते ॥ १०१ ॥
इतिवादिनमज्ञानमण्डनं वादपण्डितम् ।
द्रुतमुत्तरयाञ्चक्रे तद्दर्पदलनः कविः ॥ १०२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुराण की कथा मेरे मत में सत्य नहीं है। न पुराण वेदमूलक हैं। मेरे मत में महर्षि व्यास उनके संपादक भी नहीं हैं ॥ ९८ ॥ परस्पर विरुद्ध पौराणिक गाथाओं का न वेदों में वर्णन है और न इनकी परिस्थिति का वेद में अस्तित्व है ॥ ९९ ॥ अश्लीलता आदि दोषों से भरे हुए इन पुराणों से संसार में कुछ लाभ नहीं है ॥ १०० ॥ स्वतः प्रमाण न होने के कारण तथा वेदों के अनुगामी न होने से मेरे मत में ब्राह्मण भाग भी वेद नहीं है ॥ १०१ ॥ इस प्रकार अपना अभिप्राय कहते हुए दयानन्द के प्रति धार्मिक विद्वान् ने जो उत्तर दिया वह इस प्रकार है ॥ १०२ ॥

[उत्तरपक्षः]

सर्वा अपि कथाः सत्याः पुनस्ता वेदमूलकाः ।
वेदव्यासः पुनस्तासां प्रवक्ता नात्र संशयः ॥१०३॥
अष्टादशपुराणानां कर्ता सत्यवतीसुतः ।
जनश्रुतिरियं लोके विद्यते भारतस्थिता ॥ १०४ ॥
पुराणशब्दे वेदेषु विद्यमानेऽपि तद्गतम् ।
कथ्यते भवता कस्माद्वाक्यजातमवैदिकम् ॥१०५॥
वेदसम्प्रोक्तगाथानां पुराणेष्वतिविस्तरात् ।
वेदमूलकता तेषां कथङ्कारं निवार्यते ॥ १०६ ॥

पुराणों की समस्त कथायें सत्य तया वेदमूलक हैं और उनके प्रवक्ता भी महर्षि व्यास के अतिरिक्त अन्य कोई नहीं है ॥ १०३ ॥ अठारहों पुराणों के कर्ता महर्षि व्यास हैं ऐसी जनश्रुति महाभारत के आधार पर लोक में प्रसिद्ध है ॥ १०४ ॥ वेद के कई मन्त्रों में पुराण शब्द के आने से आप उनको अवैदिक किस प्रकार मानते हैं [ पुराणं यजुषा सहेति श्रुतिः] ॥ १०५ ॥ वैदिक गाथाओं का ही विस्तृतरूप से पुराणों में व्याख्यान है इस कारण पुराणों की वेदमूलकता आप नहीं हटा सकते हैं। देखिए ॥ १०६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आद्ये शातपथे काण्डे यथा विधिसुता कथा ।
ऋग्वेदेऽपि तथैवास्ते पुराणे साऽतिविस्तृता ॥१०७॥
दक्षप्रजापतिकथा दितिपुत्रकथा तथा ।
द्वितीयेऽत्र यथा काण्डे श्रीमद्भागवते तथा ॥१०८॥
अहल्यागोतमकथा सुपर्णस्य तथा कथा ।
तृतीयेऽस्ति यथा काण्डे देवीभागवते तथा ॥१०९॥
सुकन्यायाः समाख्यानं च्यवनस्य तथा ऋषेः ।
चतुर्थे यद्वदुदितं तद्वदेवास्ति भारते ॥ ११० ॥

शतपथ ब्राह्मण के प्रथम काण्ड में जिस प्रकार ब्रह्मा की पुत्री की कथा है उसी प्रकार ऋग्वेद में भी है । पुराणों में उसी को विस्तृतरूप में कहा है ॥ १०७ ॥ शतपथ के द्वितीय कांड में जिस प्रकार दक्ष प्रजापति और दिति के पुत्रों की कथा विद्यमान है उसी प्रकार श्रीमद्भागवत में भी वर्णन की गई है ॥ १०८ ॥ जिस प्रकार अहल्या-गोतम की तथा सुपर्ण की कथा शतपथ के तृतीय कांड में है उसी प्रकार देवी भागवत में भी मिलती है ॥ १०९ ॥ च्यवन ऋषि और सुकन्या का चरित्र जिस प्रकार शतपथ के चतुर्थ काण्ड में है उसी प्रकार महाभारत में भी है ॥ ११० ॥

त्रयोदशे तस्य काण्डे जनमेजयभूपतेः ।
परीक्षितस्य राजर्षेर्दुष्यन्तस्य महात्मनः ॥१११॥
यथा यथा निगदिता शतानीकस्य सत्कथा ।
तथा तथा पुराणेषु लभ्यते बहुविस्तृता ॥११२॥
प्रकारेणामुना सर्वाः कथा अपि यथायथम् ।
विस्पष्टमुपलभ्यन्ते निगमेषु गवेषिताः ॥११३॥
यावानंशः पुराणानां प्रक्षिप्त इति कथ्यते ।
तावानंशोऽस्य वेदानां लुप्तप्राय इति स्थितिः ॥११४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शतपथ के त्रयोदश कांड में जिस प्रकार जनमेजय, परीक्षित, दुष्यंत, शतानीक आदि की कथा वर्णित है उसी प्रकार पुराणों में उनका वर्णन मिलता है ॥ १११ । ११२ ॥ इसी प्रकार और भी कथायें अन्वेषण करने पर वेदों में मिल सकती हैं। इसी कारण से पुराण वेदमूलक माने जाते हैं ॥ ११३ ॥ पुराणों का जितना अंश आजकल वेदों में नहीं मिलता है, उतना वेदों का ग्रन्थभाग यवनों के अत्याचार से लुप्त हो गया है ॥ ११४ ॥

न विद्यते काऽपि कथा पुराणेषु तथाविधा ।
न या वेदेषु कथिता मन्त्रब्राह्मणनामसु ॥११५॥
अश्लीलता समुदिता पुराणेषु यथा त्वया ।
वेदमन्त्रेष्वपि तथा हृदये किन्न चिन्त्यते ॥११६॥
शेपःप्रहरणं यत्र मन्त्रभागे विलोक्यते ।
तत्राश्लीलत्वदोषस्य परिहारः कथं मतः ॥११७॥
स्वतः प्रमाणता लोके यथा वेदस्य ते मते ।
ब्राह्मणानामपि तथा वेदमर्मविदां मते ॥११८॥

पुराणों में एक भी ऐसी कथा नहीं है जिसका आधार मंत्र-ब्राह्मण-रूप वेद में न हो ॥ ११५ ॥ आपने जो अश्लीलता दोष पुराणों में लगाया है वह वेद में भी अनेक मंत्रों में मिलता है ॥ ११६ ॥ [ यस्यामुशन्तः प्रहराम शेपम् ] इस प्रकार के मंत्रों में अश्लीलता का आप क्या परिहार करते हैं ? ॥११७॥ जिस प्रकार आपके मत में मंत्र भाग स्वतःप्रमाण है उसी प्रकार वेदज्ञों के मत में ब्राह्मण भाग भी स्वतःप्रमाण है ॥११८॥

मन्त्रा अपि यदा मन्त्राननुगच्छन्ति विश्रुताः ।
ब्राह्मणानामनुगमे पुनः का महती क्षतिः ॥११९॥
पूर्वकल्पानुगमनाद्यथापूर्वप्रकल्पनात् ।
न हातुं शक्यते लोके वेदानामितिहासता ॥१२०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गद्यपद्यविभागेन मन्त्रब्राह्मणतां गतः ।
शब्दराशिर्न वेदत्वं कदाचिद्धातुमुद्यतः ॥१२१॥
भागशब्दस्य साङ्गत्यादुभयत्र न शक्यते ।
वक्तुमेकस्य वेदत्वं यथापूर्वस्तथाऽपरः ॥ ११२ ॥

जब मन्त्र भी अन्य मन्त्रों का अनुगमन करते हैं तब ब्राह्मणों के परस्परानुगमन में आपको क्या आपत्ति है? ॥ ११९ ॥ पूर्वकल्प के अनुगमन से, और यथापूर्व जगत् के बन जाने से वेदों का ऐतिहासिकत्व नहीं जा सकता है ॥ १२० ॥ गद्य पद्य रूप से मन्त्रब्राह्मणात्मक शब्दराशि वेदत्व को कदापि नहीं छोड़ सकता है ॥ १२१ ॥ भाग शब्द की संगति मन्त्र और ब्राह्मण इन दोनों के साथ है फिर एक को वेद मानकर दूसरा वेद क्यों न माना जावे? ॥ १२२ ॥

यथा निःश्वाससम्भूतो मन्त्रभाग उदीर्यते ।
तथैवेश्वरनिःश्वासाद् ब्राह्मणानां समुद्भवः ॥१२३॥
वेदस्य नित्यता यैर्यैः प्रमाणैरुपपाद्यते ।
ब्राह्मणस्यापि तैरेव प्रमाणैः साध्यते बुधैः ॥१२४॥
ऐतरेयादयो ग्रन्था न केनापि भुवस्तले ।
पुराणत्वेन गीयन्ते नेतिहासाभिधानतः ॥१२५॥
पतञ्जलिर्महाभाष्ये वेदं मत्वैव दत्तवान् ।
प्रमाणं ब्राह्मणादीनां यदीच्छा तर्हि दृश्यताम् ॥१२६॥

ईश्वर के निःश्वास से जिस प्रकार मन्त्रभाग निकला है उसी प्रकार ब्राह्मण भाग भी ॥ १२३ ॥ जिन प्रमाणों से वेदों की नित्यता सिद्ध होती है उन्हीं प्रमाणों से ब्राह्मणों की भी ॥१२४॥ ऐतरेय शतपथ, गोपथ आदि ब्राह्मणों को संसार में कोई भी विद्वान पुराण अथवा इतिहास नहीं मानता है ॥ १२५ ॥ महाभाष्य मे पतंजलि ने ब्राह्मणों को वेद मान कर ही [ पयोव्रतो ब्राह्मणः ] इत्यादि उदाहरण दिये हैं ॥ १२६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋषिणा शौनकेनापि ब्राह्मणानां निसर्गतः ।
वेदत्वमभ्युपगतं चरणव्यूहदर्शनात् ॥ १२७ ॥
इदमुत्तरमादिश्य निवृत्ते धर्मकोविदे ।
गतनेत्रगुरुस्तत्र पुनराह मनोगतम् ॥ १२८ ॥

चरणव्यूह नामक ग्रन्थ में शौनक ऋषि ने भी ब्राह्मण ग्रन्थों को वेद मानकर ही उनका प्रतिपादन किया है ॥ १२७ ॥ इतना उत्तर देकर धर्म पण्डित के बैठने पर दयानन्द ने फिर इस प्रकार कहा ॥ १२८ ॥

[पूर्वपक्षः]

एकादशं कृधीत्यादिमन्त्रजातविमर्शनात् ।
वेदानुमत एवायं नियोगो वेनकल्पितः ॥ १२९ ॥
देशान्तरमिते पत्यौ वधूभिः कामपीडनात् ।
नियोगः परमर्त्येण सह कार्यो मते मम ॥१३०॥
वेदस्यैवानुगमनाद्विधवाकरपीडनम् ।
यदि स्वीक्रियते लोकैस्तदा धर्मस्य का क्षतिः ॥१३१॥
इति धर्मविनाशाय तस्मिन्वदति सत्वरम् ।
धर्मानुकूलकथनस्तमाह विशदं कविः ॥ १३२ ॥

वेद में [पतिमेकादशं कृधि] मन्त्र के आने से वे न प्रचारित नियोग वैदिक प्रतीत होता है ॥ १२९ ॥ पति के अन्य देश में जाने पर स्त्रियों को चाहिए कि वे अन्य पुरुष के साथ में नियोग कर लें जब कि उनसे रहा न जाय ॥ १३० ॥ वेद के नाम पर यदि कोई शूद्र विधवा को घर में गेर ले तो इसमें क्या क्षति है ? ॥ १३१ ॥ इस प्रकार अपना हार्दिक मंतव्य कहकर बैठे हुए दयानन्द के प्रति धार्मिक पण्डित ने कहा ॥ १३२ ॥

[उत्तरपक्षः]

कर्तुमर्हति वेदस्य निदेशेन भुवस्तले ।
नारीकदम्बकं मर्त्यो न नारी मनुजव्रजम् ॥१३३॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सपत्नीबाधनं वेदे लभ्यते न पुनः क्वचित् ।
मनुष्यबाधनं तस्माद्वैदिकमिदं कृतम् ॥१३४॥
न शक्ता गर्भदशकं दशभिः सह सङ्गता ।
भुवि धारयितुं नारी पुरुषैरिति दृश्यते ॥ १३५ ॥
एकः पुमानेकदिने दशस्त्रीषु प्रसङ्गतः ।
कर्तुं गर्भवतीः सर्वाः शक्त इत्यपि दृश्यते ॥१३६॥

वेद की आज्ञा से मनुष्य अनेक विवाह कर सकता है परन्तु स्त्री नहीं कर सकती है। [जनीरिव पतिरेकः समानः; परिष्वजन्ते जनयो यथा पतिम् ; कल्याणीभिर्युवतिभिर्न मर्यः ] ॥ १३३ ॥ अथर्ववेद में सपत्नी बाधन तो मिलता है परन्तु समान मनुष्य बाधन नहीं मिलता इसलिए यह बात अवैदिक है [इमां खनाम्योषधिमिति वेदमन्त्रः] ॥१३४॥ एक स्त्री दश पुरुषों के साथ गमन करके एक साथ दश गर्भ धारण नहीं कर सकती ॥ १३५ ॥ परन्तु एक मनुष्य एक दिन में दश स्त्रियों के पास जाकर दसों को गर्भवती कर सकता है ॥ १३६ ॥

पूरणप्रत्ययान्तस्य यस्त्वया समुदीरितः ।
नायमर्थः कथमपि शब्दस्य विधिसम्मतः ॥१३७॥
वेनस्य भूपतेः काले पशुधर्मोयमीदृशः ।
पामरैर्भूमिवलये नियोगाख्यः प्रकल्पितः ॥१३८॥
नियोगसन्ततिर्लोके प्रथिता वर्णसङ्करी ।
शूद्राद्यवरवर्णेषु स्वभावात्तत्परिस्थितिः ॥ १३९ ॥
दाक्षायणी जनकजाऽनुसूयादिभिरादृतम् ।
यद् व्रतं तद् व्रतं लोके सतीनां धर्मवर्द्धनम् ॥१४०॥

[एकादशं] इस पूरण प्रत्यान्त शब्द का जो अपने अर्थ किया है वह व्याकरण से अशुद्ध है ॥ १३७ ॥ राजा वेन के समय जिस नियोग का प्रचार हुआ था उसको पशु धर्म कहकर मनु महाराज ने खंडन कर

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिया है ॥ १३८ ॥ नियोग से जो सन्तान होती है वह धार्मिक नहीं होती है इसीलिये नीच जाति में इसका प्रचार है ॥ १३९ ॥ श्रीमती गौरी, जानकी, अनसूया आदि ने जिस पातिव्रत्य धर्म का पालन किया है उसी का पालन करना स्त्रियों का परमधर्म है ॥ १४० ॥

नादिश्यते विधिवशाद्वेदेन विधिवादिना ।
विधिर्येन तदुक्तं स्याद्विधवाकरपीडनम् ॥ १४१ ॥
नोदनालक्षणो धर्मः सा च वेदमुपाश्रिता ।
वेदेन तादृशी कापि न प्रदिष्टाऽस्ति नोदना ॥१४२॥
एकएव पतिः स्त्रीणां न द्वितीयो जगत्त्रये ।
धर्माचार्यैरनुमतो वेदमात्रविचक्षणैः ॥ १४३ ॥
एकमुत्सृज्य भर्तारं मृते वा तत्र या पुनः ।
कामभोगाय यतते कुलटा सा निगद्यते ॥१४४॥

वेद में कहीं पर भी विधि मुख से विधवा विवाह का प्रतिपादन नहीं है ॥ ४१ ॥ धर्म प्रेरणात्मक है, प्रेरणा वेदाश्रित है, वेद में इस प्रकार की कोई प्रेरणा नहीं है ॥ १४२ ॥ वेद के विद्वानों ने एक स्त्री के लिये एक ही पुरुष का विधान किया है ॥ १४३ ॥ जो स्त्री अपने पति को छोड़ कर अथवा उसके मरने पर दूसरा करती है वह लोक में कुलटा कहाती है ॥ १४४ ॥

देवरेण समं यत्र विवाहः परिकीर्त्यते ।
न तत्र देवरः कश्चिदन्यः प्राणेश्वरानुजात् ॥१४५॥
वाग्दानानन्तरं यस्याः पतिर्लोकान्तरं व्रजेत् ।
तस्याः परिणयो लोके देवरेण विधीयते ॥१४६॥
वाग्दानमात्रसम्बन्धे पतित्वं यत्र लभ्यते ।
महत्त्वं तस्य धर्मस्य वक्तुमर्हति कः पुमान् ॥१४७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पौनर्भवी तु या कन्या वर्णसङ्करयोनिजा ।
पौनर्भवेन सैवात्र सङ्करेण नियुज्यते ॥१४८॥

जहाँ कहीं पर देवर के साथ विवाह करना बताया है वहाँ पर पति के छोटे भाई को ही देवर कहा है [ यस्या म्रियेत कन्याया ] इति मनुः ॥ १४५ ॥ वाग्दान सगाई के अनन्तर जिसका पति मर जावे । उसका उसके छोटे भाई के साथ विवाह करना मन्वनुमत है ॥ १४६ ॥ जहाँ पर केवल वाग्दान मात्र से पति-पति माना जावे उस धर्म का सूक्ष्म मर्म तथा महत्त्व विद्वान् ही समझ सकते हैं ॥ १४७ ॥ जो कन्या "पौनर्भवी" होती है उसी का सम्बन्ध पौनर्भव लड़के से लोक में होता है। हरामी औलाद को पौनर्भव या पौनर्भवी कहते हैं [ या पत्या वा परित्यक्ता इति मनुः ] ॥ १४८ ॥

द्विजातिसम्भवा कन्या मृते भर्तरि भूतले ।
न दातुं शक्यते भूयो धर्म एषः सनातनः ॥१४९॥
एवं न यावदुदितं कवेः पूर्तिमुपागमत् ।
तावदुद्भ्रान्तहृदयः स मन्दः पुनरब्रवीत् ॥१५०॥

द्विजातियों में पति के मरने के बाद कन्या का दूसरा विवाह करना अशास्त्रीय है ॥ १४९ ॥ इस प्रकार धार्मिक विद्वान् का कथन जबतक समाप्त न होने पाया तबतक दयानन्द ने फिर कहा ॥ १५० ॥

[ पूर्वपक्षः ]

सन्ध्यादिनित्यकार्येषु कफस्य विनिवृत्तये ।
जलमाचम्यतेऽस्माभिर्वृथैवाचमनेन किम् ॥१५१॥
अनुगच्छन्तु मनुजान्निगमा मनुजैः कथम् ।
तेषामनुगतिः शक्या कर्तुमत्र कलौ युगे ॥१५२॥
स्वप्रयोजनसंसिध्यै मन्त्रार्थानां विपर्ययः ।
वेदमन्त्रेषु कर्तव्यो देवतादिषु कुत्रचित् ॥१५३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं वदन्तमुद्भ्रान्तहृदयं तं गतत्रपम् ।
समुवाच सभामध्ये सादरं धर्मपण्डितः ॥१५४॥

सन्ध्या में कफ़ दूर करने के लिए हमारे मत में आचमन करना चाहिए और उसका कुछ प्रयोजन नहीं है ॥ १५१ ॥ यदि वेद मनुष्यों के पीछे चलें तो अच्छा है। आजकल मनुष्य वेदों के पीछे नहीं जा सकते हैं ॥१५२॥ अपने प्रयोजन की सिद्धि के लिए मन्त्रों का अर्थ बदलना अनुचित नहीं है । इसीलिए कहीं कहीं पर देवता भी बदले जा सकते हैं ॥ ५१३ ॥ इस प्रकार कहते हुए दयानन्द के प्रति धार्मिक विद्वान् ने यह उत्तर दिया ॥ १५४ ॥

[ उत्तरपक्षः ]

हेतुराचमने मन्द ! यस्त्वया समुदाहृतः ।
स तवैव मते मान्यो न विज्ञैरस्मदादिभिः ॥१५५॥
वेदादिष्टानि सर्वाणि कर्माणि जगतीतले ।
अदृष्टफलमूलानि कथितानि मुनीश्वरैः ॥१५६॥
तर्कमाश्रित्य नैतेषु कार्यमत्र विधीयते ।
आज्ञां भगवतो मत्वा क्रियते तद्यथाबलम् ॥१५७॥
सूर्यश्चमेति मन्त्रस्य विनियोगो न लभ्यते ।
कफरोगनिरासाय किन्त्वाचमनकर्मणि ॥१५८॥

आपने जो आचमन कफ़ निवृत्ति के लिए माना है वह उचित नहीं है। वैदिक कर्मकाण्डी इस कारण आचमन नहीं करते हैं ॥ १५५ ॥ वेद में जितने कर्म लिखे हैं उन का अनुष्ठान अदृष्ट फल के लिए किया जाता है ॥ १५६ ॥ वैदिक कार्य ईश्वर की आज्ञा मान कर किये जाते हैं । तर्क के आधार पर नहीं ॥ १५७ ॥ [ सूर्यश्च मा मन्युश्च] इस मंत्र का विनियोग आचमन में है कफ़ रोग की निवृत्ति में नहीं है ॥ १५८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कफस्यैव निरासः स्याद्यदि तस्य प्रयोजनम् ।
शृङ्गवेररसास्वादस्तदा किन्न विधीयते ॥१५६॥
लवङ्गादिवटीकल्पे विद्यमानेऽपि भूतले ।
किमर्थं भवता मन्त्रः पुस्तकेषु निवेशितः ॥१६०॥
विज्ञानमीश्वरगतं मानवान्यद्यनुव्रजेत् ।
ईश्वरोऽपि तदा कस्मान्नानुगच्छेज्जनव्रजम् ॥१६१॥
पिपासूननुगच्छन्तु यदि पूर्वं जलाशयाः ।
वेदा अपि तदा पश्चादनुयास्यन्ति मानवान् ॥१६२॥

यदि इस मन्त्र का प्रयोजन केवल कफ़ दूरीकरण ही होता तो अदरक का रस मधु में मिला कर पीने में उसका विनियोग होना चाहिए था ॥ १५६ ॥ आप को अपनी संध्या में मन्त्र न लिख कर लवंगादि वटी का नुसखा लिखना चाहिए ॥१६०॥ यदि ईश्वर का ज्ञानस्वरूप वेद मनुष्यों के पीछे चले तो ईश्वर ही स्वयं उनके पीछे क्यों न चले ? ॥१६१॥ पिपासाकुल मनुष्यों के पीछे जब कूप चलने लगेंगे तब वेद भी मनुष्यों के पीछे चलेंगे ॥ १६२ ॥

ईश्वरन्यस्तदिव्यार्थवादिनामघनाशिनाम् ।
मन्त्राणामर्थविषये विपर्यासो न सम्मतः ॥१६३॥
ईश्वरादधिकप्रज्ञो यदि कश्चिज्जनो भवेत् ।
विपर्यासं स मन्त्रेषु कुर्यादर्थस्य भूतले ॥१६४॥
स्वप्रयोजनसंसिध्यै पदार्थस्य विपर्ययः ।
सम्भवेद्यदि मन्त्रेषु तदा मन्त्रत्वमेव किम् ॥१६५॥
यमर्थं प्रकटीकर्तुं भुवि मन्त्राः प्रकल्पिताः ।
महेश्वरेण तद्भिन्नं न ते वक्तुमपि क्षमाः ॥१६६॥

ईश्वरादिष्ट अर्थ के बतानेवाले पापविनाशक मन्त्रों का अर्थ-विपर्यय करना सर्वथा अनुचित है ॥ १६३ ॥ यदि ईश्वर से अधिक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुद्धिमान् कोई मनुष्य हो तब ऐसा हो सकता है ॥ १६४ ॥ अपने अपने प्रयोजन की सिद्धि के लिए यदि मनुष्य मन्त्रों का अर्थ बदलने लगें तब फिर मन्त्रों में मन्त्रत्व ही क्या रहा ? ॥ १६५ ॥ जिस अर्थ के प्रकट करने के लिए ईश्वर ने मन्त्र कहे हैं उस अर्थ से विरुद्ध अर्थ वे कदापि नहीं दे सकते हैं ॥ १६६ ॥

यमर्थमधिकृत्यैषां प्रवृत्तिरुपलभ्यते ।
स एवार्थः समुचितो देवतात्वेन गृह्यते ॥१६७॥
ईश्वरादिष्टविषयं देवतापरनामकम् ।
विपर्ययं प्रापयितुं शक्तः को मनुजव्रजे ॥१६८॥
वचस्ततिमिमां यावदुपसंहर्तुमुद्यतः ।
प्रबभूव कविस्तावदयमेवमभाषत ॥१६९॥

जिस अर्थ को अधिकृत करके मन्त्रों की प्रवृत्ति होती है वे अर्थ ही मन्त्रों के 'देवता' माने जाते हैं [ या तेनोच्यते सा देवता इति निरुक्तम् ] ॥ १६७ ॥ ईश्वरादिष्ट विषय का ही नामान्तर "देवता" है उसको बदलने के लिए कोई मनुष्य समर्थ नहीं हो सकता है ॥ १६८ ॥ इस बात को कहते कहते जब तक धार्मिक विद्वान् बैठने को उद्यत हुए तब तक दयानन्द ने फिर कहा ॥१६९॥

[ पूर्वपक्षः ]

गुणकर्मानुरूपैव ब्राह्मणादिपरिस्थितिः ।
न जन्मसिद्धा विफलस्तस्माद्भेदो जनव्रजे ॥१७०॥
मुखात्प्रसूतिर्विप्राणामिति वादो निरर्थकः ।
सृष्टिक्रमाविरोधेन सृष्टेः सम्भवने स्थिरे ॥१७१॥
मुखजत्वं यदा तेषु विद्यते भवतां मते ।
मुखसाम्यं कथं तेषु दृश्यते नैव भूतले ॥१७२॥
यादृशं कारणं लोके भवति प्रतिसर्गजम् ।
तादृशं कार्यमुदयं समुपैति स्वभावतः ॥१७३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनुष्यों में ब्राह्मणादि जाति भेद गुण कर्म से हैं जन्मसिद्ध नहीं, इसलिए उनमें भेद नहीं मानना चाहिए ॥१७०॥ ब्राह्मण ईश्वर के मुख से पैदा हुए यह कथन प्रलापमात्र है क्योंकि संसार में सृष्टिक्रम के विरुद्ध कोई काम नहीं होता है ॥ १७१ ॥ यदि आप उनको मुख से उत्पन्न मानते हैं तो उनका आकार मुख जैसा ही होना चाहिए । १७२ ।१७३॥

अधर्माचरणाद्याति वर्णः पूर्वो जघन्यताम् ।
धर्मानुगमनादन्यो वर्णोऽप्यायाति पूर्वताम् ॥१७४॥
क्षेत्रियः क्षत्रियकुले जन्म लब्ध्वाऽपि कर्मणा ।
प्राप्तवान्ब्राह्मणपदं विश्वामित्रो मुनिः पुरा ॥१७५॥
ब्राह्मण्यां शूद्रवीर्येण यः प्रसूतिमुपागमत् ।
स मतङ्गोऽपि चाण्डालो ब्राह्मणोऽभूदिति श्रुतम् ॥१७६॥
जावाल इति विख्यातस्त्रिषु लोकेषु यो मुनिः ।
गणिकायाः स तनयो न श्रुतो भवताऽपि किम् ॥१७७॥

अधर्म के आचरण से ब्राह्मण चांडाल हो सकता है और धर्म के आचरण से चाण्डाल ब्राह्मण हो सकता है । १७४ ॥ क्षत्रिय विश्वामित्र क्षत्रिय के यहाँ जन्म लेने पर भी ब्राह्मण बन गया ॥ १७५ ॥ शूद्र के वीर्य से ब्राह्मणी में उत्पन्न चांडाल मतंग ब्राह्मण बन गया, ऐसा महाभारत में लिखा है ॥ १७६ ॥ जाबालि नामक महर्षि गणिका के पुत्र होने पर भी ब्राह्मण बन गये । इन उदाहरणों से वर्णव्यवस्था गुण कर्म के आधार पर मानी जा सकती है जन्म पर नहीं । १७७ ॥

एभिर्निदर्शनैः सिद्धो गुणकर्मस्वभावजः ।
वर्णव्यवस्थाविषयो भूतले नैव जन्मजः ॥१७८॥
नीचोऽयमुत्तमो लोके जन्म नेतिविचारणा ।
मनुष्यजातेरेकत्वे निष्फलैव प्रतीयते ॥१८६॥
समानयोनिसम्भूता यदि सर्वे भुवस्तले ।
कथमस्पृश्यता तेषु भवता विनियोज्यते ॥१८०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनुष्य जाति के एक होने पर अमुक उत्तम है अमुक नीच है यह मानना भी ठीक नहीं है ॥ १७८ ॥ एक सी योनि से जब सब उत्पन्न होते हैं तब उनमें स्पर्शास्पर्श का विचार करना भी व्यर्थ है ॥ १८० ॥

स्पर्शास्पर्शविचारोऽपि भूतले बहुविस्तृतः ।
स्वात्माभिमानरक्षार्थं सगर्वैर्मनुजैः कृतः ॥१८१॥
निवार्यतामयं वेगादित्यालपति कद्वदे ।
तदुत्तरप्रदानाय कविरेवमभाषत ॥१८२॥

यह जो स्पर्शा स्पर्श का विचार है इसका प्रचार मनुष्यों ने अपने अपने अभिमान की रक्षा के लिए किया है ॥ १८१ ॥ इसको भारत से शीघ्र हटाना चाहिए, इस प्रकार कहते हुए दयानन्द के प्रति धार्मिक विद्वान् ने कहा ॥ १८२ ॥

[ उत्तरपक्षः ]

शृणुष्वावहितो वत्स ! न गुणेन न कर्मणा ।
जन्मनैव मता सर्वैर्व्यवस्था वर्णसम्भवा ॥१८३॥
न स्थातुमर्हति गुणः कदापि द्रव्यमन्तरा ।
कर्मापि कर्तृनिष्ठत्वाज्जडत्वाच्च तथाविधम् ॥१८४॥
रजोवीर्यगुणोत्कर्षाद्यः स्वभावः प्रजायते ।
शरीरमन्तरा सोऽपि न भूमाववतिष्ठते ॥१८५॥
स्वस्यात्मनो यदस्तित्वं स स्वभाव उदीरितः ।
अविनाशी निगदितः स दर्शनविचक्षणैः ॥१८६॥

हे वत्स ! वेदों में वर्णव्यवस्था गुण-कर्म के आधार पर नहीं किन्तु जन्म के आधार पर है ॥ १८३ ॥ गुण कदापि द्रव्य के बिना नहीं रहता है और कर्म भी कर्तृनिष्ठ होने के कारण स्वयं जड़ है ॥ १८४ ॥ रजवीर्य के आधार पर जो स्वभाव बनता है, वह भी बिना शरीर के नहीं रह सकता है ॥ १८५ ॥ अपने आत्मा का जो अस्तित्व है वही



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वभाव है, दर्शनकार उसको अविनाशी मानते हैं [ आत्माऽत्रशरीरम्। शरीरास्तित्वं स्वभावः ] ॥ ८६ ॥

अत्युष्णामपि तच्छैत्यं न जहाति यथा जलम्।
तथैव वस्तुनिभृतः स्वभावोऽपि न नश्यति ॥१८७॥
साधनानां समुदयात्स्वभावोऽत्र विजृम्भते।
साधनव्रातविगमे स तिरोभवति स्वयम् ॥१८८॥
जातिरेकाऽपि नानात्वमुपजातिसमागमात्।
समेति वृक्षनानात्वमेकमत्र निदर्शनम् ॥१८९॥
वृक्षमात्रेऽपि वृक्षत्वं यथा सर्वत्र निश्चलम्।
मनुष्यमात्रेऽपि तथा मनुष्यत्वमवस्थितम् ॥१९०॥

अत्यन्त उष्ण भी जल जिस प्रकार अपना गुण नहीं छोड़ता है उसी प्रकार द्रव्यों में छिपा हुआ स्वभाव भी नष्ट नहीं होता है ॥१८७॥ साधनों के उपचय से स्वभाव बढ़ता है और साधनों के अपचय से छिप जाता है ॥ १८८ ॥ एक जाति भी उपजाति भेद से अनेक हो जाती है इसमें वृक्ष जाति प्रत्यक्ष निदर्शन है ॥ १८९ ॥ वृक्षमात्र में जिस प्रकार वृक्षत्व नित्य है उसी प्रकार मनुष्यमात्र में मनुष्यत्व भी नित्य है ॥१९०॥

उपजातिसमुद्भूतो वर्णभेदः पदे पदे।
निराकरोति नो लोके मनुष्यत्वमवस्थितम् ॥१९१॥
रसाले खदिरेऽश्वत्थे यथा वृक्षत्वमूह्यते।
ब्राह्मणे क्षत्रिये वैश्ये मनुष्यत्वं तथोह्यताम् ॥१९२॥
नामरूपानुगो भेदो जातिमालम्ब्य भूतले।
प्रतिष्ठां लभते वत्स ! विचारय हृदन्तरे ॥१९३॥
मुखजा इति यान्वेदः स्वयमेव वदत्यलम्।
मुखजत्वे पुनस्तेषां कः सशङ्को भविष्यति ॥१९४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपजाति समुद्भूत जातिभेद मनुष्यत्व का निराकरण कदापि नहीं कर सकता है ॥१६१॥ आम्र, खदिर, पिप्पल आदि वृक्षों में जिस प्रकार वृक्षत्व रहता है उसी प्रकार ब्राह्मण, क्षत्रिय, वैश्यों में मनुष्यत्व भी समझना चाहिए ॥१६२॥ नामरूपात्मक जो भेद है वह जाति के आश्रय से जगत् में रहता है इसका अपने हृदय में विचार कीजिए ॥ १६३ ॥ जिनको वेद ही स्वयं मुख से उत्पन्न मानता है उनके मुखजत्व में किस को सन्देह होगा ? [ ब्राह्मणोऽस्य मुखमासीत्, इति मन्त्रः ] ॥ १६४ ॥

येन सृजति विश्वात्मा प्रकारेण जगत्त्रयम् ।
नियमत्वं सएवैति प्रकारो लोकमाश्रितः ॥१६५॥
पारवश्यं न जगतामीशस्य नियमक्रमे ।
विलोक्यते यतस्तत्र सर्वशक्तिसमाश्रयः ॥१६६॥
अकर्तुमन्यथाकर्तुं यः क्षमः कर्तुमीश्वरः ।
नियमस्य कदा तेन पारवश्यमपेक्षितम् ॥१६७॥
दिग्विभागो यथा सूर्यमवलम्ब्य वितिष्ठते ।
नियमोऽपि तथा लोके नियन्तारमुपाश्रितः ॥१६८॥

भगवान् जिस प्रकार से लोक सर्जन करते हैं वही प्रकार संसार में नियम बन जाता है ॥ १६५ ॥ ईश्वर नियम के परवश नहीं है क्योंकि उसमें अनेक प्रकार की शक्तियां विद्यमान हैं ॥ १६६ ॥ जो ईश्वर कर्तुमकर्तुमन्यथाकर्तुं समर्थ है वह नियम का परवश नहीं हो सकता है ॥ १६७ ॥ जिस प्रकार दिग्विभाग सूर्य के अधार पर है उसी प्रकार सब नियम ईश्वर की इच्छा पर निर्भर हैं ॥ १६८ ॥

मुखजत्वेऽपि विप्राणां मुखसाम्यं न शक्यते ।
वक्तुमत्र जगद्व्याप्तः प्रमाणं योनिसम्भवः ॥१६९॥
न कारणगुणाः सर्वे कार्यमाश्रित्य शेरते ।
किन्तु केऽपि न ते बाह्यमाविष्कुर्वन्ति तद्गुणम् ॥२००॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अणुभिः कारणैर्लोके महत्कार्यं प्रजायते ।
महद्भिः कारणैः कार्यमणुरूपं प्रजायते ॥२०१॥
आपस्तम्बेन मुनिना जन्मतो जातिवादिना ।
जन्मान्तरे विपर्यासो मतः शास्त्रनियन्त्रणात् ॥२०२॥

ब्राह्मण मुखज है परन्तु मुख सदृश नहीं । योनि से उत्पन्न होना इसमें प्रत्यक्ष निदर्शन है ॥ १९९ ॥ कारण के सभी गुण कार्य में नहीं आते हैं, कोई कोई आते हैं वे भी अन्तरङ्ग रहते हैं ॥ २०० ॥ संसार में छोटे कारणों से बड़े बड़े कार्य बनते हैं और बड़े कारणों से छोटे कार्य बनते हैं ॥ २०१ ॥ जन्म से जाति माननेवाले आपस्तम्ब ने जन्मान्तर में जातिपरिवर्तन माना है, एक जन्म में नहीं ॥ २०२ ॥

सप्तमे जन्मनि मतो मनुनाऽपि महात्मना ।
पञ्चमे गोतममुनिस्तममंस्त विपर्ययम् ॥२०३॥
एकस्मिन्नेव जनने वर्णव्यत्यासकल्पना ।
बालिशानां मते वत्स ! समुदेति भवादृशाम् ॥२०४॥
प्राचीनकर्मणां लोके फलरूपमिदं वपुः ।
जगदीशेन यद्दत्तं कथन्तत्र विपर्ययः ॥ २०५ ॥
जातिरायुश्च भोगश्च जगदीशनियन्त्रितः ।
सति मूले वरीवर्ति नामूलस्तस्य सम्भवः ॥२०६॥

मनु ने सप्तम जन्म में और गोतम ने पाँचवें जन्म में जातिपरिवर्तन माना है उनकी स्मृतियाँ देखिए ॥ २०३ ॥ एक जन्म में वर्ण का परिवर्तन मानना आप जैसे अल्पज्ञों का ही काम है विद्वानों का नहीं ॥ २०४ ॥ प्राचीन कर्मों के फल में ईश्वर ने यह शरीर दिया है इसका बदलना अपने हाथ में नहीं है ॥ २०५ ॥ जाति, आयु और भोग यह तीनों प्राचीन कर्मों के फल में हमको उपलब्ध होते हैं [ सति मूले तद्विपाको जात्यायुर्भोग इति योगसूत्रम् ] ॥ २०६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईश्वरादिष्टरूपस्य नानाकर्मफलात्मनः ।
कथङ्कारं शरीरस्य विपर्यासः प्रकल्प्यते ॥२०७॥
चरोर्विपर्यये जाते विश्वामित्रसमुद्भवः ।
स्वयमाविष्करोत्यङ्ग ! जन्मतो जातिसम्भवम् ॥२०८॥
मतङ्गनामा श्वपचस्तपस्तप्त्वाऽपि भूतले ।
न प्राप्तवान्विप्रभावं महाभारतमीक्ष्यताम् ॥२०९॥
जाबालो ब्रह्मवीर्येण समुत्पन्न इति स्वयम् ।
विनिर्दिशत्युपनिषन्मन्त्र एव विलोक्यताम् ॥२१०॥

अनेक कर्मों के फल में ईश्वर ने जो हमको शरीर दिया है उसका बदलना हमारे हाथ में नहीं है ॥ २०७ ॥ चरु के विपर्यय से विश्वामित्र का पैदा होना जन्म से जाति को सिद्ध करता है। देखिए [ महाभारत अनुशासन पर्व अध्याय ३ ] ॥ २०८ ॥ मतंग ने अनेक वर्षों के तप करने पर भी ब्राह्मणत्व प्राप्त नहीं किया। देखिए [ महाभारत अनुशासनपर्व अध्याय २७ से २९ तक] ॥ २०९ ॥ जाबाल ब्राह्मण वीर्य से उत्पन्न है इस बात को उपनिषद् स्वयं स्वीकार करती है [ नैतदब्राह्मणो विवक्तुमर्हतीति मूलपाठः ] ॥ २१० ॥

छान्दोग्यमन्त्रनिचयैर्योनिभेदेन कल्पिता ।
कपूयता नीचजातौ द्विजेषु रमणीयता ॥२११॥
गीतयाऽपि समादिष्टं भगवन्मुखगीतया ।
पापयोनित्वमत्यन्तं शूद्रजातिसमुद्भवे ॥२१२॥
अतएव न तस्यास्ति वेदाध्ययनकर्मणि ।
क्रमागतः कोऽपि मन्येऽधिकारः परिदृश्यते ॥२१३॥
पठन्तु वेदममलं द्विजा एव न शूद्रजाः ।
इत्यादिशति किं नैवाथर्ववेदः प्रतिष्ठितः ॥२१४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

छांदोग्य में योनिभेद से शूद्र को कपूय और ब्राह्मण को उत्तम कहा है [ रमणीयाचरणा रमणीयां योनिमापद्येरन् ; इति मूलपाठः ] ॥ २११ ॥ भगवन्मुख विनिर्गत भगवद्गीता में भी शूद्र को पाप-योनि में माना है । देखिए [ मां हि पार्थ व्यपाश्रित्य; इति गीता पद्यम् ] ॥२१२॥ इसी कारण शूद्र को वेद पढ़ने का अधिकार धर्मशास्त्रों ने नहीं दिया है ॥ २१३ ॥ [ पावमानी द्विजानाम् १६ । ७१ । १ ] यह अथर्ववेद का मन्त्र भी वेदों का अध्ययन द्विजों के लिए ही नियत करता है शूद्रों के लिए नहीं ॥ २१४ ॥

धर्मशास्त्रे समादिष्टाः स्पर्शार्हा ये जनव्रजे ।
स्पृश्यास्त एव तद्भिन्ना न कदापि जनाधमाः ॥२१५॥
चाण्डालचर्मकाराद्या वर्णसङ्करजातयः ।
अस्पृश्या एव कथिता धर्मशास्त्रप्रवर्तकैः ॥२१६॥
उत्तमाः के जघन्याः के तथा के वर्णसङ्कराः ।
विषयेऽस्मिन्नुपगते यजुर्वेदो निरीक्ष्यताम् ॥२१७॥
त्रिंशत्तमे तदध्याये यथा ये सम्प्रदर्शिताः ।
तथैव ते जगन्मध्ये परिस्थितिमुपागताः ॥२१८॥

धर्मशास्त्र में जिनको स्पृश्य माना है वे ही स्पृश्य हैं बाकी सब अस्पृश्य हैं ॥ २१५ ॥ भङ्गी, चमार, यवन आदि संकीर्ण वर्णों को सभी धर्मशास्त्रकार अस्पृश्य मानते हैं ॥ २१६ । २१७ ॥ मनुष्यों में उत्तम कौन है, नीच कौन है, वर्णसंकर कौन है, यह देखना हो तो यजुर्वेद का ३० अध्याय देखिए ॥ २१८ ॥

येषु कर्मसु सर्गादौ विधिना ये नियोजिताः ।
तेषु कर्मसु ते सर्वे प्रवर्तन्ते पुनः पुनः ॥२१९॥
मन्वादिधर्मशास्त्राणि वेदार्थोपनिबन्धनात् ।
प्रमाणमस्मिन्विषये मुनीनां वचनान्यपि ॥२२०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

के केन हेतुना स्पृश्याः के कदा नेति संशये ।
प्रष्टव्याः प्रसभं लोके धर्ममार्गप्रवर्तकाः ॥२२१॥
स्वात्माभिमानरक्षार्थं यद्ययं परिरक्षितः ।
रक्षणीयः प्रयत्नेन तदा सर्वैरपि द्विजैः ॥ २२२ ॥

यजुर्वेद के तीसवें अध्याय में जिनको जैसा कहा है उनको वैसा ही मानना चाहिए ॥ २१६ ॥ सृष्टि के आरम्भ में ईश्वर ने जो जातियां पूर्व कल्प के अनुसार जिन कर्मों में लगाई हैं वे जातियाँ जगत् में बार बार जन्म लेकर भी स्वभाव से उन प्राचीन कर्मों का ही अनुगमन करती हैं। यह नियम अनादि काल से चला आ रहा है ॥ २२० ॥ वेदों के अनुगामी होने के कारण मन्वादि धर्मशास्त्र तथा अन्य ऋषियों के वचन भी इस विषय में प्रमाण हैं ॥ २२१ ॥ किस किस कारण से किस किस को कब कब छूना चाहिए या नहीं इस विषय में धर्मशास्त्रों के प्रवर्तक मन्वादि धर्माचार्यों को पूछना चाहिए ॥ २२२ ॥

स्वात्माभिमानमेवैकं धनमत्र महात्मनाम् ।
गतं तदपि यद्याशु मरणं शरणं तदा ॥२२३॥
यदारभ्य गतं लोकान्महत्त्वं महतां महत् ।
ततः प्रभृति सौभाग्यं गतं भारतवासिनाम् ॥२२४॥
इदमुत्तरमाकर्ण्य विद्वद्वरमुखोद्गतम् ।
दयानन्दोऽतिमन्दात्मा पराजयमुपागमत् ॥२२५॥
निजांशसम्प्रसूतानां चतुर्णामपि भूतले ।
सञ्जाते दर्पदलने चकम्पे हृदयं कलेः ॥२२६॥

अपने अभिमान की रक्षा के लिए यदि यह स्पृश्यास्पृश्य व्यवस्था चलायी है तब तो इसकी रक्षा सब को करनी चाहिए ॥ २२३ ॥ क्योंकि स्वात्माभिमान ही महान् पुरुषों का धन है यदि वह नष्ट होगया तो फिर क्या रहा ? ॥ २२४ ॥ जब से भारत से स्वात्माभिमान चला गया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उसी समय से भारत का सौभाग्य नष्ट होगया ॥ २२५ ॥ इस प्रकार विद्वद्वर के कहे हुए उत्तर को सुनकर दयानन्द पराजित हो गया और अपने चारों अंशावतारों का दर्पदलन देखकर कलि का हृदय कम्पित हो गया ॥२२६॥

विजित्य पश्चिमामाशां तरसा करुणावशात् ।
वरुणस्यैव विजयस्तम्भमस्यां न्यवेशयत् ॥२२७॥
दानमानादिभिः सर्वान्परितोष्य निजाश्रितान् ।
गृहं प्रत्याययौ धर्मो निजं ब्रह्मर्षिसेवितम् ॥२२८॥
जयश्रिया समायुक्तं प्रसन्नवदनाम्बुजम् ।
जन्मभूरपि संवीक्ष्य धर्ममेनमवर्धत ॥ २२९ ॥

पश्चिम देश के जीते जाने पर धर्मदेव ने वरुण नामाङ्कित विजय-स्तम्भ यहाँ पर गाड़ दिया । २२७ ॥ अपने आश्रितजनों का यथोचित सम्मान करके धर्मदेव वहाँ से अपनी जन्मभूमि में आगए ॥ २२८ ॥ विजयलक्ष्मी से अलङ्कृत धर्मदेव को देखकर धर्म की माता भारतभूमि अत्यन्त प्रफुल्लित हुई ॥ २२९ ॥

सूर्यज्योतिसमप्रभं द्विजकुले विस्तार्य वेदद्रुमं
चन्द्रज्योतिसमप्रभं दिशि दिशि प्रख्याप्य नैजं यशः ।
सत्काव्यानि रसादशङ्कमनसा यः कर्तुमेवाभवत्
काव्ये तद्रचिते समाप्तिमगमत्सर्गोऽयमत्यद्भुतः ॥२३०॥

सूर्य्य ज्योति के समान द्विज कुल में वेद का प्रचार करके चन्द्र ज्योति के समान अपना यश सर्वत्र विस्तृत कर सत्काव्य संपादन के लिए ही जिनका भूमण्डल में जन्म हुआ उनके इस महाकाव्य में यह सर्ग समाप्त हुआ ॥ २३० ॥

इतिश्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये
दयानन्ददर्पदलनं नाम पञ्चदशः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षोडशः सर्गः

देवलब्धबहुसैन्यवृन्दयोः
पापपुण्यरतयोरनारतम् ।
दैवयोगवशतो दिनोदये
वीक्ष्यतां तुमुलयुद्धवर्णनम् ॥ १ ॥

देवताओं की कृपा से प्राप्त सैन्य तथा पुण्य पाप परायण धर्म और अधर्म का अब तुमुल युद्ध वर्णन आरंभ होता है ॥ १ ॥

सर्वथा वरुणदेवरक्षितां
पश्चिमां दिशमनन्यसाहसः ।
संविजित्य धनदानुपालिता-
मुत्तरां दिशमगात्स भूपतिः ॥ २ ॥

वरुण के द्वारा सुरक्षित पश्चिम दिशा को जीत कर धर्मदेव ने कुवेर रक्षित उत्तर दिशा को प्रस्थान किया ॥ २ ॥

तत्र दिव्यशिखरे हिमालये
सन्निवेश्य शिविरं मनोरमम् ।
गुह्यकेश्वरमसौ जनेश्वर-
स्तद्दिगीशमतिचण्डमस्मरत् ॥ ३ ॥

उत्तर में हिमालय के ऊपर अपना शिविर जमा कर के धर्मदेव ने उस दिशा के अधिपति कुवेर का स्मरण किया ॥ ३ ॥

चित्तवृत्तिविषयीकृतप्रभः
सोऽपि तस्य पुरतः समागतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शङ्करानुमतमेव सर्वतः
स्वीचकार बलमात्ररक्षणम् ॥ ४ ॥

स्मरणमात्र से समक्ष में उपस्थित कुवेर ने शंकर-प्रदिष्ट कार्यभार अपने ऊपर लेकर सेना का संचालन आरंभ किया ॥ ४ ॥

वाहिनीपतिपदं समागते
यक्षराज्ञि भगवानुमापतिः ।
मानसे बहु तुतोष सम्मदा-
दाशुतोषपदवीमुपागतः ॥ ५ ॥

धर्मदेव की सेना का अध्यक्षपद कुवेर ने स्वीकार किया है यह सुन कर आशुतोष भगवान् शंकरजी बड़े प्रसन्न हुए ॥ २ ॥

किं तवाद्य वद हर्षकारणं
बोधयाशु भगवन्निति स्फुटम् ।
वादिनीं भगवतीमुमामयं
धर्मराजविजयं समादिशत् ॥ ६ ॥

आजकल आप इतने प्रसन्न क्यों हैं इस प्रकार पार्वतीजी के पूंछने पर शंकरजी ने धर्मराज का विजय उसका कारण बताया ॥ ६ ॥

दैवतः परिसरे समागतं
सा निपीय गिरिजा महेश्वरात् ।
तं स्वमात्मजमिवाभिरक्षितुं
वीक्षितुश्च मुदितान्तराऽभवत् ॥ ७ ॥

दैवयोग से पास में आए हुए धर्मदेव को अपने पति से सुन कर पुत्र के समान उस को देखने और उस की रक्षा करने के लिए पार्वतीजी उद्यत हुईं ॥ ७ ॥

मा कथञ्चिदपि देशमागतः
कष्टमेष विजयैकमानसः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्नुयादतिथिरित्थमात्मनः
सा शशंस पितरं हिमालयम् ॥ ८ ॥

विजय की कामना से अपने देश में प्राप्त हुए धर्म को किसी प्रकार का कष्ट न हो यह संदेह पार्वतीजी ने अपने पिता के पास भेजा ॥ ८ ॥

सोऽपि शङ्करवधूनिदेशना-
दातिथेयकरणं गृहस्थितम् ।
तस्य धर्मनृपतेरुपायनैः
साकमाकलयदुन्नतोन्नतः ॥ ९ ॥

हिमालय ने भी शंकर का यह संदेश समझ कर धर्मदेव के आतिथ्य का सभी आयोजन वहाँ पर एकत्र कर दिया ॥ ९ ॥

उत्तमोत्तमगजाश्वमौक्तिकै-
रौषधैरमलरत्नसञ्चयैः ।
सादरं स हिमवानुपायनै-
रेनमात्मशिविरेष्वमोदयत् ॥ १० ॥

अच्छे अच्छे गज, अश्व, मौक्तिक, ओषधि, रत्न आदि उपायनों के द्वारा आपका अपने यहाँ पर हिमालय ने खूब स्वागत किया ॥ १० ॥

किन्नरेशपरिरक्षिते बले
किन्नरा अपि तदा निजोचितम् ।
कर्तुमस्य पुरतः समाययुः
स्वानुरूपकरणेन सङ्गताः ॥ ११ ॥

कुवेर के द्वारा सुरक्षित धर्मदेव की सेना में उपस्थित होकर किन्नरों ने भी निजोचित कार्य करने के लिए अपने आपको सन्नद्ध किया ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अप्सरःसु रमसादुपागता-
स्वङ्गवानिव भवन्मनोभवः ।

धर्मराजबलमाशु तर्जय-
न्नाजगाम विशदे रणाङ्गणे ॥१२॥

सेना के बीच में अप्सराओं के उपस्थित होने पर सबसे प्रथम कामदेव ने रति और वसंत के साथ पदार्पण किया ॥ १२ ॥

दिव्यपुष्परचितं स कार्मुकं
बिभ्रदुद्धतविलक्षणक्रमः ।
प्राहिणोन्निजशरं जनव्रजे
पूर्वमेकमरविन्दनामकम् ॥ १३ ॥

अनेक पुष्प-रचित अपने धनुष पर उसने सबसे प्रथम अरविन्द नामक अपना बाण चढ़ाया ॥ १३ ॥

मोहनात्मकफलेऽस्य सायके
चारितार्थ्यमुपयाति संयुगे ।
का कथा मनुजदेहधारिणां
पक्षिणोऽपि मुमुहुः पदे पदे ॥१४॥

उस बाण के लगते ही संसार में मनुष्यों की तो कथा ही क्या ? पक्षी तक भी मोह को प्राप्त हो गए ॥ १४ ॥

प्राणिजातमनिवार्यविक्रमः
संयुगे सकलमीक्ष्य मोहितम् ।
मन्मथोऽयमपरं स्वकार्मुके
बाणमद्भुतमधादशोकजम् ॥ १५ ॥

मोहनास्त्र से प्राणिमात्र को मोहित देखकर कामदेव ने अपने धनुष पर दूसरा बाण अशोकपुष्प चढ़ाया ॥ १५ ॥

मादनो जनिभृतां स सायकः
प्राणिमात्रमपि धर्मसङ्गरे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मादयन्गुणवतीं निजाभिधां
सत्यमेव विततान भूतले ॥१६॥

इसने धर्मयुद्ध में प्राणिमात्र को उन्मत्त बना कर "मादन" इस अपने नाम को यथार्थ करके दिखाया ॥ १३ ॥

सिद्धमेव सुतरां समीहितं
येन विश्ववलये स मन्यते ।
मन्मथस्तमपि चूतपल्लवं
सत्वरं धनुषि सन्दधे मृधे ॥१७॥

इसके अनन्तर कामदेव ने अपने धनुष पर आम्रमञ्जरी चढ़ाई जिस पर उसका बड़ा गर्व था ॥ ७ ॥

शोषणस्त्रिजगतां स सङ्गरे
विग्रहान्बलवतां विशोषयन् ।
कामदेवविजयोपदेशनैः
स्वाभिधानमपि सार्थकं व्यधात् ॥१८॥

"शोषण" नामक कामदेव के इस बाण ने भी बलवानों को सुखा कर अपना नाम खूब सार्थक किया ॥ :८ ॥

मल्लिकाकुसुममप्यतःपरं
मीनकेतनयुवा नवं शरम् ।
सन्दधे सकलविश्वतापनं
तत्र विश्वविजयाशयाऽऽवृतः ॥१६॥

इसके अनंतर कामदेव ने विजय लाभ के लिए अपने धनुष पर नवमल्लिका नामक बाण चढ़ाया ॥ १६ ।

शीतलान्यतितरां वनोदरे
मानसानि स चतुर्थसायकः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तापयन्विजयदुन्दुभिस्वनै-
र्जन्मिनां गगनमप्यपूरयत् ॥२०॥

वन के बीच में मनुष्यों के हृदय को उत्तप्त करके इस "तापन" बाण ने भी अपना नाम सार्थक करके दिखा दिया ॥ २० ॥

मारणात्मकफलं यदा जवा-
न्नीलमुत्पलमयं स्मरः शरम् ।
सन्दधे धनुषि सत्वरं तदा
जृम्भकास्त्रनवलक्ष्यतामगात् ॥२१॥

इसके अनन्तर कामदेव ने जब मारण नामक नीलोत्पल अपने धनुष पर चढ़ाया तब उसके ऊपर कुबेर ने जृंभकास्त्र का प्रयोग किया ॥२१॥

गुह्यकेश्वरनिजप्रभावतो
जृम्भितः स मदनान्तकस्थले ।
नष्टशक्तिरिव मीनकेतनो
योगिनां न हृदयानि विव्यथे ॥२२॥

कुबेर के द्वारा प्रयुक्त जृम्भकास्त्र के प्रभाव से जृम्भित बल कामदेव योगियों के हृदय पर अपना प्रभाव नहीं जमा सका ॥ २२ ॥

नाहमिन्द्रियविनिग्रहक्षमा-
न्बाधयिष्य इति वादितं स्मरम् ।
धर्मराडपि मुहुर्मुहुस्तदा
सन्नमन्तमशिवादमोचयत् ॥२३॥

मैं जितेन्द्रिय मनुष्यों को कदापि कष्ट न दूंगा इस प्रकार कहते हुए कामदेव को धर्मदेव ने बंधन से मुक्त कर दिया ॥ २३ ॥

धर्मराजशिविरात्पलायितं
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri
कामदेवमवलोक्य विस्मिताः ।

योगिनोऽपि निजयोगसाधने
द्रुतमानसकलाः समाभवन् ॥२४॥

धर्मराज के शिविर से भागते हुए इस कामदेव को देख कर योगिजन भी अपने अपने योगसाधन में प्रवृत्त हुए ॥ २४ ॥

ज्ञानरुद्धसकलेन्द्रियव्रजं
योगसाधनपरम्परानुगम् ।
तत्र वीक्ष्य मनुजव्रजं गिरौ
विस्मितोऽभवदसौ रतीश्वरः ॥२५॥

ज्ञान के द्वारा निगृहीतेंद्रिय योगसाधन में निमग्न मनुष्यों को देख कर वहाँ पर कामदेव विस्मित हो गया ॥ २५ ॥

आत्मनः परममित्रमीदृशीं
दैवयोगवशतो दशाङ्गतम् ।
वीक्ष्य युद्धभुवि चण्डवेगवा-
नाजगाम किल कोपसैनिकः ॥२६॥

अपने मित्र कामदेव का बुरा हाल हुआ सुनकर क्रोध ने धर्म के शिविर में पदार्पण किया ॥ २६ ॥

अप्रगल्भवचनं पुरः स्थितं
तं विलोक्य मद-मान-पण्डितम् ।
धर्मभूपशिविराच्छमाभिधः
सैनिको द्रुतमगाद्रणाङ्गणे ॥२७॥

अप्रगल्भ वचन उस क्रोध को देख कर धर्म की ओर से उसके समक्ष शम उपस्थित हुआ ॥ २७ ॥

युद्धमत्र शमकोपयोरिदं
द्रष्टुमेकरसताङ्गतो जनः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्निमेषमकरोन्निजं निजं
नेत्रयोर्युगलमेतदद्भुतम् ॥२८॥

शम और कोप का द्वन्द्वयुद्ध देखने के लिए सभी मनुष्य उस समय निर्निमेष-नयन बन गए ॥ २८ ॥

उग्रदण्डमतिचण्डदर्शनं
तं मृधे बहुवदन्तमुद्धतम् ।
नैव शेकुरपरेऽभिवीक्षितुं
विश्रुता अपि रणैकपण्डिताः ॥२९॥

रणाङ्गन में अत्यंत भयावह उस उग्रदंड क्रोध को देखने के लिए शम के अतिरिक्त अन्य कोई समर्थ नहीं हुआ ॥ २९ ॥

युद्धमाविरभवद्यदा तयो-
रुत्तरोत्तरगदाभिघातयोः ।
कम्पितं जगदभूदिदं तदा
केवलं प्रमथनायकं विना ॥३०॥

जिस समय रण में ये दोनों महारथी उतरे उस समय एक महादेव को छोड़ कर बाकी सब जगत् कांपने लगा ॥ ३० ॥

आहवे भयवशेन धावतां
या रथोद्धतगतिस्तदाऽभवत् ।
सा विचित्रपदपातमञ्जुला
केन वक्तुमपि शक्यते कलौ ॥३१॥

युद्ध के समय भागते हुए मनुष्यों को जो "रथोद्धत" गति हुई उसका वर्णन करने के लिए कोई शक्त नहं. है ॥ ३१ ॥

ताड्यतां पुनरयं निपात्यतां
पीड्यतामिति परस्परं मुहुः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जल्पतोर्युधि तयोर्दिनात्यये
सम्मदः प्रववृधे भयावहः ॥ ३२ ॥

इसको मारो, जमीन पर गिरा दो, इसका प्राण निकालो, इस प्रकार आपस में कहते हुए इन दोनों का सायंकाल में युद्ध बढ़ा ॥३२॥

विक्रमेण विनिपात्य संयुगे
तं तथाविधमनन्यसाहसम् ।
शान्तिमाप शमसैनिकोऽपि तां
यामसौ हृदि परामचिन्तयत् ॥३३॥

अपने पराक्रम से युद्ध में क्रोध को पछाड़ कर शम को भी जो शांति प्राप्त हुई उसका वर्णन करना सर्वथा असंभव है ॥ ३३ ॥

धर्मराजशिविरे पराजितं
तं निशम्य कलिराजसैनिकम् ।
आजगाम तरसा महारथो
लोभ इत्यभिधया भुवि स्थितः ॥३४॥

धर्मराज के शिविर में परास्त हुए अपने मित्र को सुन कर बड़े वेग के साथ वहाँ पर लोभ उपस्थित हुआ ॥ ३४ ॥

आगतं तमवलोक्य सम्मदा-
द्योद्धुमुद्यतमनन्तविक्रमम् ।
धर्मराजशिविरे जनारवः
सम्बभूव समरप्रकम्पनः ॥ ३५ ॥

युद्ध भूमि में लोभ के आने पर सब ओर से बड़ा भारी कोलाहल हुआ और सब योद्धा आपस में एक दूसरे को देखने लगे ॥ ३५ ॥

नव्यदिव्यकलधौतकुण्डलो
देवदानवमनुष्यधर्षणः ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वथा स समरे महारथः
साबुधो बहु जगर्ज तर्जयन् ॥३६॥

नवीन नवीन सुवर्णकुण्डलों से सुन्दर, देव, दानव और मनुष्यों को वश में करनेवाला यह महारथी रण में आकर खूब गरजा ॥ ३६ ॥

उत्वरेण गदया विचूर्णिता-
स्तेन केऽपि समराङ्गणे तदा ।
कोऽपि पादपतिताः कृपावशा-
दुज्झितास्तदितरे निपातिताः ॥३७॥

इसने किसी को गदा से मारा, चरणों पर पड़े हुए किसी को छोड़ दिया और बहुत से महारथियों को ज़मीन पर मार गिराया ॥ ३७ ॥

तादृशीं समवलोक्य तद्गतिं
तस्य वैरिदलपक्षपातिनः ।
शान्तधीरपि समुद्यतो मृधे
तं निपातयितुमुत्वरोऽभवत् ॥३८॥

शत्रुदल के महारथी का इस प्रकार अद्भुत पराक्रम देख कर बड़ा शान्त स्वभाव भी सन्तोष लड़ने को तैयार हुआ ॥ ३८ ॥

सर्वतः समवरुध्य तद्गतिं
धर्मममर्मपरिरक्षणाक्षमः ।
तोष एव विनिपात्य सङ्गरे
तं तथाविधमवाप सम्मदम् ॥३६॥

उसने सब ओर से लोभ की गति को बन्द कर उसको इस प्रकार गिराया कि वह सर्वदा के लिए शान्त हो गया ॥ ३९ ॥

लोभमप्यसमये विधेर्वशा-
द्देवलोकमुपयातुमुद्यतम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीक्ष्य धर्मपरिपन्थिनां मन-
श्चुक्षुभे विविधसाध्वसोदयात् ॥४०॥

असमय में लोभ को पराजित देखकर धर्म के विरोधियों का मन एक साथ भयभीत हुआ ॥ ४० ॥

मर्त्यलोकमपहाय दैवतो
लोकमन्यमनुगच्छति प्रिये ।
लोभनाम्नि बत ! मोहसैनिकः
कोऽपि धर्मसमरे समाविशत् ॥४१॥

मर्त्यलोक को छोड़कर देवलोक को जाते हुए अपने मित्र को देखकर युद्धभूमि में महामोह आकर उपस्थित हुआ ॥ ४१ ॥

येन मे सुहृदयं निपातितः
शत्रुणाऽद्य तमरं यमालयम् ।
यापयाम्यहमिति प्रजल्पता
तेन तत्र समये न किं कृतम् ॥४२॥

उसने कहा कि मेरे मित्र को जिसने धराशायी बनाया है मैं उसको यमालय तक अवश्य पहुँचाऊँगा ॥ ४१ ॥

दण्डिता दमनदत्तमानसाः
खण्डिता निजबलप्रधर्षिणः ।
भञ्जिताः प्रसभमेव मुद्गरै-
स्तोषपोषणपरा जनव्रजाः ॥४३॥

इतना कहकर उसने पहले जितेन्द्रियों को दण्डित किया फिर बलवानों को खण्डित किया और अन्त में सन्तोषियों को भी मुद्गरों से भञ्जित किया ॥ ४३ ॥

एवमुत्पथपरम्परानुगं
मोहमेनमवलोक्य दुर्मदम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेगवानवततार तद्गुरु-
स्तर्जयन्निव विपक्षसैनिकान् ॥४४॥

रण में इस प्रकार उपद्रव करते हुए मोह को देखकर उसके साथ युद्ध करने को वैराग्य रण में उतरा ॥ ४४ ॥

रागवान्भगवतः पदाब्जयो-
रेष मोहमतिकान्दिशीकताम् ।
प्राप्तमेकगलहस्तिकाऽऽकुलं
विक्रमेण निरवासयद्रणात् ॥४५॥

भगवान् में दत्तचित्त इस महारथी ने भयभीत उस मोह को एक साथ गलहस्तिका देकर रण से भगा दिया ॥ ४५ ॥

आहवं द्रुतमपास्य विद्रुते
धर्मदेवपरिपन्थिनां गुरौ ।
तत्समानबलवानुपागम-
त्कोऽपि शोक इतिनामवानरिः ॥४६॥

युद्ध को छोड़कर भागे हुए मोह को देखकर उसके पद पर शोक आकर उपस्थित हुआ ॥ ४६ ॥

मोहवत्तमपि धर्मसङ्गरे
सत्वरं स विनिपात्य भूतले ।
मोहशत्रुरनिरुद्धवेदनं
सादरं यमगृहातिथिं व्यधात् ॥४७॥

मोह के समान उसको भी रण में गिरा कर वैराग्य ने दोनों को एक साथ यमालय पहुँचाया ॥ ४७ ॥

मोहमप्यमरलोकपान्थतां
यातमात्मनि विचार्य सत्वरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र धर्मशिविरे पदं न्यधा-

न्मृत्युरुग्रतरवेषभूषितः ॥४८॥

अमरलोक के मार्ग में जाते हुए अपने मित्र मोह को देखकर धर्मदेव के शिविर में मृत्यु ने पदार्पण किया ॥ ४८ ॥

वीक्ष्य मृत्युमिममुग्रतेजसं

धर्मराजशिविरोदरस्थिताः ।

सर्व एव भयभीतमानसाः

सैनिकाः समभवन्महाहवे ॥४६॥

उग्रतेज इस मृत्यु को समरांगण में देख कर सभी महारथी भय के मारे इधर उधर देखने लगे ॥ ४६ ॥

व्याकुलानलमवेक्ष्य सङ्गरे

सैनिकान्भयवशादुपद्रुतान् ।

आजगाम मदनान्तकः स्वयं

यं विलोक्य स बिभाय सर्वतः ॥५०॥

धर्म के सैनिकों को भयभीत देख कर इसके समक्ष में साक्षात् मृत्युञ्जय आकर उपस्थित हुए इनको देख कर मृत्यु भी डर गया ॥ ५० ॥

शङ्करं स परिवीक्ष्य संयुगे

शक्तिमन्तमरिदर्पभञ्जनम् ।

स्वात्मरक्षणकृते पलायनं

शिश्रिये शरणमात्मवानपि ॥५१॥

मृत्यु ने जब इस धर्मयुद्ध में साक्षात् मृत्युञ्जय को उपस्थित पाया उस समय वह भी अपनी जान लेकर भाग गया ॥ ५१ ॥

मृत्युमप्यतिभयेन कम्पितं

सङ्गरे समवलोक्य वेगवान् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आजगाम मदघूर्णितेक्षणः
सम्भ्रमेण मद एव सत्वरम् ॥५२॥

धर्म युद्ध से इसको भी भागा हुआ देख कर बड़े वेग के साथ रणांगण में मद ने आकर पदार्पण किया ॥ ५२ ॥

धर्मराजपरिपन्थिनां व्रजे
मुख्यमेनमपि तत्र संस्थितम् ।
वीक्ष्य कस्य हृदयं सचेतसो
विव्यथे न जगतामपि त्रये ॥५३॥

धर्मदेव के विपक्षियों में अति प्रबल इस मद को देख कर त्रिलोकी में किसका मन भयभीत नहीं हुआ ॥ ५३ ॥

विश्रुतोऽतिबलवानयं तदा
संयुगे समवलोक्य सर्वतः ।
सर्ववीरपरिमर्दिनीं निजां
शक्तिमस्मरदधीश्वरेरिताम् ॥५४॥

इस गर्वरूपी महासैनिक ने रणांगण में सब ओर दृष्टि डाल कर ईश्वरप्रदत्त सर्ववीरमर्दिनी शक्ति का स्मरण किया ॥ ५४ ॥

शक्तिसङ्गमनतोऽतिदुःसहं
गर्वमेनमवलोक्य सङ्गरे ।
सन्निपातयितुमुत्वरोऽभव-
द्वीर्यवानथ विवेकसैनिकः ॥५५॥

अपनी दैवी शक्ति के प्रताप से अत्यन्त दुःसह इस गर्व को देख कर इसका प्रतिद्वन्द्वी विवेक सामने आकर खड़ा हुआ ॥ ५५ ॥

द्वन्द्वयुद्धमुभयोरुपस्थितं
तुल्यबुद्धिबलयोरितस्ततः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पश्यतां द्विविषदां हृदन्तरे
विस्मयोऽप्यहह ! विस्मितोऽभवत् ॥५६॥

"तुल्यबलविरोध" में विद्यमान इन दोनों वीरों को देखकर देवगणों के हृदय में विस्मय भी एक बार विस्मित हो गया ॥ ५६ ॥

उत्पतन्तमतिदेवसङ्कुले
धन्यवादमधिगन्तुमुद्यतम् ।
गर्वमेष बलवान्महारथः
खे गतासुमकरोद्ग गलग्रहात् ॥५७॥

देववृन्द के मध्य में उछलते हुए इस मद को विवेक महारथी ने एक साथ गलग्रह से नीचे गिरा दिया ॥ ५७ ॥

धर्मराजसुभटैर्महाबलैः
पातितेषु कलिराजबन्धुषु ।
देवदुन्दुभिनिनादमोदिताः
सम्बभुर्युगपदेव ता दिशः ॥५८॥

धर्मराज के महारथियों ने जब कलि के सब महारथी नीचे गिरा दिए उस समय चारों दिशाओं में देवदुन्दुभि बजने लगीं ॥ ५८ ॥

दिक्प्रसादमवलोक्य मूर्छिता
योषितोऽपि सुहृदां कलेरलम् ।
धर्मराजशिविरे मदोद्धता
योद्धुमुत्वरतया समाययुः ॥५९॥

कलिराज के महारथियों में से जब एक भी बाकी नहीं रहा उस समय उन वीरों की वीरांगनाओं ने रण में आकर पदार्पण किया ॥ ५९ ॥

योषितामपि विलोक्य साहसं
तद्विमर्दनरसैरथोद्धताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वीरवेषपरिधानभूषिता
धर्मराजपरिचारिका बभुः ॥ ६० ॥

जब अधर्म के पक्ष में वीरांगनायें लड़ने को उद्यत हुईं उस समय धार्मिक वीरांगनाओं ने भी रण में पदार्पण किया ॥ ६० ॥

आज्ञया निजविभोरतः परं
ता रणाङ्गणमुपेत्य विस्तृतम् ।
हन्तुमागतवधूकदम्बकं
चेलुरुत्कहृदयाः क्षमादयः ॥ ६१ ॥

अपने प्राणेश्वरों का आदेश पाकर वे वीरांगनायें समक्ष में आए हुए शत्रुदल को मारने के लिए उद्यत हो कर चलीं ॥ ६१ ॥

आगतां प्रथममेव सर्वतः
क्रोधसैनिकवधूमतित्वराम् ।
दिव्यशक्तिमदयं दया तदा
धर्मराजपरिचारिकाऽवधीत् ॥ ६२ ॥

सब से प्रथम क्रोध की पत्नी हिंसा रणांगन में उतरी । उनको दूसरी ओर से दया ने पीट कर भगा दिया ॥ ६२ ॥

मन्दमानवहृदन्तरस्थितां
पापपक्षनिरतामघोन्नताम् ।
सत्वरं सुमतिरेव भूतले
तामहो ! कुमतिमप्यमर्दयत् ॥ ६३ ॥

इसके अनंतर कुमति ने आकर रणांगण में पदार्पण किया उसको सुमति ने आकर भगा दिया ॥ ६३ ॥

विद्ययाऽपि पुरतः समागता
मूढमात्रनिलयाऽतिमूढता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेगतो भुवि तथा निपातिता

नो यथा पुनरवाप सङ्गरम् ॥ ६४ ॥

उसके अनंतर अविद्या ने रणांगण में दर्शन दिया। उसको विद्या ने भगा कर विजय प्राप्त किया ॥ ६४ ॥

चित्तमात्रनिलयामुपस्थितां

संयुगे विवदितुं बुधैः समम्।

आदरादरमशान्तिकुट्टिनीं

शान्तिरेव निजघान मुष्टिभिः ॥६५॥

इसके अनंतर अशांति रणांगन में आई उसको शांति ने अपने बल से हटा कर विजय लाभ किया ॥ ६५ ॥

भञ्जितासु सकलासु संयुगे

शत्रुपक्षवनितासु तत्परम्।

धर्मराजपरिचारिणीगणै-

र्विस्मयेन ववृधे महाहवः ॥ ६६ ॥

धर्मदेव की परिचारिकाओं ने जब शत्रुदल की सब वीरांगनायें नष्ट कर दीं उस समय आपसमें सेनाओं का युद्ध आरंभ हुआ ॥ ६६ ॥

धर्मपक्षनिरतैः पदातिभिः

पापपक्षनिरताः पदातयः।

सर्वतः प्रथममेव पातिताः

सङ्गरे निजबलोपधाविनः ॥६७॥

सबसे पहले धर्मदेव के पदातिगण ने अधर्म के पदातियों को बड़े वेग के साथ हटा कर अपने बल का परिचय दिया ॥ ६७ ॥

कुन्तवन्तमथ कुन्तवान्बले

बाणवन्तमतिबाणवानपि।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यष्टिवानहह ! यष्टिमन्तम-
प्याजघान विशदे रणाजिरे ॥६८॥

भालेवालों से भालेवाले धनुषवालों से धन्वी, दंडवालों से दंडी, यथाबुद्धिबल एक दूसरे से आपस में भिड़ गए ॥ ६८ ॥

विध्वजं हतगजाश्वसैनिकं
विप्रकीर्णनरमुण्डमण्डलम् ।
तद्रणाजिरमभून्महाहवे
प्राणिमात्रभयवृद्धिकारणम् ॥६९॥

उस समय पताकाविहीन, हतगज, नष्टसैनिक, नरमुण्डों से चारों ओर व्याप्त वह रणांगण सबको भय देने लगा ॥ ६९ ॥

सर्वमप्यखिलं समागतं
सन्निपात्य रभसेन सैनिकैः ।
सङ्गतः स नरवाहनस्तदा
धर्मराजमनमत्कृताञ्जलिः ॥७०॥

कलि का समस्त बल अपने बल से ध्वस्त कर अपने योद्धाओं के साथ कुवेर ने धर्मदेव को प्रणाम किया ॥ ७० ॥

सिद्धमत्र सकलं मनीषितं
यन्ममाद्य हिमवत्युपस्थितम् ।
राजराज ! तदिदं भवत्कृपा-
सञ्चयस्य फलमस्ति नेतरत् ॥७१॥

आप की कृपा से ही मेरा मनीषित सफल हुआ । इस प्रकार कहते हुए धर्मदेव ने भी कुवेर को संतुष्ट कर दिया ॥ ७१ ॥

एवमादरभरेण भूषितं
भाषितं भगवतो निशम्य सः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुह्यकाधिपतिरन्यदीप्सितं
पर्यपृच्छदुचितोपचारतः ॥७२॥

आने अध्यक्ष का इस प्रकार मनोहर वाक्य सुनकर कुवेर ने धर्मदेव से अन्य कार्य पूछना आरम्भ किया ॥ ७२ ॥

ईप्सितार्थपरिसिद्धिकारणं
यस्य भूमिवलये विलोकनम् ।
तस्य भूधरसुतापतेस्तदा
दर्शनं स निजगाद हृद्गतम् ॥७३॥

कुवेर के प्रश्न करने पर धर्मदेव ने उमासहित महेश्वर का दर्शन करने के लिए अपना मनोरथ प्रकट किया ॥ ७३ ॥

मित्रदर्शनविलोलमानसं
धर्मराजमवलोक्य भक्तिमान् ।
गुह्यकाधिपतिरात्मना समं
राजतं गिरिमितः क्षणादगात् ॥७४॥

अपने मित्र के दर्शन के लिए उत्सुक धर्मदेव को लेकर कुवेर ने शीघ्र ही शिविर से कैलास को प्रस्थान किया ॥ ७४ ॥

तत्र रम्यशिखरे कृतालयं
वेदवर्णितविशेषविग्रहम् ।
पन्नगाभरणमेष भाग्यतः
सन्ददर्श गिरिजापतिं हरम् ॥७५॥

वहाँ पहुँच कर धर्मदेव ने वेदवर्णित, पन्नगाभरण, कैलासवासी, भगवान् उमापति का दर्शन किया ॥ ७५ ॥

तं विलोक्य शितिकण्ठमादरा-
द्दण्डवद्भुवि निपत्य तत्परम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्म एष विनयोपसङ्गता-
मेवमाह विशदाशयां गिरम् ॥७६॥

उनको देखकर धर्मदेव ने सबसे प्रथम दंडवत् प्रणाम किया। अनंतर विनयभरी वाणी से स्तवन आरम्भ किया ॥ ७६ ॥

[ शङ्करस्तवः ]

नाथ ! ते जगति दिव्यदर्शनं
पूर्वपुण्यपरिपाकमन्तरा ।
केन कर्तुमपि शक्यते भवे
मानवेन कलिकालजन्मना ॥७७॥

हे नाथ ! इस कलिकाल में जन्म लेकर बिना प्राचीन पुण्यों के आप का दर्शन कौन कर सकता है ॥ ७७ ॥

भाग्यवान्स जगतीतले जनो
यस्तवार्चनमनन्यमानसः ।
सर्वदैव कुरुते पुनर्भव-
च्छेदनाय भवतापशान्तये ॥७८॥

वह पुरुष संसार में भाग्यवान् है जो सर्वदा भवबंध के तोड़ने के लिए अनन्य भाव से आपका पूजन करता है ॥ ७८ ॥

नानमीति न भवन्तमीश्वरं
यो जगत्यविनयोपलालितः ।
पापयोनिषु स पामरः सदा
जन्ममृत्युबहुलासु जायते ॥७९॥

जो मनुष्य उद्दण्ड होकर आपको प्रणाम नहीं करता है वह बार बार जन्म मरणवाली नीच योनियों में जाकर गिरता है ॥ ७९ ॥

नास्ति ते जगति कोऽपि विप्रियः
कोऽपि नास्ति भुवने बहुप्रियः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्व एव शरणागतस्त्वया
पाल्यते निजकलत्रपुत्रवत् ॥८०॥

आपके लिए संसार में न कोई शत्रु है, न मित्र है। आप सभी शरणागतों को अपने परिवार के समान देखते हैं ॥ ८० ॥

भूतिमात्रकरणो विभूतिमा-
न्विश्वमात्रनिलयो गिरि स्थितः ।
प्राणिमात्रपतिरप्युमापति-
स्त्वं विभो ! मुनिवरैःप्रगीयसे ॥८१॥

हे भगवन् ! आप विभूति-भूषित होने पर भी विभूतिमात्र के कारण हैं, विश्वव्यापक होने पर भी कैलासवासी हैं; विश्वपति होने पर भी आप पशुपति हैं ॥ ८१ ॥

व्याप्यतामुपगता जगत्त्रये
सा समस्तजननी गिरीन्द्रजा ।
व्यापकस्त्वमसि सर्वशक्तिमा-
नेक एव जगदादिकारणम् ॥८२॥

हे भगवन् ! व्याप्यरूप से सर्वत्र भगवती आद्या शक्ति उमा विद्यमान है और व्यापक रूप से सर्वशक्तिमान् आप विराज रहे हैं ॥ ८२ ॥

विप्रयोगवशतो गुणत्रये
यस्य सम्भवति विप्रकल्पनम् ।
तस्य विस्तृतकलस्य पूजने
कः करोति मनुजो विकल्पनम् ॥८३॥

गुणत्रयात्मक संसार में जिनके संयोग तथा वियोग से संसार का सृष्टि एवं प्रलय होते हैं उनके पूजन में कौन विकल्प कर सकता है ॥८४॥

यन्मया विजितमत्र भारते
कल्कमल्पकबलेन सर्वथा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्विभो ! तव कृपाविजृम्भितं
नाहमस्मि बलवान्न मद्बलम् ॥ ८४ ॥

मैंने जो संसार में अधर्म को नष्ट किया है वह सब आपकी कृपा का फल है. मुझमें या मेरी सेना में कोई बल नहीं है ॥ ८४ ॥

यत्किमप्यनुचितं मया विभो-
देवदेव ! विजयाभिलाषिणा ।
सङ्गरे मदनुगेन वा कृतं
क्षम्यतां तदधुना यथोचितम् ॥८५॥

विजय के प्रसङ्ग में जो कुछ मैंने अथवा मेरे अनुगामियों ने अनुचित किया हो आप उसको क्षमा करें ॥ ८५ ॥

भावपूर्णमितिवृत्तमादरा-
देवमावदति धर्मभूपतौ ।
दत्तदृष्टिरभवत्पुरान्तकः
पादपद्मपतिते भयान्तकः ॥८६॥

इस प्रकार स्तवन करते हुए धर्मदेव की ओर शरणागत-भयहारी, त्रिपुरान्तक ने करुणाभरी दृष्टि से देखकर कहा ॥ ८६ ॥

यावदस्मि जगतामहं पति-
र्यावदस्ति सचराचरं जगत् ।
तावदत्र भुवने मदाज्ञया
धर्म ! जीव वशगाननुस्मरन् ॥८७॥

जबतक मैं इस जगत् का अधिपति हूँ और जब तक यह चराचर जगत् है तब तक मेरी आज्ञा से आनन्दित रहो ॥ ८७ ॥

ईदृशोमुचितभावभूषिता-
माशिषं वदति पार्वतीपतौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वदिक्पतिभिरप्युदीरिता-
माशिषं स विनयादधारयत् ॥८८॥

इस प्रकार महादेवजी से समयोचित आशीर्वाद प्राप्त करके धर्मदेव ने अन्य देवगणों से भी आशीर्वाद प्राप्त किया ॥ ८८ ॥

आदराद्विजयमालयाऽऽवृतं
पार्वतीपतिकरप्रदत्तया ।
तं विलोक्य रजताद्रिवासिनः
सर्व एव मुमुदुर्महर्षयः ॥८९॥

महादेवजी ने प्रसन्न होकर धर्मदेव को जयमाला पहनाई। यह देखकर वहाँ के सभी मुनिगण प्रसन्न हुए ॥ ८९ ॥

आनतं निजपदारविन्दयो-
रात्मजोपममिमं पुरः स्थितम् ।
पार्वती नवजयस्रजा पुनः
सङ्गतं मुदमुपागताऽकरोत् ॥९०॥

पुत्र के समान चरणों पर पड़े हुए धर्म को देखकर श्रीपार्वतीजी ने भी अपने हाथ से जयमाला प्रदान की ॥ ९० ॥

आदिदम्पतिपदारविन्दयोः
स स्मरन्धनदमित्रवेश्मनः ।
धैर्यवानवततार तं नगं
यस्य दिव्यशिखरे पुराऽवसत् ॥९१॥

इसके अनन्तर जगत् के आदि दम्पति उमा-महेश्वर का ध्यान करते हुए धर्मदेव कैलास से उतर कर अपने शिविर में पहुँचे ॥ ९१ ॥

रम्यसानुमति तत्र भूधरे
विस्तृतं विजयसूचकं ध्वजम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्निवेश्य मुदितो हिमालया-
न्मातृभूमिममलामवातरत् ॥६२॥

हिमालय के उच्च शिखर पर अपनी विजय-वैजयन्ती को गाड़ कर वहाँ से धर्मदेव अपनी जन्मभूमि सम्भल प्रान्त में पहुँचे ॥ ६२ ॥

सर्वदिग्विजयशोभिताननं
धर्ममेनवलोक्य विस्मिता ।
मातृभूमिरपि तन्नवागत-
स्वागताय समुपस्थिताभवत् ॥६३॥

समस्त दिशाओं की विजय-लक्ष्मी से अलंकृत इस धर्मदेव को देख कर मातृभूमि ने उनका यथोचित स्वागत किया ॥ ६३ ॥

किन्नराधिपतिकोषसंस्थित-
द्रव्यराशिभिरयं स्वमातरम् ।
हर्षजन्यनयनाम्बुबिन्दुभिः
सार्द्धमुज्वलमुखीममण्डयत् ॥ ६४ ॥

धर्मदेव ने भी कुवेर के कोष से प्राप्त हुए रत्नों से अपनी मातृभूमि को सजा कर उसका यथोचित मान किया ॥ ६४ ॥

आनन्ददायिनि महर्षिमहीपदस्थे
पुण्याश्रमे महति जन्हुसुतासनाथे ।
नानाविधाध्वगमनश्रममेष धर्म-
स्तत्रापनेतुमकरोदभितो महांसि ॥६५॥

इसके अनन्तर आनन्दप्रद भागीरथी के तट पर ब्रह्मर्षि देश में विद्यमान अपने जन्मस्थल में धर्मदेव ने विजयसूचक अनेक प्रकार के उत्सव आरम्भ किये ॥ ६५ ॥

इतिश्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये
तुमुलयुद्धवर्णनं नाम षोडशः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सप्तदशः सर्गः

नानावृत्तैरङ्कितं वृत्तबन्धे
कश्चित्सर्गं सर्गवत्कर्तुकामः ।
देवादेशात्पूर्वसर्गावसाने
सर्गारम्भं कश्चिदेवं चकार ॥१॥

इस महाकाव्य में ईश्वरीय सृष्टि के समान किसी सर्ग को अनेक वृत्तपूर्ण बनाने के लिए ग्रंथकार ने इस सर्ग का आरंभ इस प्रकार किया [ शालिनीवृत्तम् ] ॥ १ ॥

परीत्य भूतानि परीत्य लोका-
न्परीत्य सर्वाः प्रदिशो दिशश्च ।
धर्मः स्वदेशे जनरञ्जनाय
चक्रे विचारं विविधप्रचारम् ॥२॥

दिग्विजय के अनंतर पंचमहाभूत सूर्यादिलोक और दिशा एवं विदिशाओं को व्याप्त करके धर्मदेव ने अपने संभल प्रांत में अनेक प्रकार के कार्य किये [ उपेन्द्रवज्रावृत्तम् ] ॥ २ ॥

निशम्य धर्मस्य जयं जगत्यां
जनः समस्तो नगरोदरेषु ।
गृहे गृहे मद्गनिबोधकानि
चकार नानाविधमङ्गलानि ॥३॥

सनातनधर्म का विजय सुन कर नगर नगर में मनुष्यों ने अपने गृहों में अनेक मंगल कार्य आरंभ कर दिये ॥ ३ ॥

आकर्ण्य धर्मविजयं भवनानि पश्चा-
दालोक्य धर्मपरिवर्द्धनमानसानाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पापात्मनां प्रतिपुरं परिदेवितानि
नानाविधानि निजकर्मवशाद्भूवन् ॥४॥

धर्म के विजयोपलक्ष्य में सुसज्जित धार्मिक जनों के गृहों को देखकर पापो मनुष्यों में अनेक प्रकार की बातें होने लगीं। [उद्धर्षिणीवृत्तम्] ॥४॥

अधर्मराज्यं न कदापि लोके
चिराय तिष्ठत्यपकारभाजाम् ।
विनोदनायेति तदा वदन्तो
बभूवुरानन्दपरा मनुष्याः ॥५॥

कोई यह कहने लगे कि अधर्म का राज्य बहुत दिन तक नहीं रहता है इसी कारण पापी सुख नहीं भोग पाते हैं ॥ ५ ॥

राज्याभिषेकोत्सवदर्शनाय
समुद्यतानां पुरतः स्थितानाम् ।
परस्परालापकथास्तदानीं
न कस्य चेतो रमयाम्बभूवुः ॥ ६ ॥

धर्मदेव का राज्याभिषेक देखने के लिए एकत्र हुए बहुत से विद्वानों का वार्तालाप उस समय सबका मनोरंजन करता था [उपजातिवृत्तम्]६॥

श्रद्धादेवी धर्मदेवस्य पत्नी
सम्यग्द्रष्टुं प्राणनाथाभिषेकम् ।
देवानुग्रानर्चयामास पश्चा-
द्दिव्यैर्नव्यैः पद्यबन्धैर्ववन्दे ॥७॥

धर्मदेवकी महारानी श्रीमती श्रद्धादेवी भी पति का राज्याभिषेक देखने के लिए देवताओं की पूजा समाप्त करके उनकी स्तुति करने लगी ॥ ७ ॥

अथ विश्वासमाहूय मन्त्रिणं समयोचितम् ।
धर्मो जगाद सदयं प्रसन्नवदनाम्बुजः ॥८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इसके अनंतर विश्वास नामक महामन्त्री को बुला कर धर्मदेव ने कहा [ अनुष्टुप्-वृत्तम् ] ॥ ८ ॥

सखे ! राज्याभिषेकस्य समयोऽयमुपस्थितः ।
सर्वैरुपस्थितैर्भाव्यं यत्र देवर्षिपन्नगैः ॥ ९ ॥

मित्र ! राज्याभिषेक का समय निकट आ गया है जिसमें समस्त देवगणों का आना आवश्यक है ॥ ९ ॥

अतो निमन्त्रणादलं सर्वभावोपबृंहितम् ।
मानाय सर्वमान्यानां भवताऽद्य विलिख्यताम् ॥१०॥

इसलिए उनके लिए एक भावपूर्ण सम्मानसूचक निमन्त्रण पत्र आप लिखें ॥ १० ॥

इत्यादिष्टो भगवता धर्मराजेन सादरम् ।
महामान्यो यदलिखत्तदिदं परिपठ्यताम् ॥ ११ ॥

इस प्रकार धर्मदेव की आज्ञा पाकर मंत्रीजी ने जो पत्र लिखा है वह इस प्रकार है ॥ ११ ॥

[ निमन्त्रणपत्रलेखः ]

श्रीमन्तः सर्वमान्याः सकलगुणभृतः सर्वसम्पत्समृद्धाः
सर्वज्ञाः सद्विधिज्ञाः सरलतरहृदः साधुवेद्याः सविद्याः ।
सर्वाभिः सर्वभावैः प्रबलतरमहच्छक्तिभिः शक्तिमन्तो
नानालोकाधिवासा हरिहरविधिदिक्पालमुख्या निलिम्पाः ॥

श्रीसंपन्न सर्वमान्य सकलगुणयुक्त, सर्वज्ञ, सरलहृदय, सर्वशक्ति समेत अनेक लोकों में विद्यमान, ब्रह्म विष्णु महेश प्रधान, हे देवगणो ! प्रणामपूर्वक आप के समक्ष निवेदन है [ स्रग्धरावृत्तम् ] ॥ १२ ॥

करुणया भवतां विजितो मया
सकलदिक्षु निविष्टपदो बली ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कलिरलं सह तेन लयङ्गतं
प्रबलवेगवता भुवि पातकम् ॥१३॥

आप की कृपा एवं सहाय से मैंने बलशाली कलिदेव नष्ट किया और उसी के साथ साथ अधर्म भी नष्ट हो गया [द्रुतविलम्बितंवृत्तम्] ॥१३॥

यत्कर्तव्यमिदानीमस्मिँल्लोके जनोपयोगाय ।
तत्रोपस्थितिकालः सम्प्राप्तोऽयं भवत्प्रसादेन ॥१४॥

इस समय में जो कर्तव्य है उसमें आप लोगों की उपस्थिति प्रार्थनीय है [ आर्यागीतिः ] ॥ १४ ॥

निमन्त्रणादलं मया यदिदमादरात्प्रेष्यते
न तद्विफलतां व्रजेत्कथमपीह पृथ्वीतले ।
निवेदनमिदं क्रमाद्धृदि निधाय कालोचितं
यथामति विधीयतां झटिति दर्शनन्दीयताम् ॥१५॥

यह जो निमंत्रण पत्र मैं आप के पास भेज रहा हूँ वह जिस प्रकार से विफल न हो उस प्रकार से आकर शीघ्र दर्शन दीजिए [ पृथ्वी-वृत्तम् ] ॥ १५ ॥

धर्मस्येदं प्रथितसुमतेः पत्रमानन्दपूर्णं
दृष्ट्वा देवा मुदितमनसो दिव्यशक्तिप्रभावाः ।
सालङ्काराः सहपरिकराः सायुधाः सावरोधा
धृत्वा रूपान्तरमनुपमं भूतलं पर्यगच्छन् ॥१६॥

धर्मदेव का यह निमन्त्रण पत्र पाकर समस्त देवगण निज निजोचित वेश से अलंकृत होकर भूमण्डल में अवतीर्ण हुए [मन्दाक्रान्तावृत्तम् ]१६

धर्मोऽप्यस्मिन्विस्तृते भूमिभागे
नानालोकादागतानां सुखाय ।
गीर्वाणानां मन्दिराण्यप्रमत्तः
काले काले कारयामास हृष्टः ॥१७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निमन्त्रण पत्र भेजने के अनन्तर धर्मदेव ने भी समस्त भूमण्डल में अनेक प्रकार के देवमन्दिर देवगणों के विश्रामार्थ बनवाये ॥ १७ ॥

अथ गिरिवरशृङ्गाद्राजतादिन्दुमौलिः
सह गणपतिमात्रा दिव्यमारुह्य यानम् ।
वृषभमखिलपापोन्मूलिनोमुत्तमाङ्गे
त्रिदशसरितमाराद्धारयन्नाजगाम ॥१८॥

इस के अनन्तर सब से प्रथम श्रीजगदंबा के साथ नन्दीश्वर पर चढ़ कर श्रीशंकरजी महाराज पधारे [ मालिनीवृत्तम् ] ॥ १८ ॥

यन्नाममात्रपरिकीर्तनमेव जन्तो-
रन्ते निवारयति जन्मशतानुतापम् ।
दुग्धाम्बुराशितनयासहितः स देवो
धर्मावतारभवनं समुपाजगाम ॥१९॥

जिनके नाम स्मरण मात्र से ही मनुष्य अन्तसमय में मुक्ति प्राप्त कर लेता है वे भगवान् विष्णु भी महालक्ष्मीजी के साथ भूमण्डल में पधारे ॥ १९ ॥

पयसि मिलितं दैवादेशात्पृथक्कुरुते स्वयं
य इह भुवने हंसाभिख्यो जलं बहुनिर्मलम् ।
तमतिरुचिरं तत्रारुह्याजगाम नभस्तला-
त्प्रथितनिगमव्यापारज्ञो विरिञ्चिरकिञ्चनः ॥२०॥

जल में मिले हुए दुग्ध को अलग करना जिसका स्वाभाविक गुण है उस हंस पर चढ़ कर वेदज्ञ ब्रह्माजी पधारे [ हरिणीवृत्तम् ] ॥ २० ॥

अनेन सार्द्धं वचसामधीशो
नभोविभागान्निजवाहनेन ।
समाजगामास्य मनः प्रदेशं
समस्तदेवस्तुतदिव्यकीर्तिः ॥२१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आप के साथ समस्त जगद्वन्दनीया भगवती महासरस्वतीजी अपनी सवारी में बैठ कर पधारीं ॥ २१ ॥

अथाधिरुह्य पुण्डरीकमुन्नदन्तमद्भुतं
प्रशस्तमुण्डमण्डलीनवस्रजा विभूषिता ।
निशुम्भशुम्भमर्दिनी जवेन सर्वमङ्गला
समाजगाम मन्दिरं क्षणेन धर्मभूपतेः ॥२२॥

इसके अनन्तर वेग से चलने वाले सिंह पर बैठ कर मुण्डमाला विभूषित शुंभ-निशुंभ-विमर्दिनी भगवती महाकालीजी पधारीं [ पञ्चचामरवृत्तम् ] ॥ २२ ॥

आरुह्य सुन्दरतरं लघु सप्तहस्त-
मैरावतं जितरदद्युतिचन्द्रबिम्बम् ।
आखण्डलो दितिजमात्रबलप्रधर्षी
शच्या समं भवनमस्य तदा समागात् ॥२३॥

आपके बाद ऐरावत पर सवार होकर दानवदर्पदलन, भगवती इन्द्राणी के साथ इन्द्रदेवजी पधारे ॥ २३ ॥

वशमधिगत्य यस्य भुवने मनुजो न पुन-
र्व्रजति कथञ्चिदप्यतिथितां भुवि सम्भवताम् ।
बहुविधपाशपाणिरयमप्यमरो वरुणो
झटिति समाजगाम सदनं निजभूमिपतेः ॥२४॥

आपके अनन्तर संसार मात्र के प्राणियों को अनेक प्रकार के पाशों से बांधने वाले भगवान वरुणदेव जी पधारे [ नर्दटकं वृत्तम् ] ॥ २४ ॥

यस्यार्चनेन विलयं प्रतियान्ति सर्वे
विघ्नाः स्वयं विधिवशादिव भीतभीताः ।
प्रत्यूहमात्रदलनाय धृताङ्कुशास्त्रो
विघ्नेश्वरः स भगवानपि धर्ममागात् ॥२५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आपके अनन्तर विघ्नमात्र के विनाशक ऋद्धि सिद्धि समेत, मूषक-वाहन, श्रीगणेशजी महाराज पधारे ॥ २५ ॥

यः प्रकाशयति विश्वमण्डलं
धावितान्धतमसस्त्विषाम्पतिः ।
अश्वसप्तकरथाधिचङ्क्रमः
सोऽपि चण्डकिरणो जवादगात् ॥२६॥

आपके अनन्तर अपने प्रकाश से अन्धकार को दूर भगानेवाले सप्ताश्ववाहन भगवान सूर्यदेवजी पधारे [ रथोद्धतावृत्तम् ] ॥ २६ ॥

अवश्यं भूलोके भवति फलमेकान्तविषमं
रुषा येषामस्मिन्नशिवमधिगच्छत्यपि जनः ।
ग्रहास्ते सन्तुष्टा नवनवसमारोहरुचिराः
पदं द्रष्टुं रूपान्तरमलमगुर्धर्मनृपतेः ॥२७॥

आपके बाद जिनकी सुदृष्टि और कुदृष्टि के प्रभाव से चराचर संसार सुख दुःख का अनुभव करता है वे नवग्रह पधारे [ शिखरिणी-वृत्तम् ] ॥ २७ ॥

वेदाविर्भवने जवादुपकृतं यैरात्मयोगस्थितै-
रत्यन्तं जगदीश्वरोऽपि हृदये यैर्नित्यमाराध्यते ।
लोकालोकनमात्रमेव करणं येषां द्युलोकेऽचलं
ते धर्मेण निमन्त्रितास्तमगमन्नम्रेण सप्तर्षयः ॥२८॥

आपके बाद वेदों के प्रकट करनेवाले लोकसाक्षी सप्तर्षिगण पधारे [ शार्दूलविक्रीडितं वृत्तम् ] ॥ २८ ॥

अनुकम्पयैव यासां विश्वं सर्वं यथावदाभाति ।
ता लोकमातरोऽपि स्वपुत्रमेनं विलोकयामासुः ॥२९॥

जिनकी कृपा दृष्टि से समस्त कार्य सिद्ध हो जाता है वे मातृका गण भी अपने महाराज को देखने के लिये वहाँ पर पधारीं ॥ २९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पातालतालुतलमस्ति सदैव येषां
विश्रामगेहमधिपस्त्रिजगत्प्रसिद्धः ।
शेषोऽत्र ते सकलभूविलमात्रगेहा
हर्षेण पन्नगगणा नृपतिं प्रणेमुः ॥३०॥

पाताल में जिनका निवास है और शेष नाग जिनके अध्यक्ष हैं वे पन्नगगण भी रूपान्तर धर कर इस विजयोत्सव में पधारे ॥ ३० ॥

सर्वेष्वागतवत्सु धर्मनिलयं देवेषु भूमण्डले
नानाविग्रहवत्सु दैववशतः सत्कर्तुमभ्युद्यतः ।
मोक्षार्थी मनुजव्रजो निजनिजाभीष्टप्रदानादरा-
दानर्च स्तवनेन पादपतनेनात्मप्रदानेन तान् ॥३१॥

भूमण्डल में इस प्रकार सब देवगणों के आने पर सभी मनुष्य अपने अपने इष्ट का अर्चन स्तवन करने लगे ॥ ३१ ॥

अतः परं पूर्वविनिर्मितेषु
प्रशस्तनानाविधमन्दिरेषु ।
सुखोपभोगैः सह धर्मदेवो
निवेशयामास निलिम्पवर्यान् ॥३२॥

पूजन के अनन्तर पहिले से तैयार किये हुए समस्त सामग्री समेत मन्दिरों में धर्मदेव ने इनकी प्रतिष्ठा करदी ॥ ३२ ॥

अथ नियतमुहूर्ते धर्मराज्याभिषेकं
भरतभुवि विधातुं भारतीयैर्मनुष्यैः ।
सकलमपि यथावत्साधनं धर्मविज्ञै-
र्विधिविहितविधानादेकतःसम्प्रणीतम् ॥३३॥

इस के अनन्तर भारतभूमि में धर्मदेव के अभिषेक के लिये जो कुछ सामग्री अपेक्षित थी वह सब एकत्र हुई ॥ ३३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतस्ततो देवगणाधिवासा
बहुद्युतिःपन्नगरत्नभासा ।
निरीक्षणीयैव तदा बभूव
नृपाभिषेकोत्सवमण्डपश्रीः ॥३४॥

इधर उधर देवमन्दिरों से अलंकृत तथा सुन्दर पन्नगरत्नों से प्रदीप्त उस अभिषेक मण्डप की शोभा उस समय सबके देखने योग्य हो गई ॥ ३४ ॥

दलबलसहितानां दिग्वधूनायकानां
प्रतिदिशमभिषेकः सर्वसम्पद्विशेषः ।
सकलमपि दिगन्तं धर्मभूपाभिषेके
विगतसकलचिन्तं वर्धमानं चकार ॥३५॥

दल बल सहित दिक्पालों का अपनी अपनी दिशाओं में अवस्थान दिङ्मात्र से आए हुए मनुष्यों की चिन्ता को हरता था ॥ ३५ ॥

रूपान्तरमुपयाताःसरिद्वधूनामपीह भर्तारः ।
अभिषेक्तुं स्वयमेनं तत्रागच्छन्नुपायनैः सहिताः ॥३६॥

इतने में रूपान्तर धारण किए हुए चारों समुद्र अनेकविध उपायन लेकर समक्ष में उपस्थित हुए ॥ ३६ ॥

यद्यत्पुष्पं यत्फलं यच्च पत्रं
या या शाखा वल्कलं यच्च मूलम् ।
काले काले कल्पवृक्षप्रभावा-
त्तत्तत्सर्वं तत्र तत्रोपपन्नम् ॥३७॥

अच्छे अच्छे पुष्प, पत्र, फल, शाखा, वल्कल, मूल सभी कल्पवृक्ष की कृपा से ठीक समय पर आकर वहां उपस्थित हुए ॥ ३७ ॥

अवशिष्टमभूद्यद्यत्समयोचितसाधनम् ।
समस्तमपि तत्तत्र चिन्तामणिरपूरयत् ॥३८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

और जो जो उपयुक्त सामग्री शेष थीं उनको चिन्तामणि ने पूरा कर दिया ॥ ३८ ॥

एवमभ्यागतां वीक्ष्य सामग्रीं स्वयमादरात् ।
कर्मठानां कदम्बोऽपि कार्यारम्भमकल्पयत् ॥३६॥

पूजन की सब सामग्री को एकत्र देखकर अब कर्मठ लोग उपस्थित हुए ॥ ३६ ॥

मणिविरचितबहुभागं रम्यचतुष्कं पुराणपुरुषेण ।
धर्माभिषेकसमये विनिर्मितं तत्र सर्वतः प्रथमम् ॥४०॥

सबसे प्रथम विष्णु भगवान् ने अनेक मुक्तामणि-मण्डित चौक पूर कर अपने कर्तव्य-का पालन किया ॥ ४० ॥

सर्ववेदविदां मुख्यः सर्वदेवनमस्कृतः ।
कारयामास कार्याणि ब्रह्मा ब्रह्मासनस्थितः ॥४१॥

चौक पूरा करने के अनन्तर वेदज्ञों में मुख्य ब्रह्माजी कार्यारम्भ करने के लिए स्वयं ब्रह्मासन पर बैठ गए ॥ ४१ ॥

कृत्यारम्भे सर्वतः प्राक्प्रयोज्यं
नित्यं मत्वा विघ्नराजस्य पूजाम् ।
पूजाकृत्यं वेदमन्त्रप्रयोगै-
र्धर्मादेशात्कारयामास वेधाः ॥४२॥

ब्रह्माजी ने अपने आसन पर बैठ कर सबसे प्रथम वेदमन्त्रों से श्री-गणेशजी का पूजन कराया ॥ ४२ ॥

विधाय गणपार्चनं विधिविधानतः कर्मणां
यथाविधि समाप्तये विषयमात्रसन्धानतः ।
सरोरुहसमुद्भवः सकलमातृकापूजनं
क्रमागतमकारयज्झटिति हंसपत्रो मुनिः ॥४३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गणेशजी की पूजा के अनन्तर यथाविधान षोडश मातृकाओं का पूजन कराया ॥ ४३ ॥

नवोपचारैरुपचर्चितानां
नवग्रहाणां परिपूजनार्थम् ।
पुरोहितः सत्वरमेष वेधा-
श्चकार चिन्तां विविधप्रपञ्चाम् ॥४४॥

मातृका-पूजन के अनन्तर सूर्यादि नवग्रहों का यथाविधान पूजन कराया ॥ ४४ ॥

नवग्रहाणां बहुविग्रहाणां
समर्चने पूर्तिमिते विरिञ्चिः ।
क्रमेण हर्षाद्वरुणार्चनस्य
विचिन्तयामास विशिष्टमन्त्रान् ॥४५॥

नवग्रहों की पूजा के अनन्तर वरुणदेव के पूजा के लिए मन्त्रों का आरम्भ किया ॥ ४५ ॥

अथ विरिञ्चिरयं त्रिदिवाधिपं
प्रथममागतमत्र महोत्सवे ।
निगममन्त्रचयेन यथाक्रमं
सपरिवारमलं समपूजयत् ॥४६॥

वरुण की पूजा के अनन्तर सबसे प्रथम दिग्विजय में सहाय देनेवाले इन्द्रदेव का पूजन किया । [ द्रुतविलम्बितं वृत्तम् ] ॥ ४६ ॥

अस्यार्चनानन्तरमप्रमत्तो
हंसासनस्तस्य बभूव विष्णोः ।
समर्चनायां निरतो निसर्गा-
द्विमुक्तिदं यद्भजनं जनानाम् ॥४७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इन्द्रदेव की पूजा के अनन्तर ब्रह्माजी ने मुक्ति के देनेवाले विष्णु भगवान् का पूजन आरम्भ किया ॥ ४७ ॥

अशेषभूभारविधारणेऽपि
य: शेषतामेव बभार भूयः ।
स सर्वशेषात्मकतामुपेतः
स्वयं स्वपूजामगमत्प्रसादात् ॥४८॥

विष्णु पूजा के समाप्त होने पर अशेष भूभारधारणक्षम शेष भगवान् का पूजन ब्रह्मा ने कराया ॥ ४८ ॥

शेषावतारार्चनतः परस्ता-
न्निमन्त्रितं धर्मधराधिपेन ।
सप्तर्षिवृन्दं विधिना विधाता
प्रपूजयामास यथावकाशम् ॥४६॥

शेष भगवान् की पूजा के अनन्तर सप्तर्षि मंडल का ब्रह्माजी ने पूजन कराया ॥ ४६ ॥

एवमर्चनविधौ विनिवृत्ते
देवदौत्यविषये विनियुक्तम् ।
वीतिहोत्रमिह कर्मणि वेधाः
पर्यपूजयदनुज्झितमार्गः ॥५०॥

इस प्रकार देवार्चन के समाप्त होने पर ब्रह्माजी ने वेदी के ऊपर देवदूत अग्नि का मन्त्रपूर्वक पूजन किया । [ स्वागता वृत्तम् ] ॥ ५० ॥

देवेषु धर्मसदने स्वयमागतेषु
भागग्रहाय वहुदूरगतिप्रयासः ।
यस्माददर्शनमगाददतएव तुष्टो
वैश्वानरोऽपि हृदये विशदो बभूव ॥५१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मदेव के यहां देवगणों के साक्षात् विद्यमान होने पर दूर न जाने के कारण अग्निदेव हृदय में बड़े प्रसन्न हुए ॥ ५१ ॥

बहुतरघृतपूरास्वादसञ्जाततृष्णः
प्रबलतरबुभुक्षानिर्गमाच्छान्तचित्तः ।
हुतवह इति नैजं नाम सार्थं प्रकुर्व-
न्नयमपि हृदि मेने युक्तमर्थेन दौत्यम् ॥५२॥

अनेकविध हव्य के आस्वादन से क्षुधा के मिट जाने से शान्तभाव अग्निदेव आज अपने सप्तजिह्वत्व को सफल समझे ॥ ५२ ॥

समस्तवेदोदितमन्त्रभागै-
रनारतं प्रार्पितहव्यभागः ।
धनञ्जयः पूर्णतया तदानीं
प्रसन्नतामाप मदातिरेकात् ॥५३॥

वेद के अनेक मन्त्रों द्वारा प्राप्त हव्यभाग भगवान् अग्नि धर्माभिषेक के समय पूर्ण रूप से प्रमुदित हुए ॥ ५३ ॥

अथ देवगुरुर्बृहस्पति-
र्विजयश्रीसहितस्य भूपतेः ।
अभिषेकमुहूर्तमङ्गलं
हृदि मत्वा निजगाद निर्जरान् ॥५४॥

हवन के समाप्त होने पर बृहस्पतिजी ने विजयश्री सहित धर्मदेव के अभिषेक का समय देखकर इस प्रकार कहा । [ वियोगिनी वृत्तम् ] ॥ ५४ ।

यस्मिन्नस्तमितेऽस्तमेति सकलं विश्वोपकारव्रतं
यस्मिन्नभ्युदितेऽभ्युदेति पुनरप्यानन्दलीलायितम् ।
सर्वेषामपि रक्षकस्य भुवने धर्मस्य तस्यादरा-
दद्यायं समुपस्थितस्त्रिभुवने राज्याभिषेकोत्सवः ॥५५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिसके अस्त होने पर सब कार्य अस्त होते हैं तथा जिसके उदय होने पर सब उदित होते हैं उस विश्वरक्षक धर्मदेव का आज राज्याभिषेकोत्सव उपस्थित है ॥ ५५ ॥

समस्तैरप्यंशैः प्रभवतु यथा भूमिवलये
यथा वा सम्भूयात्प्रतिदिनमनर्थप्रशमनः ।
समृद्धः सर्वस्मिन्मनुजनिचये दीव्यतु यथा
तथा सर्वैर्भाव्यं हरिहरविरिञ्चिप्रभृतिभिः ॥५६॥

इसलिए जिस प्रकार इनका पूर्ण अभ्युदय हो तथा जिस कार्य से इनका बल बढ़े वह कार्य सब को करना चाहिए ॥ ५६ ॥

इत्यादिशत्यमरमात्रगुरौ यथाव-
त्सर्वे प्रसन्नमनसो धृतदिव्यवेशाः ।
सिंहासने लघु निवेश्य मदेन धर्मं
देवाः सुवर्णकलशैः स्नपयाम्बभूवुः ॥५७॥

देवगुरु के इस प्रकार कथन करने पर समस्त देवगणों ने मिल कर धर्मदेव का सिंहासन पर अभिषेक किया ॥ ५७ ॥

कल्पद्रुमः स्वपुष्पैश्चिन्तामणिरप्यनेकविधरत्नैः ।
दुग्धेन कामधेनुर्निजेन तस्याभिषेकमुपचक्रे ॥५८॥

उस समय कल्पद्रुम, कामधेनु और चिन्तामणि ने धर्मदेव के ऊपर पुष्पवृष्टि, दुग्धाभिषेक तथा रत्नवृष्टि का आरंभ किया ॥ ५८ ॥

जाताभिषेके भुवि धर्मदेवे
नितान्तहृष्टा दिविषत्प्रधानाः ।
प्रशस्तनानाविधवाद्यघोषैः
प्रपूरयामासुरनन्तमध्वम् ॥५९॥

धर्मदेव के राज्याभिषिक्त होने पर अत्यन्त प्रमुदित देवगणों ने अनेक प्रकार के बाद्य घोष से आकाश पूर्ण कर दिया ॥ ५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विश्वाभिरामचरितस्त्रिजगत्प्रसिद्धो
धर्मोऽप्यलं सुमनसां परितोषणाय ।
राज्याभिषेकसमये समयोपयुक्ता-
मेवं चकार हृदयेऽत्र विचित्रसन्धाम् ॥६०॥

उधर धर्मदेव ने भी देवगणों के समक्ष अभिषेक कालोचित निम्न-लिखित प्रतिज्ञा की ॥ ६० ॥

यथा भवद्भिः परिरक्षितोऽहं
कलौ समन्तादपचीयमानः ।
तथा सहायो भवतां विपत्तौ
सदा भविष्याम्यहमप्यवश्यम् ॥६१॥

हे देवगणो इस कलिकाल में जिस प्रकार आप लोगों ने मेरी रक्षा की है मैं भी उसी प्रकार समय आने पर आपकी रक्षा करूँगा ॥ ६१ ॥

ये मां समेष्यन्ति विहाय सर्वं
कलौ मनुष्या मयि बद्धभावाः ।
मनीषितार्थोपगमाय तेषा-
महं भविष्यामि सदा सहायः ॥ ६२ ॥

जो मनुष्य इस संसार में सबको छोड़ मेरा आश्रय लेंगे मैं उनके मनोरथों को सर्वदा पूर्ण करूँगा ॥ ६२ ॥

एवमावदति धर्ममहीपे
मोदमानमनसा गुरुणाऽपि ।
पूर्णतामरमनायि तदानीं
प्रस्तुतं यजनकर्म यथावत् ॥६३॥

इस प्रकार धर्मदेव की प्रतिज्ञा समाप्त होने पर बृहस्पति ने भी अपना समयोचित यजन समाप्त कर दिया ॥ ६३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथाप्सरोभिः समथानुकूलं
गन्धर्वविद्याधरकिन्नराणाम् ।
निदेशतः साधु तथा प्रगीतं
यथा न केनाप्यमरेण गीतम् ॥६४॥

अभिषेक सम्बन्धी कार्य के समाप्त होने पर गन्धर्वों के संकेत से अप्सराओं ने गीत गाना आरम्भ किया। जो इस प्रकार है ॥ ६४ ॥

ये भगवन्ननुरागात्ते पदपद्मे भवन्तु भवभीताः ।
कृतनतयो धृतमतयो मा खलु तेषां पुनर्भवो भूयात् ॥६५॥

हे भगवन्! आवागमन के चक्र से पीड़ित जो मनुष्य आपका आश्रय लें उनका भवसागर में बार बार जन्म न हो ॥ ६५ ॥

त्वय्यासक्तजनानां त्वदेकनाम्नामसक्तविषयाणाम् ।
प्रभवतु भगवति भक्तिर्जनार्दने वा महेश्वरे सततम् ॥६६॥

जो मनुष्य आपके अनुगामी हों उनका जनार्दन में अथवा श्रीशङ्कर भगवान् में सर्वदा प्रेम हो ॥ ६६ ॥

परकृतिमुपकृतिमूलां ये बहु निन्दन्ति गर्वमधिगत्य ।
मा भवतु भूमिमध्ये तेषां कीर्तिः कदापि पापानाम् ॥६७॥

उपकारमूलक परकाव्य की जो मनुष्य गर्व में आकर अवहेलना करते हों उनका भूतल में कदापि यश न हो ॥ ६७ ॥

इति विनयसनाथं गीतमाकर्ण्य तुष्टो
नवनवविजयश्रीवर्द्धितश्रीः स धर्मः ।
अमरपुरकुरङ्गीलोचनानामुदारं
हृदयनिहितभावं सम्यगङ्गीचकार ॥६८॥

इस प्रकार भावपूर्ण सङ्गीत सुनकर प्रसन्नचित्त धर्मदेव ने उनकी प्रार्थना सफल करने के लिए "तथास्तु" कह दिया ॥ ६८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्यावश्यककार्यसङ्गतमनोवृत्तीनधर्मद्विषो
दृष्ट्वा देवगणानुपस्थितजनैरामोदितान्तःपुरान् ।
सिंहाङ्कं कलधौतनिर्मितपदं वेत्रासनं भूपति-
र्धर्मः सत्वरमागतक्रमवशादुज्झाञ्चकार स्वयम् ॥६९॥

इसके अनन्तर अत्यावश्यक कार्यों में दत्तमानस धर्मदेव देवगणों को यथास्थान भेजकर अपने कृत्य में तत्पर हुए ॥ ६९ ॥

विलोक्य धर्मं निगमोक्तधर्मे
विधेरनुज्ञावशतः प्रवृत्तम् ।
द्विजन्मनां वैदिकधर्मभाजां
मनः प्रसन्नं स्वयमाविरासीत् ॥७०॥

धर्मदेव को यथोचित कार्य में लगा हुआ देखकर वेदज्ञ ब्राह्मणों का मन अकस्मात् प्रसन्न हो गया ॥ ७० ॥

अस्तङ्गते सवितरि प्रथितप्रतापे
देवाधिदेवजगदीश्वरशासनेन ।
स्वाभीष्टदैवतसमर्चनमानसानां
तत्राभवद्भगवदर्चनवाद्यघोषः ॥७१॥

इतने ही में ईश्वर की प्रेरणा से सायंकाल होने पर निजाभीष्टदेव-पूजा सम्बन्धी बाद्य बजने लगे ॥ ७१ ॥

आनर्च कोऽपि गिरिजारमणं मनुष्यः
पद्मालयारमणमन्यतरः प्रसादात् ।
कश्चित्प्रदोषसमये वचसामधीशां
सर्वात्मना परिचचार कवीन्द्रवर्यः ॥७२॥

इसके अनन्तर कोई शङ्कर की पूजा में तत्पर हो गए, कोई विष्णु की अर्चना करने लगे, कोई सरस्वती की पूजा में प्रवृत्त हुए ॥ ७२ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सकलदुरितमूलोच्छेदनैकप्रचण्डं
नवनवबहुलेखारञ्जनस्विन्नगण्डम् ।
शिरसि निहितनव्यालोकशीतांशुखण्डं
द्रुतमनमदमन्दः कोऽपि तं वक्रतुण्डम् ॥७३॥

कोई भक्तजन विघ्नमात्र के मूलोच्छेदन में समर्थ विचित्र गण्डस्थल भालचन्द्र श्रीगणेशजी का पूजन करने लगे ॥ ७३ ॥

अनेकदिव्याभरणाभिरामां
विनिद्रपङ्केरुहरम्यवासाम् ।
ननाम कश्चिन्नरवाहनस्ता-
मुलूकपत्रामपि तत्र देवीम् ॥७४॥

कोई अनेक सुन्दर भूषणों से अलंकृत कमल पर निवास करनेवाली लक्ष्मीजी का पूजन करते रहे ॥ ७४ ॥

धर्मोऽपि धर्म इति चेतसि संविभाव्य
सान्ध्यं विधिं परिसमाप्य समागतानाम् ।
ब्रह्मेन्द्ररुद्रवरुणाच्युतनिर्जराणा-
मालोकनाय भवनाल्लघु निर्जगाम ॥७५॥

इधर धर्मदेव ने भी अपना धर्म समझ कर सन्ध्या के अनन्तर आए हुए देवगणों का दर्शन करना आरम्भ किया ॥ ७६ ॥

देवमन्दिरविलोकनकृत्ये
दैवतो झटिति पूर्तिमुपेते ।
आगतादरनिवेशितचित्तः
सत्वरं पुनरभूदिह धर्मः ॥७६॥

देवमन्दिरों के दर्शन करने के अनन्तर धर्मदेव आए हुए देवगणों के सत्कार में प्रवृत्त हुए ॥ ७६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येषां येषां यद्यदिच्छानुरूपं
देवादीनामागतानां बभूव ।
भोज्यं तत्तत्सत्वरं कल्पवृक्ष-
स्तेषामग्रे कल्पयामास नव्यम् ॥७७॥

जिस जिस देवता के लिए जो जो पदार्थ अपेक्षित था वही कल्पवृक्ष की कृपा से उनके समक्ष में आकर उपस्थित हुआ ॥ ७७ ॥

निमन्त्रणार्थं पुरतः स्थितायां
महेन्द्रधेनौ भुवमागतानाम् ।
अभूतपूर्वं हृदये निविष्टं
समस्तमिष्टं प्रबभूव पुष्टम् ॥७८॥

निमन्त्रण खिलाने के लिए समक्ष में विद्यमान कामधेनु को देखकर किसका मनोरथ सफलता को प्राप्त नहीं हुआ ॥ ७८ ॥

चिन्तामणौ चिन्तनमात्रतुष्टे
नवीननानाविधरत्नहाराः ।
स्वयं समागत्य नभःप्रदेशा-
दुपागतानामपतन् गलेषु ॥७९॥

चिन्तामणि के प्रभाव से अनेक प्रकार के रत्न हार उत्सव में संगत मनुष्यों के हृदय में स्वयं आकर लगे ॥ ७९ ॥

सम्पूरितेषु जनमात्रमनोरथेषु
धर्मोऽपि वाञ्छितफलप्रदतामुपेतः ।
कल्पद्रुमायितमदर्शयदेकदैव
सर्वानुपस्थितजनान्निगमप्रगीतः ॥८०॥

मनुष्यमात्र के मनोरथ पूर्ण होने पर धर्मदेव ने सबके समक्ष अपने को कल्पवृक्ष सिद्ध कर दिया ॥ ८० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मोत्सवात्प्रतिगतेषु यथावकाशं
कल्पद्रुमादिषु तदेकनिबद्धभावः ।
धर्मोऽप्यधर्मशमनो भुवनं शशास
निष्कण्टकं जगदधीश्वरशासनेन ॥८१॥

उसके अनन्तर धर्म्मदेव की आज्ञा लेकर जब समस्त देवगण अपने अपने स्थान को चले तब उनका स्मरण करते हुए धर्म्मदेव ने भारत में शासन आरम्भ किया ॥ ८१ ॥

धर्मं विवर्द्धयति यो भुवने निसर्गा-
द्धर्मो विवर्द्धयति तं क्रमशस्ततोऽयम् ।
सर्वात्मना भरतभूमिभवैर्मनुष्यैः
सेव्यः समस्तफलदः स्वयमप्रमत्तैः ॥८२॥

संसार में जो धर्म्म की रक्षा करता है धर्म्म उसकी रक्षा करता है ऐसा समझ कर सबको अपना अपना मन धर्म्म में लगाना चाहिए ॥८२॥

बुद्ध्वाऽपि ये बुधवरैरनुगम्यमानं
धर्मं भजन्ति न मुहुर्मुहुरप्रमत्ताः ।
वैवस्वताधिकृतदारुणकष्टपिष्टा-
स्ते सम्भवन्ति भुवने बहुशः प्रमत्ताः ॥८३॥

जो मनुष्य जानबूझ कर भी सनातन धर्म्म का पालन नहीं करते हैं वे यमराज के अतिथि बनकर कष्ट पाते हैं ॥ ८३ ॥

एवं विचिन्त्य हृदये सकलं विहाय
हिंसादिदोषनिचयं विदितात्मतत्त्वैः ।
विश्वाश्रयः शमदमादिगुणैरुपेतो
धर्मो यथाविधि समाद्रियतां पुराणः ॥८४॥

इस बात को अपने मन में विचार कर मनुष्यों को चाहिए कि वे समस्त दुर्गुणों का परित्याग करके एकमात्र सनातनधर्म्म का आश्रय लें ।

इतिश्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये धर्माभिषेकवर्णनं नाम सप्तदशः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अष्टादशः सर्गः

अथ महीमनुशासति धार्मिके
नरपतौ घनपीनपयोधरा ।
ऋतुमती वनितेव वसुन्धरा
जनमनन्दयदुन्नतमानसम् ॥ १ ॥

धर्मदेव के शासन काल में घनपीन पयोधर ऋतुमती स्त्री के समान यह वसुन्धरा मनुष्यों को आनंदित करने लगी ॥ १ ॥

भवति भाग्यवशाद्भुवि यादृशो
नरपतिर्नियमेन तथाविधा ।
वसुमती तदिदं विनिवेद्यते
प्रकृतशासनमेत्य महोदयैः ॥ २ ॥

भूतल में जैसा राजा होता है वैसी ही प्रजा और पृथिवी होती है । इसका प्रत्यक्ष निदर्शन वर्तमान शासन है ॥२ ॥

विजितपापकथे मलिनात्मनां
विदलनाय विनिर्मितयन्त्रणे ।
परिवृढे जगतामशिवं स्वतो
विलयमेति जवादिति दृश्यते ॥३॥

पापियों को दंड देनेवाले राजा के शासन काल में संसार के मंगल नष्ट होते हैं ॥ ३ ॥

बहुविधान्नफलोद्गमनादलं
विगतदैन्यकथे वसुधातले ।
किमधिकं न बभौ सुकृतं तथा
न विलयं प्रययौ बहु दुष्कृतम् ॥४॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनेकविध अन्न, फल, मूलों के उद्भव से दीनता को सर्वथा नष्ट करने वाले धार्मिक राज्य में कौन सा सुकृत नहीं होता है ॥ ४ ॥

नियतकालमुपेत्य यथाक्रमं
समुदितेषु महेश्वरशासनात् ।
ऋतुषु सर्वमिदं जगतीतलं
नवनृपे समगादतिमञ्जुताम् ॥ ५ ॥

अपने अपने नियत समय में यथाक्रम प्रवृत्त हुईं भिन्न भिन्न ऋतुओं में यह समस्त भूमण्डल बड़ा रमणीय प्रतीत होने लगा ॥ ५ ॥

न शलभाः कृषिसस्यमभक्षय-
न्न बहुवृष्टिरनिष्टमचिन्तयत् ।
न च ववौ भुवि गन्धवहोऽधिकं
न भयमाविरभूदनलोद्भवम् ॥ ६ ॥

धर्म के शासनकाल में शलभ कृषि को नष्ट नहीं करते थे, अतिवृष्टि नहीं होती थी तथा वायु और अग्नि का भय नहीं होता था ॥ ६ ॥

जनकदम्बकनाशनतत्परा
बहुविधोपशमप्रलयङ्कराः ।
जगदिदं प्रमदादविशन्न ते
विविधदोषसमुद्भवजा ज्वराः ॥ ७ ॥

संसार को अत्यन्त कष्ट देनेवाले त्रिदोष-जन्य संनिपात आदि ज्वर धर्मराज के राज्य में प्रजा को नष्ट नहीं करते थे ॥ ७ ॥

सजलनीरदमण्डलसङ्गतां
वियति वीक्ष्य बकावलिमुज्ज्वलाम् ।
सहृदयस्य न कस्य समुत्सुकं
समभवद्भुवि मानसमुन्मदम् ॥ ८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नवीन मेघमण्डली के साथ आकाश में उड़ने वाली बकपंक्ति को देखकर किस सहृदय का मन प्रफुल्लित नहीं होता था ॥ ८ ॥

प्रथमवर्षणमोदितमानसाः
सरससर्षपदर्शनलालसाः ।
परिजनेन निजेन कृषीवलाः
सह न कुत्र वनानि सिषेविरे ॥९॥

पहिली वृष्टि के होने से प्रसन्नचित किसान अपने परिवार के साथ कहां पर क्षेत्रों में काम करते हुए नहीं दिखाई पड़ते थे ॥ ९ ॥

भयमभूद्भुवि तस्करसम्भवं
न परवञ्चकतामगमज्जनाः ।
क्व परदारसमाहरणक्रमः
पदमदादनुशासति सन्नृपे ॥१०॥

धर्मराज के राज्य में चोरों का भय नहीं था दूसरे को ठगनेवाले मनुष्य नहीं थे और पराये घर की स्त्री को कोई कुदृष्टि से नहीं देखता था ॥१०॥

दधिविमन्थनघोषमनोहरो
नवनवाज्यसमुत्थितसौरभः ।
तृणकुटीनिवेशितगोकुलो
मुदमलम्भत गोपवधूजनः ॥ ११ ॥

दधि मन्थन करने के कारण अत्यन्त सुन्दर, नवीन माखन की सुगन्धि से सुगन्धित, तृण के कुटीरों में निबद्ध गोकुल गोपवधूसमूह धर्म के राज्य में आनन्द करता था ॥ ११ ॥

अतिथिमागतमीक्ष्य गृहाङ्गणे
मुदमिताः प्रसभं गृहमेधिनः ।
प्रतिगृहं सपर्यस्यमदुः क्रमा-
ज्जलपदे पय एव मनोहरम् ॥१२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घर में आए हुए अतिथि को देखकर प्रसन्न हुए गृहस्थ अतिथि के लिये जल के स्थान में दूध पिलाया करते थे ॥ १२ ॥

निजनिजोचितकर्मपरायणा
निगममार्गनियोजितचेतसः ।
प्रतिपुरं प्रतिघोषमलं बभु-
र्जनवरा जगतीतलसम्भवाः ॥१३॥

अपने अपने वर्ग में तत्पर सनातनधर्म में श्रद्धा रखने वाले मनुष्य प्रत्येक नगर और ग्राम में सानन्द निवास करते थे ॥ ३॥

जगदधीशमुखाज्जननं गता
हुतवहैकसहोदरतामिताः ।
यजनयाजनकर्मविचक्षणा
द्विजवरा भवनेष्वधिकं बभुः ॥१४॥

भगवान् के मुख से उत्पन्न हुए, अग्निके सहोदर, ब्राह्मणगण यजन और याजन आदि कार्यों में सदैव तत्पर रहते थे ॥१४॥

वसुमतीपरिरक्षणहेतवे
भुजयुगादिह याननुपकल्पयत् ।
स भगवान्भुवि ते जनरक्षणे
शिथिलतां न कदापि ययुर्नृपाः ॥१५॥

पृथिवी की रक्षा करने के लिए भगवान् ने जिनको अपने भुज से उत्पन्न किया था वे क्षत्रिय भी अपने कार्य में शिथिल नहीं होते थे ॥१५॥

निगदितो निगमेषु यथाक्रमं
नियतकर्मतया बहुविक्रयः ।
भुवि धनार्जनमात्रपरिश्रमाः
समभवन्निह ते बहुधा विशः ॥१६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेद में जिनके लिए दुग्ध घृत आदि का विक्रय करना लिखा है वे वैश्य भी .खूब धनी होते थे ॥ १६ ॥

द्विजपदार्चनमेव निबोधितं
निगममन्त्रमुखेन महर्षिभिः ।
सुकृतमत्र यथाविधि यत्कृते
पद्भवा अपि ते न जहुः पदम् ॥ १७ ॥

द्विजों की सेवा करना ही जिनके लिए वेदों में नियत है वे पद्ज शूद्र भी अपना कर्त्तव्य नहीं छोड़ते थे ॥ १७ ॥

न परिवर्तनमाविरभूज्जने
विधिनिषिद्धमहो ! निजकर्मणाम् ।
न च गुणानुगवर्णविपर्ययः
पदमदाद्भुवि राघवराज्यवत् ॥ १८ ॥

मनुष्यों में कर्म का परिवर्तन नहीं होता था, न गुण कर्म के आधार पर ही कोई जाति-परिवर्तन मानता था ॥ १८ ॥

अभवदत्र न वर्णविनिन्दको
न विविधाश्रमधर्मविनिन्दकः ।
न कुलदेशजरीतिविनिन्दको
भुवि जनः किल राजनि धार्मिके ॥ १९ ॥

न कोई वर्णव्यवस्था का बिगाड़ने वाला था, न आश्रमोचित, देशाचार तथा कुलाचार का नाश करनेवाला ही था ॥ १ ॥

धृतशिखा विलसत्कटिमेखलाः
क्रमवशादुपवीतविशोभिनः ।
गुरुपदार्पितदेहमनोधनाः
समभवन्भुवि धार्मिकवर्णिनः ॥ २० ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिखासूत्रधारी, कटिबद्धमेखल, हस्त में धृत-दंड द्विजकुमार गुरु के गृहों में जाकर अपनी अपनी शिक्षा ग्रहण करते थे ॥ २० ॥

वनमुपेत्य विहाय गृहस्थितिं
मनुजमात्रहितापि तदृष्टयः ।
मुखभुवो जगदीशसमर्चने
कृतधियो जनजातमभूषयन् ॥ २१ ॥

गृहस्थाश्रम के अनंतर सभी ब्राह्मण बन में जाकर भगवान् की पूजा में अपना मन लगाते थे ॥ २१ ॥

परधने परदारपरिग्रहे
परविनिन्दनकर्मणि तत्पराः ।
समभवन्न हि केऽपि भुवस्तले
मुखभुजोरुपदप्रभवा जनाः ॥ २२ ॥

दूसरे का धन और स्त्री तथा निंदा में तत्पर कोई भी वर्ण उस समय में नहीं था ॥ २२ ॥

मनुजकल्पनमात्रविनिश्चयाः
क्रमविरुद्धमतामतमानिनः ।
न निगमानुगकर्मसु कर्हिचि-
त्पदमदुर्मनुजाः श्रुतभीरवः ॥ २३ ॥

मनुष्यों की कल्पना के आधार पर विद्यमान तथा वैदिक धर्म के सर्वथा विघातक मत प्रवाह उस समय में नाम को भी नहीं थे ॥ २३ ॥

प्रकृतिसिद्धसनातनधर्मगाः
सुजनसम्मतकार्यधृतव्रताः ।
प्रतिपुरं मनुजाः स्वपरिश्रमै-
र्विलयमाश्वनयन्निह कापथम् ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सभी मनुष्य प्रकृतिसिद्ध सनातनधर्म की रक्षा में लगे हुए उसी के अनुसार काम करते थे ॥ २४ ॥

विरचिताः स्वजनेषु महोदयैः
परिषदो निगमागमवादिनाम् ।
प्रतिपुरम्भवनस्थितबालका-
नविरतं निजधर्ममबोधयन् ॥ २५ ॥

प्रत्येक नगर में मनुष्य वेदज्ञों की सभाओं द्वारा अपने अपने बालकों को अपने धर्म का तत्त्व समझाते थे ॥ २५ ॥

विरहितं भुवि धर्मपरायणैः
किमपि नैव पुरं समभूत्पुरा ।
न परवञ्चनमात्रविचक्षणैः
परिवृतं न च पामरभिक्षुभिः ॥ २६ ॥

कोई ग्राम सनातनधर्मी सज्जनों से खाली नहीं था और न कहीं पर भिक्षुक देखने में आते थे ॥ २६ ॥

यजुषि कोऽपि पटुः समभूत्पुरा
द्विजवटुर्भुवि ऋक्षु ततोऽपरः ।
प्रथितसामसु कोऽपि विचक्षणो
विषयमाङ्गिरसं बहुधाऽपठत् ॥ २७ ॥

कोई ब्राह्मण कुमार यजुर्वेद में कृतश्रम था, कोई ऋग्वेद, सामवेद तथा अथर्ववेद का तत्त्वज्ञ था ॥ २७ ॥

विरहितं न पुराणकथाक्रमैः
किमपि गेहमभूद्द्विजजन्मनाम् ।
विविधकाव्यविनोदपरम्परं
सकलमेव बभूव विलक्षणम् ॥२८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राह्मणों का कोई भी गृह पुराण वेद की कथा से शून्य नहीं था। गृह गृह में साहित्य सम्बन्धी आमोद-प्रमोद होता था ॥ २८ ॥

प्रतिपुरं भगवत्पदवन्दनं
शिवपुराणकथापरिकीर्तनम्।
प्रथितभागवतश्रवणामृतै-
रभवदत्र मनोऽपि सुलक्षणम् ॥ २६ ॥

प्रत्येक नगर में भगवत्पूजन, शिवपुराण तथा श्रीमद्भागवत आदि के प्रचार से मनुष्यों का मन निर्मल बना रहता था ॥ २६ ॥

अविरतं बहु रामकथामृतं
प्रतिपदं पिबतां विमलात्मनाम्।
हृदयमन्दिरमेव तदाऽभव-
न्न विमलं किल किन्तु जगत्त्रयम् ॥ ३० ॥

सर्वदा श्रीराम का कथामृत पीने से सज्जनों का केवल हृदय ही नहीं किन्तु समस्त भूमंडल भी पवित्र होता था ॥ ३० ॥

वसुमतीनिलयैर्वसुताङ्गतो
निजजनो यमराज्यमधिश्रितः।
प्रतिदिनं नवकव्यनिवेदना-
दनुमतः प्रददौ जनवाञ्छितम् ॥ ३१ ॥

वसुरुद्रादित्य भाव को प्राप्त हुए यमलोकगत पितृगणों का आशीर्वाद नित्य श्राद्ध करने के कारण मनुष्य प्रतिदिन प्राप्त करते थे ॥ ३१ ॥

हृदयमध्यगतं पतिमालयं
श्रितवती पतिवन्दनतत्परा।
भुवि न का वनिता जनकात्मजा-
चरितमुत्तममादरतेऽन्वगात् ॥ ३२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपने हृदयमंदिर में विद्यमान पतिदेव का पूजन करनेवाली कौन सी स्त्री श्रीजानकीजी का अनुकरण नहीं करती थी ॥ ३२ ॥

विधिवशाद्यदि काऽपि पतिव्रता
गतधवाऽप्यभवज्जगतीतले ।
निजपतिस्मरणेन सदैव सा
समयमत्र समस्तमयापयत् ॥ ३३ ॥

दैवयोग से यदि कोई स्त्री विधवा होती थी वह भी सर्वदा अपने मृत पति का स्मरण करती हुई अपने धर्म का पालन करती थी ॥ ३३ ॥

यतिवशात्परलोकमुपागते
हृदयमन्दिरशायिनि सत्पतौ ।
दहनमेव सहैव समाविश-
न्प्रणयबन्धवशादिह योषितः ॥ ३४ ॥

प्रणय-बंधन के दृढ़ होने के कारण प्रायः स्त्री पति के मरने पर उसके साथ ही चितानल में दग्ध होती थीं ॥ ३४ ॥

सुरभिभूजनकर्मणि सङ्गताः
कुलभवा मनुजा भवनोदरे ।
कृतपदां कृपया सुरभेः सुतां
प्रतिदिनं नियमेन सिषेविरे ॥ ३५ ॥

गोसेवा में तत्पर समस्त जन प्रति दिन अपने अपने गृहों में उपस्थित कामधेनु का पूजन करते थे । ३५ ॥

गुरुजनादरणाज्जगतीतले
यमुदयं समगाद् द्विजसन्ततिः ।
समुदयः स मयाऽपि न शक्यते
निगदितुं भवतान्तु कथैव का ॥ ३६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुरुजनों के आदर से द्विजगण जिस उन्नति पर पहुँचे थे उसका वर्णन करना असंभव है ॥ ३६ ॥

प्रकृतिमात्रमुपेत्य परिस्थितं
जगदधीशमनन्तगुणाश्रयम् ।
गुणगणानुगतो मनुजः कदा
न नितरामभजद् भुवि शङ्करम् ॥ ३७ ॥

व्याप्यव्यापकभाव से सर्वत्र विद्यमान श्रीशंकर भगवान् का कौन मनुष्य भारत में भक्त नहीं था ॥ ३७ ॥

भगवदर्चनवन्दनहेतवे
विविधसुन्दरमन्दिरसन्ततिः ।
निजधनेन न केन विनिर्मिता
भरतभूमिगतेन महीभुजा ॥ ३८ ॥

भारत में एक भी ऐसा क्षत्रिय नहीं था जिसने अपने धन से सुन्दर देवमन्दिर न बनवाया हो ॥ ३८ ॥

अभवदत्र न कोऽपि तथाविधः
प्रथमतो भुवने मनुवंशजः ।
अभजदाशु न यो जगदीश्वरं
प्रकृतिमात्रविपर्ययकारणम् ॥ ३९ ॥

भारतवर्ष में ऐसा कोई भी मनुष्य नहीं था जो सर्वाभीष्टफलप्रद भगवान् का भजन न करता हो ॥ ३९ ॥

दमनदानदयार्थकमद्भुतं
द-द द- इत्युदितं परमात्मनः ।
प्रथयितुं परितो मनुजव्रजे
भरतभूमिरभूत्परमादृता ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दमन, दान, दयार्थक ईश्वरप्रोक्त द-द-द इस शब्द को चरितार्थ करने के लिए यह भारत सर्वदा उदार था। यह आख्यात उपनिषद् में स्पष्ट है ॥ ४० ॥

अभवदत्र न कोऽपि महीपतौ
वसुमतीमनुशासति पापवान् ।
नरवरश्छलकर्मणि तत्परो
न च मृषाकथने कृतनिश्चयः ॥ ४१ ॥

धर्मदेव के शासनकाल में न कोई पापी था, न छली था और न झूठ बोलनेवाला था ॥ ४१ ॥

जनिमगान्न जनोऽत्र तथाविधो
जनपदे निजधर्मसमुन्नतिम् ।
सकललोकहिताय न यः क्रमा-
दनुदिनं प्रतिगेहमचीकरत् ॥ ४२ ॥

धर्म के राज्य में इस भूतल पर एक भी मनुष्य ऐसा नहीं था जो अपने धर्म का विरोध करता हो ॥ ४२ ॥

अभिजनं बहु यो न समुन्नतं
प्रतिपदं प्रकरोति महीपतिः ।
स जननीनवयौवनकाननं
स्वभवनेन भिनत्ति समुन्नतम् ॥ ४३ ॥

जो राजा जन्म लेकर अपना राज्य उन्नत नहीं करता है वह केवल नाममात्र का राजा कहा जा सकता है ॥ ४३ ॥

सुतवती किल तेन मनस्विना
भगवती जननी भुवि राजते ।
भवति यत्तनयो निजधार्मिक-
ध्वनिजयोन्नतचित्तपरम्परः ॥ ४४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वही माता संसार में पुत्रवती मानी जाती है जिसका पुत्र धर्मकार्य में सब से अग्रगण्य हो ॥ ४४ ॥

अभवदत्र कदापि न भारते
निजमहीपविरुद्धमनोरथा ।
परमभक्तिमती नृपतेः प्रजा
सततमेव बभूव वशंवदा ॥ ४५ ॥

इस भारतभूमि में ऐसा कोई भी समय नहीं हुआ जिसमें प्रजा अपने राजा के साथ विरोध रखती हो ॥ ४५ ॥

भवतु भाग्यवशेन विदेशजो
नरपतिर्यदि वा निजदेशजः ।
परममुष्य निदेशनमादरा-
दिह भवेन जनेन सदाऽऽदृतम् ॥ ४६ ॥

राजा अपने देश का हो अथवा विदेशज हो, परन्तु उसकी आज्ञा का पालन करना ही भारत के मनुष्यों ने सर्वदा अपना धर्म समझा ॥ ४६ ॥

भरतभूवलये स पराक्रमी
भवति भाग्यवशेन महीपतिः ।
विगतजन्मनि यो नितरामभू-
द्विविधपुण्यपरम्परया वृतः ॥ ४७ ॥

भारतवर्ष में वही सम्राट् माना जाता है जिसने पूर्व जन्म में अनेक प्रकार का पुण्य संचय किया हो ॥ ४७ ॥

नृपतिरेव पिता परिरक्षणा-
द्भवति मातृगुणोऽपि स भूपतिः ।
निगरणाद् गुरुताऽपि समाश्रय-
त्यनुपदं किल तं पृथिवीपतिम् ॥ ४८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पालन करने से पिता, मान करने से माता, शिक्षा देने से गुरु, यह तीनों धर्म राजा के अन्यत्र कहीं नहीं घटते हैं ॥ ४८ ॥

हुतवहेन समः स महीतले
भवति वायुवदुन्नतमर्दनः ।
स भरणाज्जगतां पृथिवीपति-
र्निगममार्गगतैः परिगीयते ॥ ४९ ॥

अग्नि के समान तेजस्वी, वायु के समान बलवान्, पृथिवी के समान शक्तिशाली, राजा ही होता है ॥ ४९ ॥

सकलदिक्पतिदत्तकलाश्रया-
त्समुदितोन्नतदिव्यगुणप्रभः ।
भवति भारतभूवलये नृपो
य इह तापयति स्ववशङ्गतान् ॥ ५० ॥

अष्टदिक्-पालों के अंश से समुत्पन्न राजा दैवी शक्ति के आश्रय से भारत में सम्राट् बनकर प्रजा का शासन करता है ॥ ५० ॥

यमकलाऽनुगमाद्यदि दैवतः
क्वचिदयं प्रभवेदतिदुःसहः ।
न तदुदग्रफलं भुवि भूपतेः
प्रथितदण्डधरस्य विचेष्टितम् ॥ ५१ ॥

यमराज का भी अंश राजा में रहता है, इस कारण यदि राजा कभी कभी कष्ट भी दे तो उसको राजा का दोष न समझ कर यमराज का समझना चाहिए ॥ ५१ ॥

तपति सूर्यवदेष भुवस्तले
नरपतिः परिवर्धयति स्वयम् ।
पदगतानुपमर्दयति क्वचि-
त्क्षतिभयानिति नित्यमवेक्ष्यते ॥ ५२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा भूतल में सूर्य के समान सबको तपाकर मेघ के समान सबको बढ़ाता भी है, और किसी किसी को सर्वथा जला भी देता है ॥ ५२ ॥

विरहिते नृपतेरनुशासना-
द्भवति भूवलये समुपद्रवः ।
प्रबलभूपसमाक्रमणादिभि-
र्मनुजमात्रमतीव निपीडितम् ॥ ५३ ॥

भूतल में राजा के न रहने पर अन्य देश के राजाओं का आक्रमण होता है जिससे बड़ा उपद्रव मचता है ॥ ५३ ॥

नृपतिरेव सदा परिकीर्त्यते
निगममन्त्रशतेन महीपतिः ।
विरहिता किल तेन यथायथं
भवति भूमिरियं विधवा स्वतः ॥ ५४ ॥

वेदों के अनेक मंत्र राजा को पृथिवी का पति मानते हैं, इस कारण राजा के बिना पृथिवी विधवा सी हो जाती है ॥ ५४ ॥

अतिभयङ्करशासनपीडिता-
नवति यो निजपुत्रकलत्रवत् ।
स धरणीपतिरत्र धरातले
सकलराज्यसुखं चिरमश्नुते ॥ ५५ ॥

जो राजा कष्टपीड़ित प्रजा को पुत्र के समान पालता है वही समस्त राज्य के सुखों का चिरकाल तक उपभोग करता है ॥ ५५ ॥

असहयोगकथा न भुवस्तले
कथमपीह भवत्यतिशर्मणे ।
नरपतेः सहयोग उदीरितः
प्रतिपदं सकलेष्टफलप्रदः ॥ ५६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा के साथ असहयोग करना कदापि सुखप्रद नहीं होता है, उस के साथ तो सर्वदा सहयोग ही कल्याणकारक है ॥ ५६ ॥

दशनमध्यगता रसना यथा
प्रतिपदं सहयोगमपेक्षते ।
भुवि तथैव वशीकृतसाधना
जनततिर्निजभूपतिशासनम् ॥ ५७ ॥

दाँतों के बीच में रहनेवाली जिह्वा जिस प्रकार दाँतों से सर्वदा सहयोग रखती है उसी प्रकार राज्य के भीतर रहकर मनुष्यों को भी राजा से सहयोग ही रखना पड़ता है ॥ ५७ ॥

अनुचितं सह भोजनमिच्छता
बलवता कवलस्य यथा बलम् ।
वशमितस्य तथैव महीपते-
र्भुवि जनस्य विरुद्धमताश्रयः ॥ ५८ ॥

जिस प्रकार भोक्ता के समक्ष में कवल का अभिमान करना व्यर्थ है उसी प्रकार राजा के समक्ष में प्रजा का अभिमान व्यर्थ है ॥ ५८ ॥

इति समस्तमराजकताभय-
प्रशमनाय मया यदुदीरितम् ।
तदिदमस्तु रसादुभयोः कृते
शिवकरं विपदः शमने क्षमम् ॥ ५९ ॥

यह बात हमने अराजकता का भय मिटाने के लिए कही है, जो राजा और प्रजा दोनों के लिए कल्याणकारक है ॥ ५९ ॥

प्रथितधार्मिकभूपतिशासनं
भवति भाग्यवशेन भुवस्तले ।
निजमनस्यवधार्य जनैरिदं
प्रतिदिनं क्रियतां तदुपाश्रयः ॥ ६० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धार्मिक राजा का शासन बड़े भाग्य से प्रजा को मिलता है, इस बात को समझ कर सभी मनुष्य सनातन धर्म की आज्ञा का पालन करें ॥ ६० ॥

उभयलोकसुखं समवाप्यते
जगति धार्मिकभूपतिशासने ।
निजनिजाभ्युदयोपगमात्परं
श्रयति मोक्षमपीह जनव्रजः ॥ ६१ ॥

राजा के धार्मिक होने पर प्रजा को दोनों लोकों का सुख मिलता है, इसी को रूपांतर में अभ्युदय और निःश्रेयस भी कहते हैं ॥ ६१ ॥

कीदृशी भवति धार्मिके नृपे
भारतीयजनभाग्यपद्धतिः ।
एतदेव विनिवेदितुं मया
धर्मराज्यमिदमत्र वर्णितम् ॥ ६२ ॥

धार्मिक राजा के राज्य में भारतीय जनों का भाग्य कैसे उदित होता है, यही बतलाने के लिए हमने धर्मराज्य का वर्णन किया है ॥ ६२ ॥

तत्प्रसङ्गवशतस्तदन्तरे
यत्तथाविधविचारवर्णनम् ।
तन्निबोधयितुमेव केवलं
वर्तमानसमयस्थितान्नृपान् ॥ ६३ ॥

प्रसंगवश धर्मराज्य का वर्णन करते हुए हमने जो उस समय का व्यवहार बताया है वह वर्तमान समय के राजाओं के लिए कल्याणकारक है ॥ ६३ ॥

पक्षपातमपहाय भारते
भारतीयमनुजैर्यथा कृतम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताद्दगेव परिदर्शितं मया
धर्मशास्त्रमधिकृत्य शासनम् ।। ६४ ।।

भारत के प्राचीन राजाओं ने जिस प्रकार पक्षपात छोड़कर भारत में राज्य किया है,, वैसा ही मैंने यहाँ दिखाया है ॥ ६४ ॥

वर्त्तमानसमये यथा पुन-
स्तत्प्रवृत्तिरिह भारते भवेत् ।
ताद्दगेव मनुजैर्विधीयता-
मेतदेव मम हृद्गतं मतम् ।। ६५ ।।

वर्तमान समय में धार्मिक राज्य जिस प्रकार भारत में फिर हो वही कार्य भारतीय मनुष्यों को करना चाहिए, यही हमारा हार्दिक निवेदन है ॥ ६५ ॥

इति श्रीमदखिलानन्दशर्म्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये धर्मराज्यवर्णनं नामाष्टादशः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकोनविंशः सर्गः

अथ प्रजारञ्जनदत्तमानसो
गुणोन्नतो धर्ममहामहीपतिः ।
समस्तलोकाभ्युदयैकसाधनं
निबोधयामास जनानुपस्थितान् ॥ १ ॥

इसके अनंतर प्रजा के रंजन में दत्तमानस धर्मदेव ने संसारमात्र के कल्याण के लिए अपना कथन इस प्रकार आरंभ किया ॥ १ ॥

महालयानन्तरमात्मसम्भवो
निसर्गतः सत्त्वगुणप्रतिष्ठितम् ।
जगद्विभूत्यै कुलमेकमुत्तमं
द्विधा विधायात्मनि विस्मितोऽभवत् ॥ २ ॥

महाप्रलय के अनंतर ब्रह्माजी ने स्वभाव से सत्वगुण में प्रतिष्ठित एक कुल को संसार का काम चलाने के लिए दो विभागों में विभक्त किया ॥ २ ॥

तयोर्निधायान्यतमे यथाक्रमं
हविः प्रशस्तञ्जगतां विभूतये ।
तदुत्तरे मन्त्रमयं ऋचाश्चयं
जगत्प्रपञ्चेषु विरिञ्चिरक्रमीत् ॥ ३ ॥

उनमें से एक में यथाक्रम हवि रखकर दूसरे में मंत्रमय वेद ब्राह्मण स्थापित किया । तदनंतर विधाता ने संसार के अन्य कार्यों में पदार्पण किया । [ ब्राह्मणाश्चैव गावश्चेति प्राक्तनं पद्यमत्रोह्यम् ] ॥ ३ ॥

द्विधा कृते तत्र कुले यदादिमं
दिवौकसां प्रीतिकरं निगद्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निसर्गतस्तत्सुरभेरनुत्तमं
कुलं यदद्यातितरां विषीदति ॥ ४ ॥

दो विभागों में विभक्त उस कुल में देवताओं का प्यारा जो सर्वोत्तम कहा जाता है वह गोवंश है जो आजकल बड़े संकट में पड़ा हुआ है ॥ ४ ॥

न यावदस्योत्तमसौख्यजन्मनः
कुलस्य भूमौ भविताऽभयोदयः ।
क्व तावदानन्दपरम्परोदयः
कुले जनानां विधिरप्यहोऽदयः ॥ ५ ॥

समस्त सुखों के देनेवाले इस गोवंश का जब तक प्राण रक्षा के लिए उद्यम न होगा तब तक सुख प्राप्त न होगा और ईश्वर की भी सुदृष्टि तब तक भारत पर न होगी ॥ ५ ॥

विभूतिरेषा भुवनेऽस्ति भूभुजां
विशां प्रसिद्धं धनमेतदद्भुतम् ।
अनन्तसर्वस्वमिदं महात्मनां
मुखोद्भवानां निगमेन वर्णितम् ॥ ६ ॥

संसार में यह गोवंश राजाओं के लिए अतुल संपत्ति है, प्रजाओं के लिए और खासकर वैश्यजाति के लिए यही दिव्य धन है, ब्राह्मणों का तो सर्वस्व ही यह गोवंश है ॥ ६ ॥

दिवौकसां प्रीतिकरो पदे पदे
स्वधाजुषां कव्यकलापसम्भवैः ।
प्रतर्पयित्री निगमानुमोदित-
द्युलोकमार्गानुगतावियं क्षमा ॥ ७ ॥

देवगणों के लिए हव्य और पितृगणों के लिए कव्य देनेवाली यही गौ मरने के अनंतर मनुष्यों को स्वर्ग के मार्ग से ले जाकर स्वर्ग में

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पहुँचानेवाली है इस बात को [ प्रजानत्यध्न्ये जीवलोकम् ] यह वेद मंत्र कहता है ॥ ७ ॥

इयं स्वसाऽऽदित्यकुलस्य गीयते
सुता वसूनाञ्जननी जगत्त्रये ।
मतास्ति रुद्राभिधदेवमानिनां
रसातलस्थानजुषां सहोदरी ॥ ८ ॥

यह गौ आदित्यों की स्वसा है, वसुओं की दुहिता है, रुद्रों की माता है, नागों की सहोदरी है, इस बात को [ माता रुद्राणां ] यह वेद मन्त्र कहता है ॥ ८ ॥

इमामधिश्रित्य पयस्विनोत्तमां
दिवौकसः स्वर्गजुषोऽपि भूतले ।
वसन्ति नित्यं विनिविष्टचेतसो
वदत्यथर्वाभिधवेद ईदृशम् ॥ ९ ॥

सर्वाङ्ग सुन्दरी इस गौ को प्राप्त होकर समस्त देवगण भूतल में आकर निवास करते हैं, यह बात अथर्ववेद के [९।७।२५] सूक्त में कही है ॥ ९ ॥

प्रजापतिः शृङ्गपदं मनोरमं
यमः कृकाटं सुरभेः समाविशत् ।
ललाटमग्निर्मघवा शिरःस्थलं
मरुद्गणादन्तपदं प्रपेदिरे ॥ १० ॥

प्रजापति शृंग में आकर निवास करते हैं, यम कृकाट में, अग्नि मस्तक में, इंद्र शृङ्ग में, मरुद्गण दंतपंक्ति में निवास करते हैं ॥ १० ॥

ककुत्पदं देवगुरुः समादरा-
दशिश्रियत्तद्गतमंससमुत्तमम् ।
क्रमेण मित्रावरुणावगच्छतां
नितम्बदेशं मुखबाहुसम्भवौ ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवगुरु बृहस्पति ककुद में, मित्रावरुण स्कंध देश में, ब्राह्मण और क्षत्रिय दोनों नितम्बों में आकर निवास करते हैं ॥ ११ ॥

निपीतहाला रसनामुरःस्थलं
मनः सचन्द्रं धिषणा यकृत्पदम् ।
प्रशस्तमूधः प्रविवेश वारिद-
स्तनालयं वेदमितः पयोनिधिः ॥ १२ ॥

विद्युत् जिह्वा में, चन्द्रमा नाभि में, वह्नि यकृद्भाग में, मेघमण्डल ऊधः प्रदेश में, चारों समुद्र चारों स्तनों में प्रविष्ट होकर निवास करते हैं ॥ १२ ॥

नवीननानाविधसस्यविग्रहो
निशाकरोऽस्याः सुरभेरनारतम् ।
प्रसादनाय प्रसभं पदे पदे
विचेष्टते कर्त्तुमहो ! पदग्रहम् ॥ १३ ॥

इसी गौ को प्रसन्न रखने के लिए चन्द्रमा अनेक प्रकार के तृणों में प्रविष्ट होकर पद पद में इसके चरण छूता हुआ सर्वदा अगाड़ी रहता है ॥ १३ ॥

विलोक्यते यत्किमपीह भूतले
जनैश्चरं वाऽप्यचरं पुरोगतम् ।
तदेकमस्याः सुरभेर्विचेष्टितं
वदत्यदो वेदगतो ऋचाश्चयः ॥ १४ ॥

कहां तक कहें ! संसार में जो कुछ चर अथवा अचर मनुष्यों को दीखता है वह सब इस गोवंश का ही एकमात्र प्रताप है इस बात को वेद के अनेक मंत्र स्वयं कह रहे हैं ॥ १४ ॥

इयं मुहुः कामदुघा जनव्रजे
तनोति वंशानभिपूजिता सती ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ददाति कामानखिलानलङ्कृता
गृहे गृहे होमविधिप्रसाधनैः ॥ १५ ॥

समस्त कामनाओं की देनेवाली यह गो सर्वथा नष्टवंश पुरुषों का भी वंश चला देती है और होम के साधनों द्वारा घर घर में कल्याण करती है ॥ १५ ॥

न यस्य गेहे जननीरिवापरा
समस्तसम्पत्प्रतिपत्तिसाधनम् ।
चकास्ति धेनुर्गृहिणीभिरादृता
न शर्मणे तद्‌ गृहमत्र कल्पते ॥ १६ ॥

जिस मनुष्य के गृह में माता के समान सुख देनेवाली जगज्जननी गौ गृह की स्त्रियों के द्वारा पूजा को प्राप्त नहीं होती है उसका गृह कल्याणमय नहीं रहता है ॥ १६ ॥

शपत्यजस्रं बहु दुःखपीडिता
जनं यमेषा सुरभिः पदे पदे ।
विनाशमाप्नोति पदोपसङ्गतं
स वंशवैधुर्यवशेन चिन्तितः ॥ १७ ॥

जिसके गृह में सेवा के अभाव से गौ दुःखित होकर शाप देती है वह मनुष्य कितना ही बड़ा क्यों न हो, अंत में समूल नष्ट हो जाता है ॥ १७ ॥

विवस्वतो वंशमणिः प्रमादतो
यदाऽभिशप्तः सुरलोकवर्त्मनि ।
गवा दिलीपो विमतप्रदक्षिणा-
स्तदा सुतार्थी समगाद्‌ गुरोर्गृहम् ॥ १८ ॥

सूर्यवंश के प्रसिद्ध राजा दिलीप स्वर्ग के मार्ग में आती हुई कामधेनु को प्रमाद से प्रणाम न करते हुए उसके द्वारा शप्त होकर अंत में पुत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

के लिए वसिष्ठ के आश्रम में पहुँचे। यह बात इतिहास में प्रसिद्ध है ॥ १८ ॥

निदर्शनं भूमितलेऽतिविश्रुतं
गवां प्रसादस्य न केन लभ्यते।
जनेन यद्राघवपूर्वजोद्भव-
क्रमेण सर्वत्र बलादुपस्थितम् ॥ १९ ॥

भगवान् श्रीरामचन्द्रजी के पूर्वज राजा रघु गौ के प्रसाद से ही संसार में प्रकट हुए यह बात गो-सेवा के फल-स्वरूप में प्रत्यक्ष उदाहरण है ॥ १९ ॥

मदोद्धतो गाधिसुतस्तपोवने
विलोक्य राजोचितभोगसम्पदम्।
वसिष्ठधेनोः कृपया यदब्रवी-
त्तदद्य सर्वैरनुगम्यतां जनैः ॥ २० ॥

मदमत्त विश्वामित्र वसिष्ठ जी के आश्रम में कामधेनु की कृपा से राजोपभोग्य पदार्थों को प्राप्त होकर अंत में जिन वाक्यों को कह गए वे रामायण के वाक्य सब को स्मरण रखने चाहिए ॥ २० ॥

सहस्रबाहुर्जमदग्निरक्षितां
यदाहरद् बाहुबलोपदर्पितः।
फलं तदानीं किमभूदिति स्फुटं
विचार्य वाच्यं सुरभेरनुग्रहात् ॥ २१ ॥

महर्षि जमदग्नि के आश्रम में विद्यमान कामधेनु को मदोद्धत सहस्रार्जुन जब छीनने के लिए उद्यत हुआ तब गौ के शाप से उसको क्या दंड मिला ? महाभारत पढ़िए ॥ २१ ॥

गवां कुलं कौरवनन्दनो यदा
विराटगोपादहरन्मदोद्धतः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदाऽर्जुनो यन्निजगाद भारते
विलोक्यतां तत्समयोचितं वचः ॥ २२ ॥

मदोद्धत दुर्योधन ने जब विराट नगरी से गोधन का अपहरण कराया तब महारथी अर्जुन ने उनकी रक्षा करते हुए जो कुछ कहा वह समयानुकूल वचन याद रखिए ॥ २२ ॥

यदून्विदूनानवलोक्य माधवो
यदब्रवीद्धार्मिकभावसङ्गतम् ।
निरीक्ष्यतां भागवते तदुत्तमं
निरूपितं द्वीपभवेन सूरिणा ॥ २३ ॥

द्वारिकापुरी में यदुवंश का सर्वनाश होते देख भगवान् श्रीकृष्णचंद्र जी ने जो वचन श्रीमद्भागवत के १२ स्कंध में कहे हैं उनका मनुष्यमात्र को स्मरण करना चाहिए ॥ २३ ॥

समस्तमारादितिवृत्तमीदृशं
विचार्य चेतस्यवधार्य तत्परम् ।
स्वधर्ममत्रत्यजनैर्विधीयतां
बलेन गोरक्षणमात्मरक्षणम् ॥ २४ ॥

इन सब पुराने इतिहासों को स्मरण में रखते हुए मनुष्यों को उचित है कि वे अपनी रक्षा के लिए सब से प्रथम गोरक्षा पर ध्यान दें ॥ २४ ॥

स्वभावजं यन्निजगाद माधवो
मदेन गीतासु विशङ्कृते कृतम् ।
स्वधर्म इत्येव विचार्य तत्सदा
विधीयतां धेनुकुलस्य रक्षणम् ॥ २५ ॥

भगवद्गीता में भगवान् ने गोरक्षण वैश्यों के लिए स्वभावज कर्म बताया है इसलिए वैश्यों को उचित है कि वे गोरक्षा को अपना धर्म समझ कर भगवान् के आदेश का पालन करें ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निजप्रजारञ्जनमुख्यसाधनं
विचार्य चित्ते सुरभिप्रवर्धनम् ।
समस्तभूपालगणैः स्वशासने
सदैव गोरक्षणमेकमीक्ष्यताम् ॥ २६ ॥

अपनी प्रजा की रक्षा के लिए गोरक्षा को मुख्य साधन समझ कर भारत के राजाओं को भी उचित है कि वे अपने अपने राज्य में गोरक्षा पर विशेष दृष्टि दें ॥ २६ ॥

निजान्वये वंशपरम्पराऽऽगतं
प्रधानभूतं निगमागमस्थिरम् ।
शिवं तपो यर्हि निरीक्षितुं मन-
स्तदा नियोज्यं गवि तन्मुखोद्भवैः ॥ २७ ॥

ब्राह्मणों को भी उचित है कि यदि अपने कुल में वेदशास्त्र-प्रतिष्ठित ब्रह्म तेज को सुदृढ़ रखना चाहें तो वे भी अपना मन गोरक्षा की ओर लगा दें ॥ २७ ॥

न धेनुरक्षाविरहे जनस्थिति -
र्न धेनुरक्षाविरहे धनस्थितिः ।
न धेनुरक्षाविरहे बलस्थिति-
र्विलोक्यतामाशु जगत्परिस्थितिः ॥ २८ ॥

गोरक्षा के बिना संसार में न जनस्थिति रह सकती है न धनस्थिति ? इन दोनों के अभाव में बलस्थिति कहाँ ? इसलिए जगत् की परिस्थिति पर सब को ध्यान देना चाहिए ॥ २८ ॥

समस्तमेतन्मनुजानुपस्थिता-
न्निबोधयामास स नन्दनन्दनः ।
स्वयं विधाय व्रजभूमिमण्डले
पुराऽत्र गोचारणकर्मणि स्थिरः ॥ २९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोपालन तथा गोचारण करते हुए व्रजमण्डल में इस बात को श्री कृष्णचन्द्र जी ने स्वयं उदाहरण बनकर संसार के समस्त मनुष्यों को इसका महत्त्व बताया है ॥ २९ ॥

करेण गोवर्धनशैलमेकदा
द्रुतं समुत्थाप्य गवामुपस्थितम् ।
कुलं मुदाऽरक्षदनन्तविक्रमो
हरिः किमेतन्न जनैर्विचार्यते ॥ ३० ॥

इन्द्र के रुष्ट होने पर भगवान् ने स्वयं अपने ऊपर गोरक्षा का भार देखते हुए उस समय गोवंश के उद्धारार्थ गोवर्द्धन पर्वत को उठाया था यह बात जगत्-प्रसिद्ध है ॥ ३० ॥

यदस्ति भक्तिर्भगवत्पदाम्बुजे
मनः प्रसक्तं यदि शङ्करार्चने ।
विहाय सर्वं सुरभेस्तदाऽवने
परानुरक्तिः क्रियतां भुवि स्थितैः ॥ ३१ ॥

यदि आप भगवान् श्रीकृष्णचन्द्रजी के अनन्य भक्त हैं, यदि आप भगवान् श्रीशंकरजी के अनन्य उपासक हैं तो सब काम छोड़कर सबसे प्रथम गोरक्षा पर ध्यान दीजिए ॥ ३१ ॥

विना जगत्यत्र गवामुपासनां
कृषीवलानां कृषिकर्म सेत्स्यति ।
ऋते कृषिं नान्नचयः क्व तं विना
तदेकमुख्यं मनुजादिजीवनम् ॥ ३२ ॥

संसार में गोरक्षा के बिना किसानों का काम न चलेगा, कृषि के बिना अन्न न होगा, अन्न के अभाव में सब प्राणी मर मिटेंगे इस कारण गोरक्षा प्रधान कर्त्तव्य है ॥ ३२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथाऽन्यदेशेषु कृषिः प्रवर्तते
विनाऽपि गोवत्सयुगं न भारते।
तथा कलाकौशलजेन कर्मणा
प्रधानमस्मादिह धेनुरक्षणम् ॥ ३३ ॥

जिस प्रकार अमेरिका आदि देशों में कल से हल चलता है वैसा भारत में नहीं चलता, यहां तो समस्त कृषि कर्म गोवंश पर ही निर्भर है इस कारण सब को गोरक्षा में अपना मन लगाना चाहिए ॥ ३३ ॥

विधीयतामत्र कृषिर्न देवनं
तदेकलब्धेन धनेन रक्षणम्।
स्वपोष्यवर्गस्य वदत्यदः स्वयं
प्रसिद्धऋग्वेदगतो मनुब्रजः ॥ ३४ ॥

जगत् में जुआ मत खेलो, कृषि करो, कृषि-प्राप्त धन से अपनी स्त्री और गौवंश की रक्षा करते हुए आनंद करो, यह बात [ अक्षैर्मा दीव्यः ] यह वेदमंत्र कह रहा है ॥ ३४ ॥

विधेरनुज्ञामधिगत्य ये नराः
कृषिं न कुर्वन्ति न चापि रक्षणम्।
गवामवश्यं प्रपतन्ति ते मुहु-
र्दरिद्रताजन्यसुदुःखसागरे ॥ ३५ ॥

वेद की आज्ञा होने पर भी जो मनुष्य कृषि और गोरक्षा में मन नहीं लगाते हैं वे दरिद्र होकर अवश्य कष्ट पाते हैं। वेद की यह आज्ञा मनुष्य-मात्र के लिए है ॥ ३५ ॥

जनैरवश्यं भवनेष्वतः सदा
निजेषु गोपालनकर्म वैदिकम्।
विधीयतामत्र भवे न सम्भवे-
द्यथा मुहुः कष्टपरम्पराऽऽगमः ॥ ३६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इन सब बातों पर ध्यान देकर प्रत्येक मनुष्य को अपने अपने स्थान पर एक एक गौ रखनी चाहिए जिससे कष्ट न हो और वेदाज्ञा का पालन भी हो। भारत में इस समय २२ करोड़ हिन्दू है और ३ करोड़ गौ हैं। मनुष्यो! उठो! गोवंश की रक्षा करो ॥ ३६ ॥

इति प्रशस्तं निजदेशभूतये
निबोधयन्भारतवासिनो जनान्।
स धर्मदेवः पुनराह भूतल-
प्रसिद्धसामाजिकरीतिशोधनम् ॥ ३७ ॥

अपने देश के कल्याणार्थ धर्मदेव ने सभा में उपस्थित सभ्यों के समक्ष इतना कहकर सामाजिक संशोधन के विषय में फिर इस प्रकार कहा ॥ ३७ ॥

न मानवैर्धार्मिकरीतिशोधनं
कदापि कार्य्यं निजबुद्धिभेदतः।
यतोऽस्ति तेषान्नहि कोऽपि निश्चय-
श्चिराय चेतस्यनुभूततद्गुणः ॥ ३८ ॥

मनुष्य धार्मिक रीति में कोई संशोधन उपस्थित नहीं कर सकते हैं! क्योंकि वे अल्पज्ञ हैं! बुद्धि-भेद से उनका कोई कार्य चिरकाल तक नहीं ठहर सकता है ॥ ३८ ॥

विधिप्रदिष्टं ऋषिभिः प्रदर्शितं
मुनिप्रयुक्तं विबुधैरनुष्ठितम्।
विहाय मार्गं न निजेन चेतसा
जनैः प्रगन्तव्यमिति व्यवस्थितिः ॥ ३९ ॥

मनुष्यों को चाहिए कि वे वेदप्रतिपादित ऋषि-प्रदर्शित मुनियों द्वारा प्रयुक्त और विद्वदनुष्ठित मार्ग को छोड़ कर अपने मन से कदापि कोई मार्ग निश्चित न करें ॥ ३९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विहाय यः शास्त्रविधिं प्रवर्तते
मनुष्यजन्मा भुवि कामकारतः ।
न याति सिद्धिं स कदापि नो सुखं
पराङ्गतिञ्चापि न याति मन्दधीः ॥ ४० ॥

जो मनुष्य अपनी इच्छा से शास्त्रविधि का उल्लंघन करके काम करता है उसको कार्य में सिद्धि प्राप्त नहीं होती है, सुख नहीं मिलता है, और उत्तम गति भी प्राप्त नहीं होती है ॥ ४० ॥

अतः समस्तास्वपि धर्मरीतिषु
प्रधानभावेन विचार्य मानवैः ।
समस्तशास्त्रोपचयं यथाक्रमं
तदुक्तधर्मोऽविरतं निषेव्यताम् ॥ ४१ ॥

इसलिए समस्त धार्मिक तथा सामाजिक विचारों में मनुष्यों को शास्त्राज्ञा का ही पालन करना कल्याणकारक है ॥ ४१ ॥

निकृष्टजातीयजनैः सह द्विजै-
र्न वर्तनीयं भुवि शास्त्रनोदनात् ।
कदापि यस्मात्किल ते निसर्गतः
कपूयभावोपगता निदर्शिताः ॥ ४२ ॥

निकृष्ट जाति के मनुष्यों के साथ बैठकर धार्मिक जनों को कोई व्यवहार नहीं करना चाहिए क्योंकि वे स्वभावतः कपूय हैं, यह बात धर्मशास्त्र तथा उपनिषदों में लिखो है ॥ ४२ ॥

पुलिन्दचर्मम्नकिरातनापित-
श्वपाककैवर्तनिषादमागधाः ।
नटावृताम्बष्ठमुखाः स्वभावतो
निकृष्टजातीयजनाः प्रकीर्तिताः ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुलिंद, चमार, किरात, नापित, श्वपाक, कैवर्त, निषाद, मागध, नट, आवृत, अंबष्ठ आदि जातियाँ मनु आदि धर्मशास्त्रों में स्वभावतः निकृष्ट मानी हैं ॥ ४३ ॥

प्रशस्तनानाविधशिल्पकौशल-
प्रसाधनैर्ये मुखबाहुजानुजान् ।
प्रतोषयन्ति स्वगतेन कर्मणा
त एव सर्वेऽपि भवेऽत्र कारवः ॥ ४४ ॥

अनेक प्रकार के सुन्दर सुन्दर शिल्पों द्वारा जो द्विजों की सेवा करते हैं वे रथकार, सुवर्णकार, लोहकार आदि शास्त्रों में "कारु" शब्द से कहे गये हैं ॥ ४४ ॥

न तैः समं भोजनमाचरेद्द्विजो
न संवसेत्तैः सह नापि संविशेत् ।
न बुद्धिभेदं जनयेदनापदि
स्वधर्मरक्षानिरतो जनः क्रमात् ॥ ४५ ॥

ब्राह्मण, क्षत्रिय और वैश्यों को चाहिए कि वे उनके साथ न कदापि भोजन करें, न साथ रहें, न साथ बैठें और न उनके कार्य में कदापि हस्ताक्षेप करें ॥ ४५ ॥

विधिप्रदिष्टामपहाय पद्धतिं
मया यथावद् बहुवर्णितामिमाम् ।
व्रजन्ति ये पण्डितमानिनः स्वयं
पराभवं यान्ति जनेषु तत्कृतम् ॥ ४६ ॥

धर्मशास्त्रों के उन विचारों को [ जो कि मैंने यहाँ पर उपस्थित किये हैं ] छोड़कर जो पंडितमानी काम करेंगे उनको नीच-जातिकृत तिरस्कार बार बार प्राप्त होगा ॥ ४६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गवाशनैः साकमपि द्विजन्मभिः
सहाशनादिव्यवहारकल्पनम् ।
प्रवर्तितव्यं न कदापि यत्नतः
समस्तमेषां परिहेयमार्जवम् ॥ ४७ ॥

इसी प्रकार द्विजों को चाहिए कि यवनों के साथ भी वे खाना पीना, लेना देना आदि सब व्यवहार छोड़ दें क्योंकि धर्मशास्त्रों में यवन सब से अधम माने गए हैं ॥ ४७ ॥

अहर्निशं गोवधतत्परानिमा-
न्स्वराज्यलोभेन विनष्टबुद्धयः ।
स्पृशन्ति ये तेऽपि मनुष्यमानिनः
स्वभावतो वेदपथस्य शत्रवः ॥ ४८ ॥

जो मनुष्य स्वराज्य के लोभ में पड़कर इन गोघातक यवनों के साथ भोजनादि व्यवहार करते हैं उनको भी वैदिक धर्म का विघातक ही समझना चाहिए ॥ ४८ ॥

वयं क्व गोरक्षणदत्तचेतसः
क्व तेऽनिशं गोवधदत्तमानसाः ।
स्वभावतो भिन्नगुणैर्न सङ्गतं
विलोक्यते पावकनीरयोरिव ॥ ४९ ॥

गोरक्षा में दत्तचित्त कहाँ हिन्दू ? और गोहत्या में सर्वदा प्रवृत्त कहाँ यवन ? स्वभाव से विरुद्धगुण इन दोनों में अग्नि और जल की तरह कदापि मित्रता नहीं हो सकती है ॥ ४९ ॥

न शुद्धिरेषामिह जन्मनि स्थिरा
कदापि कर्तुं मनुजेन शक्यते ।
प्रमाणराहित्यवशाद्भवान्तरे
वदन्ति सर्वे मुनयः समुन्नतिम् ॥ ५० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इस जन्म में इन यवनों की शुद्धि भी नहीं हो सकती है, क्योंकि मनु, आपस्तम्ब, गोतम, अत्रि, वसिष्ठ आदि धर्मशास्त्रों में जातिपरिवर्तन जन्मांतर में माना है, एक जन्म में नहीं। जो ऐसा करते हैं वे अल्पज्ञ और धर्ममर्यादा के विघातक हैं ॥ ५० ॥

गवासृजा यद्वपुरुन्नतिं गतं
परम्परातः कुकृतावधिश्रितम्।
अनेकगोमांसमयस्य तस्य का
विशुद्धिरस्मिन्यवनस्य भूतले ॥ ५१ ॥

जिसके रजवीर्य में गोरक्त है, गोमांस से जिसका सप्तधातुमय शरीर बना है, सर्वदा गोघात में जिसकी प्रवृत्ति रहती है उस यवन को कौन शुद्ध कर सकता है? ॥ ५१ ॥

वदन्ति भूमाविह ये मदोद्धताः
शुचित्वमेषां यवनीकृतात्मनाम्।
विनष्टभावाः किल ते जनव्रजे
जनञ्जनान् वञ्चितुमत्र सङ्गताः ॥ ५२ ॥

जो मनुष्य इन यवनासुरों को शुद्ध करने के लिए इधर उधर घूम रहे हैं, वे वंचक हैं, भोलेभाले हिन्दुओं को ठग कर वे अपना मतलब गांठ रहे हैं ॥ ५२ ॥

यथा पलाण्डुर्न जहाति भूतले
कदापि दौर्गन्ध्यमनेकसाधनैः।
परिष्कृतोऽपि स्वगतैर्गुणैस्तथा
विशुद्धभावं यवनो न कर्हिचित् ॥ ५३ ॥

जिस प्रकार पलांडु ( प्याज ) अनेक प्रकार के संस्कारों से संस्कृत होने पर भी अपना स्वाभाविक दुर्गन्ध नहीं छोड़ता है उसी प्रकार यवन भी स्वभावसिद्ध अपवित्रता का परित्याग नहीं कर सकता है ॥ ५३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शरीरतः प्रच्युतमात्मसम्भवं
मलं यथा चन्दनतामसम्भवाम् ।
न याति तद्वद्यवनोऽपि शुद्धतां
पिको यथा नैति कदापि हंसताम् ॥ ५४ ॥

जिस प्रकार शरीर से अलग हुआ मल कदापि शुद्ध नहीं हो सकता, कोयल हंस नहीं बन सकता, उसी प्रकार यवन पवित्र नहीं हो सकता है ॥ ५४ ॥

विहाय धर्मं निगमानुमोदितं
धनादिलोभेन भवन्ति ये जनाः ।
विधर्मिणस्ते पतिताः स्वधर्मतो
न वर्तनीयाः समलान्नपिण्डवत् ॥ ५५ ॥

जो मनुष्य अपना धर्म छोड़कर स्त्री और धन के लोभ से विधर्मी बन जाते हैं वे नाबदान में गिरे हुए मोदक की तरह अव्यवहार्य बन जाते हैं ॥ ५५ ॥

प्रमादतो ये निजवर्णधर्मत-
श्च्युताः प्रमाणानुगमेन ते पुनः ।
प्रयान्ति जातिं स्वगतां भवान्तरे
व्रतादिभिर्नाशितपापसञ्चयाः ॥ ५६ ॥

जो मनुष्य प्रमाद से अपने धर्म से गिरकर धर्मांतर में प्रविष्ट होते हैं वे नेक प्रकार के व्रत एवं उपवासों द्वारा नष्टपाप होकर युगांतर में व्यवहार्य हो जाते हैं ॥ ५६ ॥

भयेन धर्मो मनुजैः पुरातनै-
र्विसर्जितः कैश्चिदिदं समुच्यते ।
परं न तेषां वचनं मनोरमं
स्वभावतो दुर्बलहेतुसंश्रयात् ॥ ५७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कोई कोई मनुष्य यह भी कहते हैं कि यवनों के शासनकाल में कुछ हिन्दुओं ने भय से अपना धर्म छोड़ा था, परन्तु यह बात प्रमाणाभाव से मानने योग्य नहीं है ॥ ५७ ॥

भयान्न धर्मं विसृजेदिति स्फुटं
जगाद पाराशरिरुत्तमादरम् ।
निदर्शनं यस्य सुतावनुत्तमौ
प्रसिद्धगोविन्दगुरोर्बभूवतुः ॥ ५८ ॥

भय से धर्म नहीं छोड़ना चाहिए ऐसा व्यास जी ने कहा है, गुरु गोविंदसिंह जी के दो पुत्र उसके प्रत्यक्ष उदाहरण हैं । [ न जातु कामान्न भयान्न लोभाद्धर्मंत्यजेज्जीवितस्यापि हेतोः ] इति महाभारतम् ॥ ५८ ॥

अतः पुरा ये बहुभिः प्रलोभनै-
र्विहाय धर्मं परिवञ्चिताः शकैः ।
बभूवुराराद्यवना न तेऽधुना
कथञ्चिदर्हाः श्रयितुं शिवां गतिम् ॥ ५९ ॥

इसलिए जो हिन्दू अनेक प्रलोभनों में पड़कर यवनों के शासनकाल में विधर्मी बन गए हैं उनकी पवित्रता प्रमाणाभाव से इस जन्म में नहीं हो सकती है ॥ ५९ ॥

मदोद्धताः केचिदिदं प्रचक्षते
विधिप्रदिष्टो विधवाकरग्रहः ।
परं न ते धार्मिकरीतिनिश्चये
स्वयं प्रविष्टाः परवञ्चनाचणाः ॥ ६० ॥

मदोद्धत, कामपीड़ित कोई कोई मनुष्य आजकल विधवाविवाह को भी शास्त्र-संमत कहकर अपना मतलब गांठ रहे हैं परन्तु वे इस बात का परिणाम नहीं सोचे हुए हैं ॥ ६० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधौ न कश्चिद्विधिरस्ति तादृशो
न धर्मशास्त्रेष्वपि तत्परिग्रहः ।
कथं पुनस्तादृशवाक्यसङ्ग्रहः
प्रमाणतां धर्मपथेष्वधिव्रजेत् ॥ ६१ ॥

वेदों में कोई भी विधिवाक्य ऐसा नहीं है जो विधवा-विवाह को सिद्ध करता हो और न कोई धर्मशास्त्रों में ही ऐसी आज्ञा है फिर मदांध मनुष्यों की बात को कौन प्रमाण माने ॥ ६१ ॥

यथाऽन्यदेशेषु विवाहबन्धनं
विनोदमात्रं न तथाऽत्र भारते ।
अनेकजन्मान्तरबन्धनस्थिरं
ऋणापनोदाय तथाविधं कृतम् ॥ ६२ ॥

जिस प्रकार विवाहबंधन यूरोप आदि में केवल विनोदमात्र माना जाता है वैसा भारत में नहीं, यहां पर जन्मांतर संस्कार से संबद्ध-विवाह पितृऋण के उतारने के लिए किया जाता है ॥ ६२ ॥

अनेकदेवप्रहितां पुरातनैः
स्वकर्मभिः स्यूतविशिष्टबन्धनाम् ।
वधूमवाप्नोति जनो निजेच्छया
न कर्हिचिद्वैदिकमन्त्रनिग्रहात् ॥ ६३ ॥

भग-अर्यमा-सविता आदि देवगणों द्वारा प्रदत्त तथा प्राचीन कर्म-बंधन से संबद्ध स्त्री को मनुष्य प्राप्त करता है, अपनी इच्छा से नहीं [ मह्यं त्वादुर्गार्हपत्याय देवाः ] इति मंत्रः ॥ ६३ ॥

भवेदमुष्मिन्नियतिर्न कारणं
प्रधानभावाद्विषये तदाऽत्र कः ।
महोदयो हीनगुणैरलङ्कृतां
वधूमुपेत्यापि मनो विनोदयेत् ॥ ६४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विवाह में यदि यह बात प्रधान न होती तो कौन सा महानुभाव कुरूप पत्नी को भी प्राप्त होकर अपने गृहस्थाश्रम संबधी कार्यों में तत्पर रहता ॥ ६४ ॥

उपैति केनात्र वधस्यवस्थिता
चिराय वैधव्यमुदग्रहेतुना ।
विचारणीयं पुरतस्त्विदं पुन-
र्भवे तदुद्धारपथप्रवर्तनम् ॥ ६५ ॥

संसार में स्त्री किन कारणों से विधवा होती है इस बात पर पहले विचार करना उचित है फिर उस के दूर करने का उपाय सोचना उपयुक्त होगा ॥ ६५ ॥

पुरातने जन्मनि या मदोद्धता
पतिं समभ्येति न कामपीडितम् ।
न सेवते वा धवमत्र सा भवे
तथाविधं दुःखमुपैति तत्फलम् ॥ ६६ ॥

पहले जन्म में जो स्त्री मदमत्त होकर कामपीड़ित पति के पास नहीं जाती है या उसकी अवहेलना करती है वह इस जन्म में कामपीड़ा को भोगने के लिए विधवा हो जाती है ॥ ६६ ॥

फलात्मकं पूर्वकृतेः सुदुःसहं
समाप्य वैधव्यमनन्यमानसा ।
पुनस्तमेवैति पतिं भवान्तरे
व्रतोपवासादिभिरुग्रहेतुभिः ॥ ६७ ॥

पूर्व कर्म का फल वैधव्य भोगकर यदि वह व्रत आदि से अपना शरीर दुर्बल बनाकर धर्मपालन करती है तो उसी पूर्वपति को फिर प्राप्त हो जाती है ॥ ६७ ॥

मदात्समुल्लङ्घ्य विधिं निजेच्छया
प्रवर्तते या विषमेषु वर्त्मसु । -

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनन्तकालं भुवि सा भवे भवे
समेति वैधव्यफलं तथाविधम् ॥६८॥

विधवा होकर भी जो स्त्री वैधव्य धर्म का पालन नहीं करती है वह अनेक जन्म तक विधवा ही रह कर बार बार असह्य कामवेदना को भोगती है ॥ ६८ ॥

अतः कुलस्त्रीभिरुपेत्य तान्दशां
मनः प्रदेयं भगवत्पदार्चने ।
व्रतोपवासादिभिरात्मशोषणं
मुहुर्विधेयं मदनस्य शान्तये ॥६९॥

इसलिए सब स्त्रियों को उचित है कि वे विधवा होकर अपना मन भगवत्पूजन में लगावें और कामवेग को दबाने के लिए अपना शरीर व्रत उपवास आदि से सर्वदा निर्बल बनाती रहें ॥ ६९ ॥

व्रतोपवासादिकृशे निजं पतिं
मनस्यवस्थाप्य तदुक्तपालनम् ।
विधेयमेकान्ततयाऽबलाजनै-
र्यथा वियोगो न भवेद्भवान्तरे ॥७०॥

व्रत आदि से दुर्बल शांत मन में अपने पति का स्मरण कर उसकी आज्ञा का पालन करें जिससे फिर दुबारा मिलने पर वियोग न हो ॥ ७० ॥

मुहुस्तदुद्देश्यसमाप्तिसाधने
मनः प्रदेयं विधवावधूजनैः ।
सदा निजोपार्जितपुण्यसञ्चयै-
रथार्चनीयो दिवमप्ययं गतः ॥७१॥

पति के आज्ञापत्र ( वसीयत ) के अनुसार सर्वदा अपना मन लगाती रहें और अपने दान, जप, कथा आदि पुण्य से स्वर्ग में गये हुए अपने पति का आदर करें ॥ ७१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परस्परोपार्जितपुण्यसम्पदा
मुहुः समाकृष्टमनःपरम्परौ ।
वधूवरौ विश्वपतेरनुज्ञया
पुनः प्रवृत्तौ भवतः स्वकर्मणि ॥७२॥

जब इस प्रकार दोनों का पुण्य एक दूसरे से आपस में संबद्ध होकर दोनों का मन एक होगा तब फिर दोनों ईश्वरादेश से वधूवर होकर गृहस्थाश्रम में प्रविष्ट होंगे ॥ ७२ ॥

विधिप्रदिष्टो विधिरेष वैधवीं
दशां विनिर्यातयितुं सदा क्षमः ।
प्रकीर्तितो धार्मिकतत्त्ववेदिभि-
र्न धर्मशास्त्रे विधवाकरग्रहः ॥७३॥

वैधव्य दशा को दूर करने के लिए धर्मग्रन्थों में यही उपाय लिखा है, विधवाओं का पुनर्लग्न उनके वैधव्य को दूर नहीं कर सकता है ॥ ७३ ॥

विनष्टवृत्ताः किल ये विनिग्रहं
करग्रहं तस्य वदन्ति कर्मणः ।
भवे भवे ते विधवाऽनद्विषो
निजेन्द्रियग्रामसुखानुवर्तिनः ॥७४॥

जो दुराचारी पुरुष वैधव्य को दूर करने के लिए उनके दुबारा विवाह का प्रचार करते हैं वे वास्तव में विधवाओं के जन्मजन्मान्तर के शत्रु हैं और कामदेव के प्रेमी हैं ॥ ७४ ॥

अतः सतीभिर्विधवाभिरात्मनः
सुखाय नीचोचितपापकर्मणाम् ।
मनो न देयं वचनेषु नापि च
प्रवर्तितव्यं विषमेषु कर्मसु ॥७५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इसलिए पतिव्रता विधवाओं को चाहिए कि वे इन दुराचारी स्वार्थ-परायण मनुष्यों के वचनों पर कदापि विश्वास न करें और न अपना मन अपने धर्म से डिगावें। ७५॥

भ्रमन्ति येऽस्पृश्यजनोद्धृतेः कृते
मदेन मत्ता मनुजाः पुरे पुरे।
निजार्थसम्पादनमेव तैरहो!
विधीयते दम्भपरायणैः स्फुटम् ॥७६॥

आजकल जो मनुष्य अछूतोद्धार का पक्ष ले इधर उधर घूम रहे हैं वे भी केवल दंभ के साथ अपने स्वार्थ का ही साधन करते हैं॥ ७६॥

इतस्ततो नीचजनोद्धृतेर्मिषा-
द्धनं समाहृत्य निजेष्टसाधनम्।
विधाय तैरन्त्यजवञ्चनात्मकं -
किमप्यनावश्यककर्म चिन्त्यते ॥७७॥

वे अंत्यजोद्धार के बहाने से इधर उधर से धन लेकर पहले तो अपना काम बना लेते हैं फिर अन्तमें उनको बहकाने के लिए कुछ बहाना बना लेते हैं॥ ७७॥

न तेन तेषां किमपीह चिन्तितं
प्रजायते सिद्धमसिद्धसाधनात्।
मुधा प्रयासो भवति प्रमादतो
धनव्ययश्चापि तथा निरर्थकः ॥७८॥

इससे न तो अंत्यजों का ही कुछ भला होता है और न संसार में ही उनकी बात मानी जाती है उलटा व्यर्थ धन-व्यय और प्रयासमात्र ही बच जाता है॥ ७८॥

प्रदाय साहाय्यमभीष्टकर्मसु-
स्वभावसिद्धेषु धनादिना जनैः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सहानुभूतिः क्रियतामुपार्जिता
न तज्जनोच्छिष्टसहाशनादिभिः ॥७९॥

जो वास्तवमें अंत्यजों का उद्धार करना चाहते हैं उनको सबसे प्रथम उनके लिए धन देकर उनके कार्यों से सहानुभूति करनी चाहिए। उनके साथ उनके हाथ का छुआ खाने से उनका उद्धार कदापि न होगा ॥ ७९ ॥

सहाशनं येऽभिलषन्ति पामरा
द्विजन्मभिः सार्द्धमपास्तबुद्धयः ।
विनष्टभाग्याः किल ते द्विजन्मनां
कुलानि नीचैर्गमयन्ति यत्नतः ॥८०॥

जो अंत्यज द्विजों के साथ स्वयं ऐसा व्यवहार करना चाहते हैं वे हतभाग्य स्वयं पतित होकर द्विजों को भी अपने साथ साथ पतित बनाना चाहते हैं ॥ ८० ॥

द्विजैरतस्तैः सह नैव भोजनं
कदापि कार्यं विधिपारवश्यतः ।
सहाशनात्पापमुपैति तत्कृतं
द्विजस्तदालापपरः सहोषितः ॥८१॥

इसलिए द्विजों को चाहिए कि ऐसे हठी अंत्यजों के साथ वे कदापि भाषण-भोजन आदि व्यवहार न करें ऐसा करने से द्विज स्वयं पतित हो जाता है ॥ ८१ ॥

वदन्त्यदः केऽप्यधुनाऽन्त्यजोद्भवाः
सहाशनादिव्यवहारलोलुपाः ।
समानभावेन विधीयतां कृति-
र्विधर्मिणः स्याम न चेद्वयं पुनः ॥८२॥

कोई कोई अंत्यज आजकल द्विजों को धमकी दे कर कहते हैं कि या तो हमारे साथ आप सहभोजन करें नहीं तो हम ईसाई अथवा यवन बन जायँगे ॥ ८२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति स्फुटं वक्तुमुपेयुषां कृते
समुत्तरं वक्तुमदो यथोचितम् ।
विधर्मिणः सन्तु न सन्तु वा जना
न धर्मशास्त्राद्विपरीतमस्ति नः ॥ ८३ ॥

इस प्रकार कहनेवालों के लिए हमारे पास यही उत्तर है कि वे अपने प्राक्तन संस्कारों के प्रताप से जो चाहें सो बनें परन्तु धर्मशास्त्रों की आज्ञा के विरुद्ध हम उनके साथ भोजनादि व्यवहार कदापि नहीं कर सकते हैं ॥ ८३ ॥

प्रलोभनैर्येऽत्र सहाशनादिभिः
स्वधर्ममध्येऽभिनिवेशमन्त्यजाः ।
श्रयन्ति ते तद्विपरीतसम्भवे
विधर्ममेष्यन्ति न संशयोऽत्र नः ॥ ८४ ॥

जो किसी लालच से ( धर्म में श्रद्धा न रखने पर भी ) हिन्दू रहना चाहते हैं वे लालच पूरा न होने पर फिर भी अंतमें विधर्मी बनेंगे ॥ ८४ ॥

इति प्रलुब्धैर्मनुजैर्धनादिना
फलं किमिष्टं भविताऽस्ति भूतले ।
वरं बहुभ्योऽल्पक एव धार्मिको
बहुर्न धर्माद्विपरीतकल्पनः ॥ ८५ ॥

प्रलोभनों द्वारा हिन्दू धर्म में रहनेवाले हिन्दुओं से सनातन धर्म का कुछ लाभ न होगा क्योंकि बहुत नास्तिकों से थोड़े हिन्दू अच्छे, परन्तु अधिक नास्तिक अच्छे नहीं ॥ ८५ ॥

सुरक्षितं बीजमदष्टमुत्तमं
घुणादिभिर्वापनकर्मणे वरम् ।
न दंशदष्टं बहु वीर्यवर्जितं
सदाऽल्पमेवातिगुणं प्रशस्यते ॥ ८६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बहुत घुने हुए अन्न से थोड़ा बेघुना अन्न अच्छा, क्योंकि उससे फिर अन्न उपज सकता है, घुना हुआ बहुत सा अन्न भी बेकार होने से अच्छा नहीं है ॥ ८६ ॥

न भारभूतैर्बहुभिः प्रयोजनं
भुवस्तले भारवहव्रजैस्तथा ।
वरं हरिर्वीर्यधनोऽटवीमुखे
न गर्दभानां शतकं वनस्थितम् ॥ ८७ ॥

स्वयं भारभूत अथवा भार ढोनेवाले कुलियों से बहुत होने पर भी कुछ काम संसार का न होगा ? पराक्रमी शेर वन में अकेला ही अच्छा परन्तु वैशाखनंदन सौ भी अच्छे नहीं ॥ ८७ ॥

पराक्रमः कारणमात्मरक्षणे
न दुर्बलानां प्रथितः समुच्चयः ।
बहुप्रयासैः सरघाभिरर्जितं
पिबन्ति ऋक्षाः प्रसभं वने मधु ॥ ८८ ॥

आत्मरक्षा में प्रधान कारण अपना पराक्रम है दुर्बलों का अधिक समुदाय नहीं ? शहद की मक्खियाँ अधिक होने पर भी अपने इकट्ठे किये हुए शहद को रीछ भालुओं से नहीं बचा सकती हैं। मंडूकों के अधिक चिल्लाने पर भी भुजंग उनको खा ही लेता है ॥ ८८ ॥

वरं दरिद्रो बलवान्न दुर्बलो
धनी वरं सच्चरितो निरक्षरः ।
न दुश्चरित्रो बहुशास्त्रपण्डितः
क्षमो न यः सात्त्विकधर्मरक्षणे ॥ ८९ ॥

बलवान् दरिद्री अच्छा परन्तु निर्बल धनी अच्छा नहीं, सच्चरित्र मूर्ख अच्छा परन्तु चरित्र-हीन पंडित अच्छा नहीं जो कि अपने धर्म का भी पालन नहीं कर सकता है ॥ ८९ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अदो मदुक्तं हृदये निरन्तरं
विचार्य विज्ञैर्निजरक्षणोचितम् ।
उपार्जनीयं बलमेव केवलं
न नीचजातिप्रभवो जनव्रजः ॥ ६० ॥

मेरी इन बातों पर बार बार विचार करके मनुष्यों को चाहिए कि वे अपनी रक्षा के लिए अपने में पराक्रम उत्पन्न करें, नीचों का अधिक समुदाय एकत्र करने से कुछ लाभ न होगा ॥ ६० ॥

न मन्दिराणां मनुजैः पवित्रता
विनाशनीया भुवि नीचचङ्क्रमैः ।
प्रशस्तवेदोदितमन्त्रमन्त्रितो
यतः प्रतिष्ठापित एषु माधवः ॥ ६१ ॥

सज्जनों को चाहिए कि मंदिरों की पवित्रता पर भी वे आक्रमण न करें, उनमें नीच भंगी, चमार, यवन आदि का प्रवेश न होने दें, क्योंकि उनमें वेदमंत्रों द्वारा प्रतिष्ठित भगवान् विराज रहे हैं ॥ ६१ ॥

न यत्कृते वेदमनुप्रवर्तनं
न यज्ञदीक्षा मुनिभिः प्रदर्शिता ।
कथं पुनस्ते मनुजाधमा हठा-
न्महेश्वरं द्रागवलोकितुं क्षमाः ॥ ६२ ॥

जिन शूद्रादि अवर वर्णों के लिए वेद का तथा यज्ञ करने का अधिकार स्वयं वेदों ने नहीं दिया वे नीच मंदिरों में जाकर भगवद्दर्शन क्योंकर कर सकते हैं ? ॥ ६२ ॥

बहिः स्थितास्ते भगवत्पदाम्बुजं
मनस्यवस्थाप्य तदेकमानसाः ।
समुन्नतां मन्दिरकोटिमादरा-
द्विलोकयन्त्वित्युपदिष्टमागमैः ॥ ६३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उनको चाहिए कि वे भगवन्नाम लेते हुए मंदिर के द्वार पर खड़े होकर मंदिर का शिखर देख लें ऐसा "अर्चनातंत्र, अर्चनानवनीत, वैखानस भगवद्धर्मशास्त्र" आदि में लिखा है ॥ ६३ ॥

विधौ यदुक्तं भगवद्विलोकने
फलं द्विजानां मुनिभिः कृते स्वयम् ।
तदेव तन्मन्दिरकूटदर्शना-
दधोगतानां पतितात्मनामपि ॥ ६४ ॥

धर्मशास्त्रों में भगवद्दर्शन का जो फल द्विजों को मूर्तिदर्शन से लिखा है वही फल शूद्रादि को शिखरदर्शन से प्राप्त होना लिखा है ॥ ६४ ॥

समं फलं यद्युभयोः कृते विधौ
समुक्तमाचार्यवरैस्तदा पुनः ।
वृथा विवादः क्रियते किमित्यहो !
महोदयैस्तद्विषये मदोद्धतैः ॥ ६५ ॥

धर्माचार्यों ने जब दोनों के लिए एक सा फल लिखा है तब इस विषय में व्यर्थ हट करना सज्जनों को उचित नहीं है ॥ ६५ ॥

स्वधर्ममध्ये निधनं वरं मतं
भयावहोऽलं परधर्म ईरितः ।
गुणैर्विहीनो निजधर्म उत्तमो
गुणैर्महानप्यवरः पराश्रितः ॥ ६६ ॥

अपने धर्म में मरना अच्छा परन्तु परधर्म में जीना अच्छा नहीं ! अपना धर्म गुणरहित भी अच्छा परन्तु सर्वगुणसंपन्न होने पर भी दूसरे का धर्म अच्छा नहीं ॥ ६६ ॥

विचार्य विज्ञैर्भगवत्प्रचोदितं
स्वजातिधर्मः सततं निषेव्यताम् ।
भवेद्यथा मानधनस्य रक्षणं
विमानना नापि भवेत्परैः कृता ॥ ६७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवान् की इस आज्ञा को मानकर सब वर्णों को अपने अपने धर्म में रहना चाहिए जिससे अपना मान बना रहे और दूसरे भी अपमान न कर सकें ॥ ९७ ॥

कृती मनुष्यः स महीतले मतो
न यः स्वमानं परिहातुमीहते ।
धिगस्तु तज्जन्म न रक्षितुं क्षमो
न यः स्वमानं बहुपुण्यसञ्चितम् ॥ ९८ ॥

संसार में वह ही मनुष्य चतुर है जो अपने मान की रक्षा कर सकता है। जो मानरक्षा में असमर्थ है उसका जन्म ही व्यर्थ है ॥ ९८ ॥

तमेव लक्ष्मीः श्रयते नरोत्तमं
यशः स्थिरं तस्य भुवस्तले मतम् ।
सदैव यो मानधनं धनोत्तमं
बहुप्रयत्नैरभितोऽधिरक्षति ॥९९॥

लक्ष्मी उसी को प्राप्त होती है, यश उसी का उज्ज्वल रहता है जो सब धनों में उत्तम मानधन की रक्षा करता है ॥ ९९ ॥

सुदुर्लभं जात्यभिमानमन्यतः
कुलाभिमानं भुवनेऽत्र दुर्लभम् ।
मनुष्यवर्यैरुभयं परिश्रमा-
त्कुलेषु जातिष्वपि सन्निवेश्यताम् ॥१००॥

अपनी जाति का और अपने कुल का जो अभिमान है उसकी रक्षा हर प्रकार से करनी चाहिए। यह अत्यन्त दुर्लभ है। इसके बिना प्राणिमात्र अधोगति को प्राप्त हो जाता है ॥ १०० ॥

मनुष्यजन्मापि समेत्य भूतले
न यः स्वजात्युन्नतये समीहते ।
स किन्नरः किं पुरुषायते जने
समानधर्मा गवयादिजन्तुभिः ॥१०१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनुष्ययोनि को प्राप्त होकर भी जो प्राणी अपनी जाति की उन्नति नहीं करता है वह वास्तवमें किन्नर है, पशु-तुल्य है, व्यर्थ ही वह अपने को पुरुष मानता है ॥ १०१ ॥

स्वपूर्वजानामितिहासरक्षणे
मनः प्रदेयं रभसान्महोदयैः ।
यतो भवेदुन्नतिरात्मजीवने
महत्त्वरक्षा च कुलस्य भूतये ॥१०२॥

सज्जनों को चाहिए कि वे अपने पूर्वजों के इतिहास की रक्षा करें जिससे अपने जीवन में उन्नति हो और अपने कुल का महत्त्व भी बना रहे ॥ १०२ ॥

न ये जनाः पूर्वजदिव्यजीवनं
सदाऽनुगच्छन्ति न ते महत्पदम् ।
कदापि गच्छन्ति यतः कुलोन्नतिः
स्वपूर्वजानां कृपयैव जायते ॥१०३॥

जो मनुष्य अपने पूर्वजों का अनुगमन नहीं करते हैं वे कदापि महत्त्व को प्राप्त नहीं होते हैं क्योंकि अपने कुल की उन्नति पूर्वजों की कृपा पर ही निर्भर रहती है ॥ १०३ ॥

अधिक्षिपन्ति स्वकुलोद्भवाञ्जना-
न्पुरातनान् ये मदपारवश्यतः ।
न ते कुलीनाः कुलकण्टकोपमा
भुवस्तले ते कुलटासमुद्भवाः ॥१०४॥

जो मनुष्य पूर्वजों पर अनुचित आक्षेप करते हैं वे वास्तवमें कुल-कंटक हैं, कुलोद्भव नहीं । पूर्वजों को कलंकित करना अच्छे मनुष्यों का काम नहीं है ॥ १०४ ॥

न येषु धर्मोचितभावसम्भवो
न देवभाषा न च देवभोजनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृथैव पुष्टाः किल ते जनव्रजे
भुवोऽतिभाराय भुवि प्रतिष्ठिताः ॥१०५॥

जिनमें न धार्मिक भाव है, न देवभाषा का आदर है, न देव-भोजन का प्रचार है, न देवनागरी वर्णमाला का संचार है वे मनुष्य वृथापुष्ट तथा केवल पृथिवी के भार हैं ॥ १०५ ॥

न वर्णधर्मो न च जातिबन्धनं
न धर्मरक्षा न गवादिपोषणम् ।
सुखेन शिश्नोदरमात्रपूरणं
परान्नपुष्टैः क्रियते नराधमैः ॥१०६॥

शिश्नोदरपरायण ऐसे वृथापुष्टों से भारत में न वर्णधर्म, न आश्रम धर्म, न जातिधर्म, न गोरक्षा न देशरक्षा, कुछ भी नहीं हो सकता है ॥ १०६ ॥

वदन्ति ये देवगिरं सदाऽमरां
मृतामिति प्राकृतवादिनो जनाः ।
स्वयं मृतास्ते भुवि मन्दबुद्धयो
मृतात्मनां कः कथनं समाचरेत् ॥१०७॥

जो मनुष्य नागरीलिपि और देववाणी को मृतभाषा कहकर उसका अपमान करते हैं वे स्वयं मृत हैं, मृतों का वचन कौन मान सकता है ॥ १०७ ॥

द्विजोत्तमानां भुवि यद्युपस्थितौ
मृतिं समेष्यत्यमराऽपि देवगीः ।
कलङ्कमेतद्भुवि तच्छिरोगतं
सदा वदिष्यन्ति महीसुरद्विषः ॥१०८॥

ब्राह्मणों की उपस्थिति में यदि यह अमर, सुरभारती, मृतप्राय हो जायगी तो यह कलंक ब्राह्मणेतर ब्राह्मणों पर बिना लगाए नहीं छोड़ेंगे ॥ १०८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतः समस्तैरपि भूसुरोद्भवैः
समाहितैः प्राणपणेन सादरम् ।
सरस्वती संस्कृतरूपसंस्थिता
समर्चनीया भुवि सत्परिश्रमैः ॥१०६॥

इसलिए ब्राह्मणमात्र को चाहिए कि वे प्राणपण से इस समय सुर-भारती तथा देवनागरी लिपि की रक्षा करें। इसी में देश का कल्याण है ॥ १०६ ॥

भुवस्तले यामवलम्ब्य भारतीं
महर्षयो व्यासमुखाः पदे पदे ।
दिवङ्गता अप्यमरत्वमागताः
कथं मृता सा सुरभारती भवेत् ॥११०॥

जिस देववाणी का अवलंब लेकर भूतल में वाल्मीकि, व्यास आदि महर्षि, भास, बाण, श्रीहर्ष, भारवि, जगद्धरभट्ट, मम्मट, रुद्रट, भरत आदि महाकवि आज भी जीवित से प्रतीत हो रहे हैं वह सुरभारती मृत भाषा कैसे हो सकती है ॥ ११० ॥

द्विजोत्तमानामिदमव्ययं धनं
यदाश्रयाद् भूमितलेऽग्निसोदराः ।
समागतं नो गणयन्ति भूपतिं
वनेऽपि देवोचितशर्म भुञ्जते ॥१११॥

ब्राह्मणों का यह सर्वोत्तम धन है, जिसके आधार पर वे वन में रहकर भी देवताओं के सा आनन्द पाते हैं और अपने पास आये हुए भूपति की भी कुछ परवा नहीं करते हैं ॥ १११ ॥

मुखोद्भवाऽनन्यगतिः सरस्वती
ऋचाश्रयेनापि निगद्यते यतः ।
न दीयतेऽतः किल तैर्यथाबलं
मदोद्धतेभ्यः कथमप्युपासिता ॥११२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं विधाय सर्वं प्रक्षालनकर्म करयुगादीनाम् ।
द्वादशवारं कुर्याद्गण्डूषान्वामभागतो ज्यायाम् ॥१२॥

इसके अनंतर दोनों हाथों को मिलाकर सात बार मृत्तिका से माँजना चाहिए। तदनंतर एक एक चरण को तीन तीन बार मृत्तिका से धोकर शौचपात्र ( लोटे ) को तीन बार माँजना चाहिए। फिर अंत में दो बार हाथ माँजना चाहिए ॥ ११ ॥ इस प्रकार हाथ पैर और लोटा माँज कर अपनी बाईं तरफ़ को बारह बार गंडूष (कुल्ला) करना चाहिए ॥ १२ ॥

पश्चाद्वितस्तिमानं करञ्जलोध्राम्रनिम्बबदराणाम् ।
आदाय नम्रकाष्ठं दन्तानां भूरि मार्जनं कार्यम् ॥१३॥
पश्चाद्विधाय शुद्धिं मुखस्य तोयेन मार्जनं कृत्वा ।
दैवतमिष्टं प्रातः स्मर्तव्यं धर्मतत्परैर्मनुजैः ॥१४॥

गण्डूष करने के अनंतर करंज, लोध्र, आम्र, निंब, बदर आदि का वितस्तिमात्र, नवीन, सुन्दर दंतधावन लेकर दंतों का मार्जन करना चाहिए [ औदुम्बरेण दन्तान्धावयेत् ] इति पारस्करगृह्यसूत्रम् ॥ १३ ॥ इस प्रकार मुखमार्जन करने के अनंतर प्रातःकाल अपने कुलपरंपरागत इष्टदेव का स्मरण तथा स्तवन करना चाहिए ॥ १४ ॥

यस्मिन्देशविशेषे यत्तोयं या च लभ्यते मृत्सा ।
कार्यं तयैव शौचं भृगोर्मतेनेदमुच्यते सर्वम् ॥१५॥
तस्मात्परं यथावज्जलेन शीतेन निर्जने देशे ।
स्नानं विधेयमुच्चैः पठन्विभोर्नाम निर्मलं परमम् ॥१६॥

जिस देश में जैसी मृत्तिका और जैसा जल मिले उसमें उसी से अपने शास्त्रों के नियमानुसार अपनी पवित्रता करनी चाहिए ऐसा भृगुजी महाराज अपने ग्रंथ में लिखते हैं ॥ १५ ॥ इसके अनंतर निर्जन एवं निर्वात देश में अपने अभ्यासानुसार शीतल अथवा गर्म जल से भगवन्नाम लेते हुए स्नान करना चाहिए ॥ १५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सङ्कल्पपठनपूर्वकमेवं स्नानं विधाय नियमेन।
सन्ध्यावन्दनकर्मणि निरतो भूयाद् द्विजः समासेन ॥१७॥

संकल्पपठनपूर्वक स्नान करने के अनंतर अंग-प्रोक्षण तथा धौत वस्त्र परिधान करके पूजनागार में जाकर संध्यावन्दन आरंभ करना चाहिए ॥ १७ ॥

[ प्रातःसंध्याप्रयोगः ]

पूर्वं तत्राचमनं
शिखानिबन्धस्ततः परं पश्चात्।
प्राणायामः परतर-
मस्मान्मन्त्रेण मार्जनङ्कार्यम् ॥१८॥

इसमें सब से प्रथम [केशवाय नमः स्वाहा ॥१॥ नारायणाय नमः स्वाहा ॥२॥ माधवाय नमः स्वाहा ॥३॥ ] इन तीन मंत्रों से तीन बार आचमन करके गायत्री मंत्र से शिखाबंधन करना चाहिए। तदनंतर समंत्रक प्राणायाम करना चाहिए। उसका प्रकार [सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। त्रिःपठेदायत.प्राणः प्राणायामः स उच्यते ] ऐसा धर्मशास्त्र में कहा है। उसके अनंतर [ आपो हि ष्ठा मयोभुवः ॥१॥ यो वः शिवतमो रसः ॥२॥ तस्मा अरङ्गमाम वः ॥३॥ ] इन तीन मंत्रों से मार्जन करना चाहिए ॥ १८ ॥

---

( सन्ध्याप्रयोजनम् )

रक्षांसि ह वा पुरोऽनुवाके तपोऽग्रमतिष्ठन्त। तान् प्रजापतिर्वरेणेनोपामन्त्रयत। तानि वरमवृणीत, 'आदित्यो नो योद्धा' इति। तान् प्रजापतिरब्रवीत् , योधयध्वमिति। तस्मादुत्तिष्ठन्तं ह वा तानि रक्षांस्यादित्यं योधयन्ति यावदस्तमन्वगात्। तानि ह वा एतानि रक्षांसि गायत्र्याऽभिमन्त्रितेनाम्भसा शाम्यन्ति। तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्याऽभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति। ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति। यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधुन्वन्ति। उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्,कुर्वन्, ब्राह्मणो विद्वान्सकलं भद्रमश्नुते। असावादित्यो ब्रह्मेति। ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद, इति तैत्तिरीयब्राह्मणम्। [ तै० आ० प्र०२ अ०२ ]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुनरप्याचमनं त्रि-
स्ततोऽघमर्षस्ततःपरं यत्नात् ।
पापीयपुरुषनिरसन-
माचमनश्च क्रमेण कर्तव्यम् ॥१६॥

मार्जन के अनन्तर [ सूर्यश्च मा मन्युश्च ] इस मंत्र से तीन बार आचमन करके [ द्रुपदादिव मुमुचानः ] इस मंत्र से अघमर्षण करना चाहिए तदनंतर [ ऋतं च सत्यं च १ समुद्रादर्णवादधि २. सूर्याचन्द्रमसौ धाता ३ ] इन तीन मंत्रों से पाप-पुरुष का निरसन करना चाहिए उसके अनंतर पूर्वोक्त [ केशवाय नमः स्वाहा ] इत्यादि तीन मंत्रों से तीन बार आचमन करना चाहिए ॥ १६ ॥

पश्चात्प्राणायामः
पुनराचमनं ततोर्घनिक्षेपः ।
सूर्यप्रदक्षिणाऽतः
सूर्योपस्थानमागमक्रमतः ॥२०॥

आचमन के अनंतर समंत्रक प्राणायाम करना चाहिए । प्राणायाम का मंत्र [ ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ॐ आपो ज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् ] इस प्रकार है । प्राणायाम के अनंतर [ सूर्यश्च मा मन्युश्च [ इस मंत्र से आचमन करके गायत्री मन्त्र से खड़े होकर सूर्यदेव को तीन बार अर्घ्य देना चाहिए । तदनंतर [ विश्वतश्चक्षुरुत विश्वतो मुखः ] इस मंत्र से परिक्रमा करके [ उद्वयं तमसस्परि स्वः ] इत्यादि चार मंत्रों से सूर्योपस्थान करना चाहिए । वैदिक संध्या का यही क्रम है ॥२० ।

अभिवादनं ततःपर-
मर्कस्यावाहनश्च गायत्र्याः ।
तस्मात्परञ्जपोऽस्याः
क्षमापनञ्च प्रयोगविभ्रंशात् ॥२१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूर्योपस्थान के अनन्तर अपना गोत्र, प्रवर, शाखा सहित नामोच्चारण करते हुए सूर्यदेव को अभिवादन करना चाहिए तदनंतर [ तेजोऽसि शुक्रमस्यमृतमसि ] इस मन्त्र के द्वारा गायत्री का आवाहन करके १००० अथवा १००, कम से कम १० बार गायत्री का जप करना चाहिए। फिर [ यदक्षरपरिभ्रष्टं ] इस पद्य से क्षमाप्रार्थना करनी चाहिये ॥ २१ ॥

अन्ते भगवत्स्मरणं
सन्ध्यायाश्चाप्यथार्पणं परतः ।
स्वेष्टस्तवस्तदन्ते
समिदाधानं विधेर्विधानेन ॥२२॥

इसके अनंतर [ यस्य स्मृत्या च नामोक्त्या ] इस पद्य से ईश्वर का स्तवन करके संध्या का फल भगवान् को समर्पित करना चाहिए तदनंतर अपने इष्टदेव का स्तोत्र-पाठ करके वैदिक विधान से समिदाधान करना चाहिए जिसका प्रकार निम्नलिखित है ॥ २२ ॥

[ समिदाधानम् ]

अग्निसमूहनमादौ
हवने पर्युक्षणं तथा चाग्नेः ।
उत्थायाहवनीये
समिधां हवनं चतुर्भिरथ मन्त्रैः ॥२३॥

इसमें सबसे प्रथम [अग्ने सुश्रवः सौश्रवसं मा कुरु] इस मन्त्रसे अग्नि का समूहन करके फिर पर्युक्षण करना चाहिए। तदनंतर [ अग्नये समिधमाहार्षं ] इस मन्त्र से उठकर एक एक समिधा हाथ में लेकर ३ बार समिधाधान करना चाहिए। चौथीबार [एषा ते अग्ने समित् ] इस मन्त्र से समिदाधान करना चाहिए ॥ २३ ॥

पुनरप्यग्निसमूहन-
पर्युक्षणकर्मणी विधायात्र ।
पाणी प्रताप्य नाना-
निजाङ्गसन्तापनन्द्विजैःकार्यम् ॥२४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इसके अनंतर पूर्वोक्त मन्त्र से अग्नि का पर्युक्षण करके, पूर्ववत्, पर्युक्षण के अनंतर अग्नि में हाथ तपाते हुए [ तनूपा अग्नेऽसि तन्वं मे पाहि। १। मेधां मे देवः सविता आददातु। २।] इन दो मन्त्रों से मुखविमर्ष करना चाहिए ॥ २४ ॥

अन्ते भस्मविलेप-
स्त्र्यायुषमन्त्रेण तत्तदङ्गेषु ।
अभिवादनन्तथाऽग्ने-
रेतद् गृह्यानुसारतो हवनम् ॥२५॥

इसके अनंतर [त्र्यायुषं जमदग्नेः] इस मन्त्र से घृताक्त स्रुवा से भस्म लेकर ललाट, ग्रीवा, दोनों बाहुमूल एवं हृदय में लगाना चाहिए अंत में गोत्र, प्रवर, शाखादि सहित अपना नाम लेकर अग्निदेव का अभिवादन करना चाहिए। इतना ही पारस्कर गृह्यसूत्र के अनुसार वैदिक-हवन-विधि का प्रयोग है ॥ २५ ॥

मङ्गलपदार्थदर्शन-
मभिवादनमग्निजनकमातॄणाम् ।
स्वाध्यायो निगमागम-
पुराणसाहित्यतत्तदङ्गानाम् ॥२६॥

हवन के अनंतर मांगलिक पदार्थों का दर्शन करके अग्नि और माता पिता को अभिवादन करना चाहिए। तदनंतर वेदवेदांग का स्वाध्याय अर्थात् ब्रह्मयज्ञ करना चाहिए। उसका प्रकार यह है। चारों वेदों के आदि और अंत के मन्त्र, चारों ब्राह्मणों के आदि और अंत के मन्त्र, अपनी अपनी शाखानुसार गृह्यसूत्र का आद्यंत मन्त्र, शिक्षादि वेदांगों का आद्यंत मन्त्र, सूत्र, श्लोक कम से कम इतना अवश्य पढ़ना चाहिए ॥ २६ ॥

स्वाध्यायात्परमाह्निक-
मुख्यं भगवत्समर्चनं यत्नात् ।
श्रौतस्मार्तविभेदा-
कर्तव्यं मूर्तिमभिमुखीकृत्य ॥२७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इसके अनन्तर आह्निक कार्य में प्रधान भगवदर्चन करना चाहिए। उसके दो प्रकार हैं। एक श्रौत, दूसरा स्मार्त। इन दोनों में परंपरानुसार भगवन्मूर्ति को समक्ष में रखकर पूजन आरंभ करना चाहिए ॥ २७ ॥

पञ्चायतनमभीष्टं
पुरतः संस्थाप्य दैवते पीठे।
गणपतिशङ्करशक्ति-
द्युमणिहृषीकेशपूजनङ्कार्यम् ॥२८॥

दैवत पीठ पर गणपत्यादि पाँच पचायतनों में कुलपरंपरागत किसी एक पंचायतन को समक्ष में रखकर गणेश, शंकर, गौरी, सूर्य, विष्णु, इन पांच देवतों का अर्चन करना चाहिए ॥ २८ ॥

उपचारैः षोडशभिः
श्रौताचारप्रतिष्ठितानेतान्।
देवान्समर्च्य विधिव-
त्सन्ध्यां मध्याह्नकालिकीं कुर्यात् ॥२९॥

श्रौताचार-प्रतिष्ठित इन पाँच देवों का षोडशोपचार से पूजन करके मध्याह्न संध्या का आरंभ करना चाहिए। षोड़शोपचार इस क्रम से होता है। [ सहस्रशीर्षेत्यावाहनम् १, पुरुष एवेदमित्यासनम् २, एतावान-स्येतिपाद्यम् ३, त्रिपादूर्ध्व उदैदित्यर्घ्यम् ४, ततो विराडित्याचमनम् ५, तस्माद्यज्ञादिति स्नानम् ६, तस्माद्यज्ञात्सर्वहुत ऋच इति वस्त्रम् ७, तस्माद-श्वा अजायन्त इति यज्ञोपवीतम् ८, तं यज्ञमिति गन्धम् ९, यत्पुरुषमिति पुष्पम् १०, ब्राह्मणोऽस्येति धूपम् ११, चन्द्रमा मनस इति दीपम् १२, नाभ्या आसीदिति नैवेद्यम् १३, यत्पुरुषेणेति सदक्षिणं ताम्बूलम् १४, सप्तास्यास-न्नित्यार्तिः परिक्रमणञ्च १५, यज्ञेन यज्ञमितिमन्त्रपुष्पाञ्जलिर्नमस्कारश्च १६ ] इति षोडशोपचाराः ॥ २९ ॥

[ मध्याह्नसंध्याप्रयोगः ]

तस्यां प्रागाचमनं
प्राणायामस्ततःपरं पश्चात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अम्बुप्राशनकृत्यं
पुनराचमनं समार्जनङ्कार्यम् ॥३०॥

मध्याह्न संध्या में सब से प्रथम [ गायत्री मन्त्र ] से तीन बार आच-मन करके पूर्वोक्त प्रकार से तीन बार प्राणायाम करना चाहिए। तदनन्तर [ आपः पुनन्तु पृथिवीम् ।१॥ यदुच्छिष्टमभोज्यं च ॥२॥ ] इन दो मन्त्रों से अनुप्राशन करके [ केशवायनमः ] इत्यादि तीन मन्त्रों से तीन आचमन करने के अनन्तर [ आपो हि ष्ठा मयोभुवः ] इत्यादि तीन मन्त्रों से मार्जन करना चाहिए ॥ ३० ॥

तोयस्यावग्रहणं
ततोऽघमर्षस्तदुत्तरं मुख्यम् ।
पापीयपुरुषनिरसन-
मर्घ्यादानं क्रमादुपस्थानम् ॥३१॥

तदनन्तर [ सुमित्रिया न आप ओषधयः ] इस मन्त्र से जलावग्रहण करके [द्रुपदादिव मुमुचानः] इस मन्त्र से अघमर्षण करना चाहिए। उस के अनंतर [ ऋतं च सत्यं च ] इत्यादि तीन मन्त्रों से पापीय पुरुष का निरसन करके [ आकृष्णेन रजसा ] इस मन्त्र से तीन बार अर्घ्य देना चाहिए तदनंतर [ उद्वयं तमसस्परि स्वः ] इत्यादि तीन मन्त्रों से खड़े होकर उपस्थान करना चाहिए ॥ ३१ ॥

सावित्र्यावाहनमथ
जपनं तस्या निवेदनं परतः ।
जपनस्य सूर्यदैवत-
मुद्दिश्यास्याः समर्पणं नमनम् ॥३२॥

उपस्थान के अनंतर [ तेजोऽसि शुक्रमसि ] इस मन्त्र से गायत्री का आवाहन करके ग्यारह बार उसका जप करना चाहिए। जप के अनंतर [ देवा गातुविदः ] इस मंत्र से भगवान् सूर्य के लिए जपका समर्पण करके सूर्यदेव को ही संध्या-फल समर्पित करना चाहिए। तदनंतर सूर्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिवादन करके संध्या समाप्त करनी चाहिए [ इति मध्याह्नसंध्या-प्रयोगः ] ॥ ३२ ॥

एवं विधाय सन्ध्यां दिनस्य मध्ये विधेर्निदेशेन ।
पञ्चमहायज्ञानामादरणं यत्नतः कार्यम् ॥३३॥
ऋषि-देव-पितृ-मानव-कीटादीनां यथोत्तरं तृप्तिः ।
पञ्चमहायज्ञपदादत्राऽभिधया महोदयैर्ज्ञेया ॥३४॥

वेद की आज्ञा से इस प्रकार मध्याह्न की श्रौत संध्या समाप्त करके पञ्च महायज्ञों का क्रमशः अनुष्ठान करना चाहिए ॥ ३३ ॥ यहां पर अभिधा शक्ति के आधार पर पंच-महायज्ञ शब्द का ऋषियज्ञ १, देवयज्ञ २, पितृयज्ञ ३, मनुष्ययज्ञ ४, भूतयज्ञ ५, अर्थ समझना चाहिए ॥ ३४ ॥

---

## तर्पण-प्रकारः

पवित्रपाणिराचम्य, प्राणानायम्य, देशकालौ स्मृत्वा, ॐ तत्सदित्यारभ्य परमेश्वर-प्रीत्यर्थं देवर्षिपितृतर्पणमहं करिष्ये, इत्यन्तं सङ्कल्प्य, ताम्रपात्रे गन्धपुष्पाक्षतानि निक्षिप्य, प्रागग्रं प्रादेशमात्रं कुशत्रयं हस्ते गृहीत्वा, पात्रे जलं प्रपूर्य, ( विश्वे देवास आगत १, विश्वेदेवाः शृणुतेमं हवं मे २, ) इति मन्त्राभ्यां पितॄनावाह्य, पूर्वाभिमुखः सन् मन्त्रैरेभिस्तर्पणं कुर्यात् ।

### देवतर्पणम्

ॐ ब्रह्मा तृप्यताम्, विष्णुस्तृप्यताम्, रुद्रस्तृप्यताम्, प्रजापतिस्तृप्यताम्, देवास्तृप्यन्ताम्, छन्दांसि तृप्यन्ताम्, वेदास्तृप्यन्ताम्, ऋषयस्तृप्यन्ताम्, पुराणाचार्यास्तृप्यन्ताम्, गन्धर्वास्तृप्यन्ताम्, इतराचार्यास्तृप्यन्ताम्, संवत्सरः सावयवस्तृप्यताम्, देव्यस्तृप्यन्ताम्, अप्सरसस्तृप्यन्ताम्, देवानुगास्तृप्यन्ताम्, नागास्तृप्यन्ताम्, सागरास्तृप्यन्ताम् पर्वतास्तृप्यन्ताम्, सरितस्तृप्यन्ताम्, मनुष्यास्तृप्यन्ताम्, यक्षास्तृप्यन्ताम्, रक्षांसि तृप्यन्ताम्, पिशाचास्तृप्यन्ताम्, सुपर्णास्तृप्यन्ताम्, भूतानि तृप्यन्ताम्, पशवस्तृप्यन्ताम्, वनस्पतयस्तृप्यन्ताम्, ओषधयस्तृप्यन्ताम्, भूतग्रामश्चतुर्विधस्तृप्यताम्, इति सन्तर्प्य [ निवीतीभवन्नुत्तराभिमुखोऽतः परं द्वौ द्वावञ्जली दद्यात् ] ।

### दिव्यमनुष्यतर्पणम्

ॐ सनकस्तृप्यताम्, सनन्दनस्तृप्यताम्, सनातनस्तृप्यताम्, कपिलस्तृप्यताम्, आसुरिस्तृप्यताम्, वोढुस्तृप्यताम्, पञ्चशिखस्तृप्यताम्, इति सन्तर्प्य ( अपसव्येन-दक्षिणाभिमुखः सन्नतःपरमञ्जलित्रयेण तर्पयेत् ) ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वाध्यायतो महर्षीन् होमैर्देवान्दिवङ्गतान्पितृन् ।
श्राद्धेनान्नैर्मनुजान् बलिभिःसामान्यदेहिनःकीटान् ॥३५॥
वेदानामध्ययनं हवनं श्राद्धं तथाऽतिथेरर्चाम् ।
बलिवैश्वदेवकृत्यं निरालसः सन्निरन्तरं कुर्यात् ॥३६॥

महर्षियों का स्वाध्याय से, देवगणों का हवन से, पितृगणों का तर्पण और श्राद्ध से, मनुष्यों का अन्न से, भूतों का बलि और वैश्वदेव से, अर्चन करना चाहिए ॥ ३५ ॥ वेदों का स्वाध्याय, हवन, श्राद्ध, अतिथि-पूजन, वैश्वदेव इन पाँच वैदिक कार्यों में द्विजों को शिथिलता कभी नहीं करनी चाहिए ॥ ३६ ॥

---

## दिव्यपितृतर्पणम्

ॐ कव्यवाडनलस्तृप्यताम्, सोमस्तृप्यताम्, यमस्तृप्यताम्, अर्यमा तृप्यताम्, अग्निष्वात्ताः पितरस्तृप्यन्ताम्, सोमपाः पितरस्तृप्यन्ताम्, बर्हिषदः पितरस्तृप्यन्ताम्, [ इति दिव्यपितॄन्सन्तर्प्य यमं तर्पयेत् ]।

## यमतर्पणम्

ॐ यमाय नमः—धर्मराजाय नमः—मृत्यवे नमः—अन्तकाय नमः—वैवस्वताय-नमः—कालाय नमः—सर्वभूतक्षयाय नमः—औदुम्बराय नमः—दध्नाय नमः—नीलाय नमः—परमेष्ठिने नमः—वृकोदराय नमः—चित्राय नमः—चित्रगुप्ताय नमः [ इति यमं सन्तर्प्य—'उशन्तस्त्वेति' मन्त्रेण समस्तपितॄनावाह्य तर्पयेत् ]।

## मनुष्यपितृतर्पणम्

अमुक गोत्रोऽस्मत्पिताऽमुकशर्मा वसुस्वरूपस्तृप्यताम् [ इदं जलं तस्मै स्वधा-नमः ३ ] अमुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा रुद्रस्वरूपस्तृप्यताम् [ इदं जलं तस्मै स्वधानमः ३ ] अमुक गोत्रोऽस्मत्प्रपितामहोऽमुकशर्माऽऽदित्यस्वरूपस्तृप्यताम् [ इदं जलं तस्मै स्वधानमः ३ ] एवमेव मातृ-पितामही-प्रपितामहीनाम् । तदुत्तरं [ उदीरता-मवर० १, अंगिरसो नः पितरः २, आयन्तु नः पितरः ३, पितृभ्यःस्वधायिभ्यः ४, ये चेह पितरो ये च नेह० ५, ऊर्जं वहन्तीः ६, नमो वः पितरोरसाय ७, इति मन्त्रैः पितृतर्पणम्। [ये बान्धवा] इत्यनेन भूमौ जलनिक्षेपः । तदुत्तरं ( देवा गातुविद ) इत्यनेन दिव्यपितृ-विसर्जनम् । तदुत्तरं ( ये केचास्मत्कुले जाता ) इत्यनेन वस्त्रनिष्पीडनम्। तदुत्तरं ( संवर्चसा पयसा ) इत्यनेन मुखमार्जनम् । तदुत्तरं ( यस्य स्मृत्येति ) वन्दनम् । ( समाप्तस्तर्पणविधिः ) ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पारस्करेण मुनिना मनुना श्राद्धश्च वैश्वदेवश्च ।
लिखितो यथा तथैव व्यवहर्तव्यो निरन्तरं यत्नात् ॥३७॥

माध्यंदिन शाखावाले शुक्लयजुर्वेदियों को वैश्वदेव और श्राद्ध जिस प्रकार पारस्कराचार्य और मनुजी ने लिखा है वैसा ही करना चाहिए उसके विरुद्ध अन्य शाखावालों के सा नहीं ॥ ३७ ॥

## मनुप्रोक्तो वैश्वदेवः

यस्मिन्नग्नौ पाको विहितस्तमग्निं कुण्डे निधाय प्रसृतिपूरमन्नमादायाभिघार्याग्नेः पश्चात् प्राङ्मुख उपविश्याचम्य प्राणानायम्य देशकालौ स्मृत्वा पञ्चसूनाजनितदोषनिवृत्तिद्वारा भगवत्प्रीत्यर्थं पावकनामकेऽग्नौ वैश्वदेवं करिष्ये इति सङ्कल्प्य [ चत्वारि शृङ्गेति] मन्त्रेणाग्निं ध्यात्वा [पुनन्तु मा देवजना] इति मन्त्रेण पर्युक्ष्य निम्नमन्त्रैर्जुहुयात् ।

ॐ अग्नये स्वाहा १, सोमाय स्वाहा २, अग्नीषोमाभ्यां स्वाहा ३, विश्वेभ्यो देवेभ्यः स्वाहा ४, धन्वन्तरये स्वाहा ५, कुह्वै स्वाहा ६, अनुमत्यै स्वाहा ७, प्रजापतये स्वाहा ८, द्यावापृथिवीभ्यां स्वाहा ९, स्विष्टकृते स्वाहा १० [ इति देवयज्ञः ]

## अथ बलिहरणम्

अग्नेः पश्चाद्भूमौ स्वहस्तमितं जलेन मण्डलं विधाय तत्र निम्नमन्त्रैर्बलिं दद्यात् ।

ॐ सानुगायेन्द्राय नमः ( पूर्वस्याम् ) सानुगाय यमाय नमः ( दक्षिणस्याम् ) सानुगाय वरुणाय नमः ( पश्चिमायाम् ) सानुगाय सोमाय नमः ( उत्तरस्याम् ) मरुद्भ्यो नमः ( द्वारि ) अद्भ्यो नमः ( जले ) वनस्पतिभ्यो नमः ( मुसलोलूखलयोः ) श्रियै नमः ( उच्छीर्षके ) भद्रकाल्यै नमः ( पादतः ) विश्वेभ्यो देवेभ्यो नमः ( आकाशे ) दिवाचरेभ्यो भूतेभ्यो नमः ( अह्नि ) नक्तञ्चारिभ्यो भूतेभ्यो नमः ( रात्रये ) सर्वात्मभूतये नमः ( पृष्ठवास्तुनि ) पितृभ्यः स्वधायिभ्यः स्वधा नमः ( शेषं दक्षिणस्याम् ) इति भूतयज्ञः ।

## अनन्तरकरणीयम्

अनन्तरं [ यौ ते श्वानौ यम रक्षितारा ] इत्यथर्वमन्त्रेण श्वानमामन्त्र्य [ श्वभ्यो नमः १, पतितेभ्यो नमः २, श्वपग्भ्यो नमः ३, पापरोगिभ्यो नमः ४, वायसेभ्यो नमः ५, कृमिभ्यो नमः ६] एभिः षड्भिर्मन्त्रैः षड्ग्रासान्भूमौ विन्यसेत् । अनन्तरं [भूपतये नमः १, भुवनपतये नमः २, भूतानां पतये नमः ३, अधिपतये नमः ४, प्रजापतये नमः ५ ] इत्येतैर्मन्त्रैः पञ्च ग्रासानीश्वरप्रीत्यर्थमग्नौ जुहुयात् । तदुत्तरं [ अमृतोपस्तरणमसी ] त्याचम्य [ प्राणाय स्वाहा १, अपानाय स्वाहा २, व्यानाय स्वाहा ३, उदानाय स्वाहा ४, समानाय स्वाहा ५ ] इति पञ्चमन्त्रैर्मुखे पञ्चप्राणाहुतीर्जुहुयात् । दन्तैर्नोपस्पृशेत् । जिह्वया ग्रसेत् । तदुत्तरमाचम्याश्नीयादिति विधिः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतत्समाप्य सर्वं बालातुरवृद्धभोजनात्परतः ।
भुञ्जीत शुद्धदेशे विधिप्रयुक्तं रसप्रदं भोज्यम् ॥३८॥
पद्मे पलाशपत्रे हैमे रजतादिनिर्मिते पात्रे ।
भोक्तव्यं न कदाचन वटपिप्पलपत्रनिर्मिते विज्ञैः ॥३९॥

पंच महायज्ञों के अनुष्ठान के अनंतर बाल, वृद्ध, रोगी आदि को पहले भोजन देकर चौके में रस्य, स्निग्ध, स्थिर, हृद्य भोजन करना चाहिए, ॥ ३८ ॥ पद्म पत्र अथवा पलाश पत्र और सुवर्ण-रजतादि दिव्य धातु पात्रों में भोजन करना शास्त्र संमत है। वट, पिप्पल आदि पत्रों में नहीं ॥ ३९ ॥

लवणं घृतं पयस्यं तैलं लेह्यं तथा जलक्लिन्नम् ।
हस्तप्रदत्तमेतल्लक्ष्मीकामः कदापि नाश्नीयात् ॥४०॥
उच्चासनेषु भोज्यं मण्डलमध्ये निवेश्य यत्नेन ।
अन्नं स्तुवीत पूर्वं पश्चाद्भगवत्प्रसादमश्नीयात् ॥४१॥

लवण, घृत, मलाई, तैल, चटनी और केवल जलपकद्रवित पदार्थ लक्ष्मीकाम मनुष्य को हाथ से हाथ में लेकर नहीं खाना चाहिए ॥ ४० ॥ भोजन को अपने से उच्च आसन पर रखकर पहले अन्न की स्तुति करनी चाहिए फिर भगवान् को अर्पण करके भगवत्प्रसाद के समान उसको ग्रहण करना चाहिए, यही शास्त्रोक्त नियम है ॥ ४१ ॥

आचम्य पूर्वभागे मुखं विधायाप्रमादतः प्रयतः ।
मितमन्नमभ्यवहरेद्वारद्वयमेव भोजनं कुर्यात् ॥४२॥
शूद्रेण दृष्टमल्पं शुनाऽवलीढं बहुप्रदृष्टञ्च ।
अन्नं कदापि धीमानेकः स्वाद्वन्नमत्र नाश्नीयात् ॥४३॥

भोजन से पूर्व [ अमृतोपस्तरणमसि स्वाहा ] इस मन्त्र से एक आचमन करना चाहिए। तदनंतर पूर्व की ओर मुख करके परिमित भोजन करना चाहिए। दो से अधिक बार भोजन करना शास्त्र-वर्जित

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

है ॥ ४२ ॥ शूद्र-दृष्ट, अत्यंत अल्प, कुत्ते का जूठा, बहु-मनुष्य, दृष्ट अन्न कदापि नहीं खाना चाहिए और परिवार से अलग कोई अच्छा पदार्थ अकेले नहीं खाना चाहिए ऐसी धर्मशास्त्रोक्त विधि है ॥ ४३ ॥

भुक्त्वा यथेष्टमन्नं पश्चादाचम्य शुद्धतोयेन ।
प्रक्षाल्य दन्तलग्नं स्मरेदगस्त्यादिपञ्चकं परतः ॥४४॥
भगवत्प्रसादभूतं ताम्बूलं प्राश्य भोजनस्यान्ते ।
उदरालम्भनपूर्वकमटनं कृत्वा शयीत पर्यङ्के ॥४५॥

भोजन के अनंतर [ अमृतापिधानमसि स्वाहा ] इस मंत्र से आचमन करके दंतलग्न पदार्थ को निकालकर शुद्ध जल से मुख प्रक्षालन करना चाहिए। तदनंतर अगस्त्य आदि का स्मरण करना चाहिए ॥ ४४ ॥ इसके अनंतर। भगवत्प्रसाद स्वरूप तांबूल खाकर कम से कम सौ कदम चल फिरकर थोड़ी देर तक पर्यंक पर लेटना चाहिए ॥ ४५ ॥

---

### भोजनविधिः

आचान्तो, धृतोत्तरीयवस्त्रो, धृतश्रीखण्डगन्धपुण्ड्रो, भोजनशालामागत्य, गोमयेनोपलिप्य, शुचौ देशे, विहितपीठाधिष्ठितो, नित्यं प्राङ्मुखो हस्तपादास्येषु पञ्चस्वार्द्रो, नीवारचूर्णैर्गौरमृदा भस्मनादकेन वा मण्डलं कुर्यात् । तत्र भूमौ निहितपात्रेऽन्ने परिविष्टे [पितुं नु स्तोषमिति] मन्त्रेणान्नं स्तुत्वा [सान स्तोक] इत्यभिमन्त्र्य प्रोक्षयेत् । सत्यं त्वर्त्तेन परिषिञ्चामीति प्रातः । ऋतं त्वा सत्येन परिषिञ्चामीति सायम् । [तेजोऽसि शुक्रमसीति यजुषा ] अन्नमभिस्पृश्य ( अग्निरस्मीत्यात्मानमग्निं ) ध्यात्वा (अमृतोपस्तरणमसी) त्याचम्यान्नममृतं ध्यायन्, मौनी हस्तचापल्यादिरहितो मुखे पञ्च प्राणाहुतीर्जुहोति ॥ १ ॥

मौनं त्यक्त्वा, प्राग्द्रवरूपमश्नीयात् । मध्ये कठिनम् । अन्ते पुनर्द्रवाशी स्यात् । मधुरं पूर्वम् । लवणाम्लौ मध्ये । कटुतिक्तादिकान्पश्चाद्यथासुखं भुञ्जीत । भुञ्जानो वामहस्तेनान्नं न स्पृशेत्, न पादौ, न शिरो, न वस्ति । एवं यथारुचि भुक्त्वा भुक्तशेषमन्नमादाय भूमौ निक्षिपेत् ॥ २ ॥

न भार्यादर्शनेऽश्नीयान्न भार्यया सह, न सन्ध्ययोर्न मध्याह्ने, नार्धरात्रे, नायज्ञोपवीती, नार्द्रशिरा, नार्द्रवासा, नैकवासा, न शयानो, न ताम्रभाजने,न भिन्ने, न लौहे,न मृण्मये न सन्धिसंस्थिते, न भुवि, न पाणौ, न सर्वभोजी स्यात्, किञ्चिदन्नोज्यं परित्यजेत्, साध्वाचान्तः ( श्वात्राः पीता ) इति नाभिमालभेत ( इति कात्यायनप्रणीतं भोजनसूत्रम् ) ॥३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शयनादुत्थाय पुनः सर्वव्यवहारवोक्षणं यत्नात् ।
कर्तव्यं धनवृद्ध्यै शास्त्रादिष्टप्रकारतः सर्वैः ॥४६॥
व्यवहारमेवमाराद्विलोक्य यत्नेन तत्परं विप्रैः ।
सायङ्कालिकसन्ध्यावन्दनकर्म प्रसादतः कार्यम् ॥४७॥

लेटने के अनंतर अपना अपना व्यवहार देखना चाहिए जो कि धनोपार्जन के लिए अलग अलग नियत है वह भी धर्मशास्त्रानुकूल ही करना चाहिए ॥ ४६ ॥ व्यवहार देखने के अनंतर शौचादि क्रिया से निवृत्त होना चाहिए । तदनंतर अंगप्रोक्षणादि करके शुद्ध वस्त्र पहन कर सायंकालिक संध्या-विधि का अनुष्ठान करना चाहिए ॥ ४७ ॥

[ सायंसन्ध्याप्रयोगः ]

अत्राचमनं पूर्वं शिखानिबन्धस्तदुत्तरं परतः ।
पुनराचमनमतःपरमायामः प्राणसङ्गतः कार्यः ॥४८॥

इसमें सबसे प्रथम गायत्री मंत्र से तीन आचमन करके [ मा नस्तोके तनये ] इस मंत्र से शिखावंधन करना चाहिए । तदनंतर गायत्री से तीन आचमन करके तीन प्राणायाम करने चाहिएँ ॥ ४८ ॥

प्राणायामात्परत-
सम्बुप्राशः पुनस्त्रिराचमनम् ।
मार्जनमस्मात्परतो
जलग्रहाख्यं यथोत्तरं कृत्यम् ॥४९॥

तदनंतर [ अग्निश्च मा मन्युश्च ] इस मंत्र से अम्बुप्राशन करके गायत्री से तीन वार आचमन करना चाहिए । तदनंतर [आपो हि ष्ठा मयोभुवः] इत्यादि तीन मन्त्रों से मार्जन करके [ सुमित्रिया न आप ओषधयः सन्तु ] इस मन्त्र से जलावग्रहण करना चाहिए और इसी मन्त्र के [ दुर्मित्रिया-स्तस्मै सन्तु ] इस उत्तर भाग से जलनिक्षेप करना चाहिए ॥ ४९ ॥

अघमर्षणं परस्ता-
द्यथाक्रमेणात्र संविधायाशु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पापीयपुरुषनिरसन-
मस्मात्परतः क्रमेण कर्तव्यम् ॥५०॥

तदनंतर [ द्रुपदादिव मुमुचानः ] इस मन्त्र से अघमर्षण करके [ ऋतं च सत्यं च ] इत्यादि तीन मन्त्रों से पाप-पुरुष का निरसन करना चाहिए ॥ ५० ॥

अर्घ्यप्रदानमस्मा-
दाचमनं त्रिर्विधाय नियमेन ।
प्राणायामात्परतः
सूर्योपस्थानमागमप्रोक्तम् ॥५१॥

तदनंतर खड़े होकर गायत्री मन्त्र से सूर्य को तीन बार अर्घ्य देकर गायत्री से ही तीन बार आचमन करके पूर्वोक्त मन्त्र से एक प्राणायाम कर [ उद्वयं तमसस्परि ] इत्यादि तीन मंत्रों से उपस्थान करना चाहिए ॥ ५१ ॥

गायत्रीजपनमतः
प्रदक्षिणाऽर्कस्य मन्त्रतः सिद्धा ।
जप्यार्पणाभिवादनकरणं
भगवत्पदाब्जयोर्नित्यम् ॥५२॥

इसके अनंतर ग्यारह बार गायत्री का जप करके [ विश्वतश्चक्षुरुत विश्वतोमुखः ] इस मन्त्र से सूर्य की प्रदक्षिणा कर [ देवा गातुविदः ] इस मन्त्र से जप का निवेदन तथा सूर्य को अभिवादन करना चाहिए ॥ ५२ ॥

सम्प्रार्थनं क्षमापन-
मुभयं कर्तव्यमादरात्कृत्वा ।
अन्ते भगवद्वन्दन-
मवशिष्टं कर्म यत्नतः कार्यम् ॥५३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इसके अनंतर [ आकाशात्पतितं तोयं ] इस स्मार्त पद्य से ईश्वर की प्रार्थना करके [ यदक्षरपरिभ्रष्टं ] इस पद्य से पाठ क्षमापन कराकर [ यस्य स्मृत्या च नामोक्त्या ] इस पद्य से भगवद्वंदन करना चाहिए। इतना ही सायंकालिक श्रौत प्रयोग है ॥ ५३ ॥

एवं समाप्य सन्ध्यां दीपस्तवमप्यतःपरं कृत्वा ।
पञ्चोपचारपूजां कुर्याद्विष्णोः शिवस्य वाऽन्येषाम् ॥५४॥
इष्टार्चनं समाप्य प्रसादरूपेण भोजनं स्निग्धम् ।
विदधीत शुद्धचित्तः शयीत तस्मादनन्तरं हृष्टः ॥५५॥

इस प्रकार संध्या समाप्त करके दीपवंदन करना चाहिए। तदनंतर वैदिक विधान से अपने इष्टदेव का पंचोपचार से पूजन करना चाहिए। धूप, दीप, नैवेद्य, प्रदक्षिणा, वंदन यह पंचोपचार कहाता है ॥५४॥ इष्ट देव का पूजन कर भगवत्प्रसाद रूप स्निग्ध भोजन करके तांबूल आदि का सेवन कर शयन के लिए तैयारी करनी चाहिए ॥ ५५ ॥

[ त्रिभिर्विशेषकम् ]

सहधर्मिणीसमेतं सचित्रमेकान्तनिर्मितं हृद्यम् ।
नानाविधनवमाल्यैर्धूपैर्दीपेन सङ्गतं स्वच्छम् ॥५६॥
रमणीयालङ्कारं गारुडमन्त्रैः समन्ततो युक्तम् ।
माङ्गल्यपूर्णकुम्भं विचित्रपर्यङ्कभूषितं भव्यम् ॥५७॥
दिव्यौषधैरुपेतं शयनागारं प्रविश्य निगमोक्तम् ।
सञ्चिन्त्य रात्रिसूक्तं शयीत सुखशायिनः स्मृत्वा ॥५८॥

सहधर्मिणी के सहित, सचित्र, एकान्त में बने हुए, अनेक विध माला, धूप, दीप आदि से अलंकृत, सुन्दर, अनेक अलंकारों से युक्त, गारुड़ मंत्रों से अभिमन्त्रित, मङ्गल कलश युक्त, सुन्दरास्तरण और दिव्यौषधियों से युक्त शयनागार में वैदिक "रात्रि-सूक्त" को पढ़कर सुखशायियों का स्मरण करता हुआ मनुष्य शयन करे ॥ ६ ॥ ५७ ॥ ५८ ॥

एवं यथोक्तकर्मा विवृद्धशर्मा निरस्तबहुघर्मा ।
वत्सरशतं यथावज्जीवति मनुजो विधिप्रयोगेन ॥ ५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पारस्करप्रणीतं गृह्यं सूत्रं यथावदालोच्य ।
दिनचर्येयमुपात्ता माध्यन्दिनवेदमानिनां पुंसाम् ॥६०॥

इस दिनचर्या के अनुकूल काम करनेवाला सुख तथा समृद्धिशाली मनुष्य यदि आतप से बचा रहेगा तो सौ वर्ष पर्यन्त जीवित रहेगा ॥५९॥ मैंने पारस्कराचार्य-प्रणीत गृह्यसूत्र के आधार पर माध्यन्दिन शाखावालों की यह दिनचर्या लिखी है ॥ ६० ॥

मनुयाज्ञवल्क्यगोतमवसिष्ठदक्षात्रिशौनकादीनाम् ।
वचनप्रमाणसिद्धं समस्तमेतन्निरूपितं कृत्यम् ॥ ६१ ॥
सङ्क्षिप्य सर्वमुक्तं विस्तारश्चेदभीष्ट एतेषु ।
गृह्यादिसूत्रमध्ये विलोकनीयः स कर्मकाण्डज्ञैः ॥ ६२ ॥

इस दिनचर्या में जो कुछ लिखा गया है वह सब का सब मनु, याज्ञवल्क्य, गोतम, वसिष्ठ, दक्ष, अत्रि और शौनक आदि धर्मशास्त्रों के अनुकूल है। इसमें निराधार कोई बात नहीं है ॥ ६१ ॥ यहाँ पर जो कुछ लिखा गया है वह "संक्षिप्त" रूप से है। जिनको इन कर्मों का विस्तार अभीष्ट हो वे गृह्यसूत्रों का अवलोकन करें ॥ ६२ ॥

अस्मात्परं यथावत्सनातनस्त्रीनिषेवणीयं यत् ।
स्त्रीणामाह्निककृत्यं तदप्यवश्यं निबोधयिष्यामः ॥ ६३ ॥

इसके अनन्तर अब हम सनातन धर्मानुकूल सधवा स्त्रियों की दिनचर्या का क्रम उपस्थित करते हैं जो इस प्रकार है ॥ ६३ ॥

[ स्त्रीणामाह्निककृत्यम् ]

नारी सौभाग्यवती पत्युः प्रागेव शयनमुत्सृज्य ।
शौचादिकं यथावद्विधाय देहप्रसाधनं कुर्यात् ॥ ६४ ॥

सौभाग्यवती स्त्री को उचित है कि वह प्रातःकाल पति से पहले उठ कर शौचादि क्रिया से निवृत्त होकर अपना प्रसाधन करे ॥ ६४ ॥

देहं प्रसाधयित्वा वसनालङ्कारगन्धमाल्याद्यैः ।
गृहमार्जनं विदध्यात्सम्मार्जनलेपवस्त्रसंयोगैः ॥ ६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूजाऽग्निहोत्रपात्रप्रक्षालनकर्म तत्परं कृत्वा ।
विष्णोर्मन्दिरमार्जनहवनागारप्रसाधनं कुर्यात् ॥ ६६ ॥

प्रसाधन के अनंतर गृह का मार्जन करके गोमय से भोजनशाला का लेपन कर वस्त्र आदि का यथास्थान विन्यास करना चाहिए ॥ ६५ ॥ तदनंतर पूजापात्र, हवनपात्र आदि का मार्जन कर के भगवन्मन्दिर तथा हवनागार का प्रक्षालन करना चाहिए ॥ ६६ ॥

भोजनपात्रविशुद्धिं विधाय पूर्वं तदुत्तरं क्रमशः ।
संशोध्य पाकशालां भोजननिर्माणकार्यमनुगच्छेत् ॥६७॥
सम्पाद्य भोज्यमन्नं विधिवच्छ्रद्धासमन्विता नारी ।
सम्भोजयेत्पतिं स्वं स्वयं प्रदत्तैरनारतं भोज्यैः ॥ ६८ ॥

इसके अनंतर पाकशाला के भोजनपात्रों का प्रक्षालन एवं प्रोक्षण करके भोजनशाला को स्वच्छ बना कर भोजन बनाना चाहिए ॥ ६७ ॥ भोज्य द्रव्यों का यथाविधि संपादन करके बड़ी श्रद्धा के साथ पति के लिए परिवेषण करके अपने आराध्य देव पति को ईश्वर तुल्य समझ कर भोजन करावे ॥ ६८ ॥

सर्वं स्वपोष्यवर्गं दासीदासादिभृत्यवर्गश्च ।
सन्तोष्य भोजनाद्यैर्भर्तुर्भुक्तावशेषमश्नीयात् ॥ ६९ ॥
सुप्ते भर्तरि पश्चात्तदाज्ञयाऽन्यद्विधाय गृहकृत्यम् ।
पुनरपि गृहपरिमार्जनकर्मणि रक्ता भवेद्यथापूर्वम् ॥७०॥

पति को भोजन कराकर अपने आश्रित जनों को भोजनादि से संतुष्ट करके पति के अवशिष्ट अन्न को भगवत्प्रसाद समझ कर भोजन करे ॥ ६९ ॥ पति के शयन करने पर उनकी आज्ञा से और घर का व्यवहार देखकर मध्याह्न के अनंतर फिर गृहगत पात्र-परिमार्जन तथा पाकशाला का संशोधन करे ॥ ७० ॥

गृहगतपदार्थवीक्षणमावश्यकमन्यदेवमवगत्य ।
पुनरपि भोजनकार्ये निरता भूयात्पतिव्रता नारी ॥७१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिविष्टभोज्यमन्नं पत्युः पुरतो निवेश्य तद्भेदान् ।
वारंवारं सादरमस्य पुरस्तादुपस्थिता पृच्छेत् ॥७२॥

इसके अनंतर गृह की समस्त वस्तुओं का अवेक्षण तथा और भी आवश्यक कार्य देख भाल कर भोजन बनाने में प्रवृत्त हो ॥ ७१ ॥ भोजन सिद्ध होने पर सुन्दर पात्रों में परोस करके पति के समक्ष में रखकर बार बार अपेक्षित पदार्थों के बारे में पूँछे ॥ ७२ ॥

तदनन्तरं यथावत्प्रसाध्य पर्यङ्कमेतदवशिष्टम् ।
भुक्त्वा भर्तुः पदयोः संवाहनकर्म नित्यशः कुर्य्यात् ॥७३॥
संवाहनादनन्तरमेतस्याज्ञामवाप्य तत्सविधे ।
हृष्टा शयीत नित्यं धर्मो ह्येषः सनातनः स्त्रीणाम् ॥७४॥

भोजन कराकर पति को शयनागार में लिटा दे और उसकी आज्ञा से उसका अवशिष्ट खाकर नित्य पति की चरणसेवा करे ॥ ७३ ॥ इसके अनन्तर पति की आज्ञा से जहाँ पति कहे वहाँ पर पति के पास ही प्रसन्न होकर शयन करे। यही स्त्रियों का सनातन धर्मानुकूल दैनिक कार्य नियत है ॥ ७४ ॥

स्त्रीणां मया समुक्ता दिनचर्य्यैषा यथाक्रमं यत्नात् ।
सुखयतु ललनावर्गं तत्तदभीष्टप्रदानतः पुण्या ॥ ७५ ॥

यह जो हमने स्त्रियों की दिनचर्या लिखी है वह भी अनेक धर्मशास्त्रों का अवलोकन कर उनके आधार पर ही लिखी है। स्त्रियों को उचित है कि वे इसी प्रकार काम करती हुई संसार में समस्त सौभाग्य का उपभोग करें ॥ ७५ ॥

[ रजोवतीकर्तव्यम् ]

या स्त्री रजोवती स्यादपास्य सर्वं दिनत्रयं सा तु ।
भूमौ शयीत नास्याः समीपदेशं महोदयो गच्छेत् ॥७६॥
दर्भासनोपविष्टा मृण्मयपात्रे हविष्यमश्नन्ती ।
निर्वासिताङ्गभूषा न कञ्चिदवलोकयेद्वधूः साध्वी ॥७७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जो स्त्री यथा समय रजोवती हो वह घर का सब काम छोड़कर तीन दिन पर्यंत पृथिवी पर शयन करे और अपने पास किसी बालक अथवा अन्य पुरुष को न आने दे ॥ ७६ ॥ कुश के आसन पर बैठकर मृत्तिका पात्र में हविष्य अन्न का भोजन करे और समस्त आभूषण उतार कर किसी का अवलोकन न करे ॥ ७७ ॥

स्नात्वा चतुर्थदिवसे पत्युर्मुखमेव पूर्वमवलोक्य ।
वस्त्रालङ्कारयुता गृहस्थकार्याणि पूर्ववत्कुर्यात् ॥७८॥

चतुर्थ दिवस में प्रातःकाल गरम जल से स्नान करके सुन्दर वस्त्र एवं अलंकार धारण करे। तदनंतर सब से प्रथम अपने पति का मुखावलोकन करे। तदनंतर अन्य गृहस्थ के सब कार्य करने में प्रवृत्त होवे ॥ ७८ ॥

[ प्रोषितपत्नीकर्तव्यम् ]

देशान्तरं प्रयाते पत्यौ द्वारप्रदेशमागत्य ।
नोपविशेन्न च पश्येन्न संवदेन्नापि खलु विहसेत् ॥७९॥

दिव्याङ्गरागलेपं भूषणवसनप्रसाधनं यत्नात् ।
प्रोषितपत्नी दिव्यं भोजनमपि भूरि सर्वदा जह्यात् ॥८०॥

पति के विदेश जाने पर पतिव्रता स्त्री द्वार पर खड़ी न हो, किसी अन्य पुरुष के साथ संभाषण न करे, न किसी को देखे और न हास्य करे ॥७९॥ सुन्दर वस्त्र एवं आभूषण न पहने, उबटन आदि अंगराग न करे और स्वादु भोजन न करे यही धर्मशास्त्रों में प्रोषितभर्तृका का नियम है ॥ ८० ॥

[ विधवाकर्तव्यम् ]

विधवा सती न कुर्यात्कवरीबन्धं यतः स बन्धाय ।
भर्तुर्भवति ततः सा शिरसो वपनं निरन्तरं कुर्यात् ॥८१॥

नीचैः शयीत नक्तं नाभ्यवहारं कदापि सा कुर्यात् ।
श्वेताम्बरा निरीहा समर्चयेन्नित्यमादरेण हरिम् ॥८२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधवा स्त्री कदापि अपनी कवरी का बंध न करे ऐसा करने पर उसका पति बंधन में पड़ता है इस कारण वह सर्वदा अपने केशों का वपन करावे अथवा अपने केश खुले रक्खे ॥८१॥ विधवा को चाहिए कि वह सर्वदा पृथिवी पर शयन करे, रात्रि को भोजन न करे, सफ़ेद वस्त्र पहने, निर्लोभ रहे और सर्वदा अपना मन भगवान् के चरणों में लगावे ॥ ८२ ॥

उपवासकृशशरीरा व्रतप्रसक्ता नितान्तमक्रोधा ।
विस्मृतशरीरवेषा विधवा तिष्ठेद् गृहेषु निभृतैव ॥८३॥
नैवं करोति या स्त्री विधवा भूत्वा भवे भवे साऽत्र ।
विधवैव भवति भूयस्तस्मादेवं कदापि सा नेच्छेत् ॥८४॥

उपवासों द्वारा अपना शरीर दुर्बल करे, व्रत में तत्पर रहे, क्रोध न करे, अपने शरीर को कभी न सजावे और एकांत में छिपकर रहे ॥ ८३ ॥ जो स्त्री विधवा होकर ऐसा नहीं करती है वह अनेक जन्मों तक बार बार विधवा होकर अनेक कष्ट पाती है ॥८४ ॥

[ विधवाविवाहनिरसनम् ]

ये विधवाकरपीडनमागमसिद्धं वदन्ति ते मूढाः ।
न विदन्ति धर्मतत्त्वं न धर्मशास्त्रं न धर्मपरिचर्याम् ॥८५॥
यावन्ति लोकमध्ये धार्मिकवचनानि धर्मशास्त्रेषु ।
लभ्यन्ते विधवोचितधर्माणां तेषु सङ्गतिर्मृग्या ॥८६॥

जो मूढ़जन विधवा का विवाह शास्त्रानुमत बताते हैं वे धर्म का तत्व नहीं जानते हैं, न धर्मशास्त्रों का उन्होंने अवलोकन ही किया है और न वे धर्म की सेवा करना जानते हैं ॥ ८५ ॥ धर्मशास्त्रों में जितने वचन इस विषय के प्राप्त होते हैं उनका पौर्वापर्य देखकर उनकी संगति लगानी चाहिए ॥ ८६ ॥

सप्तपदीतः पूर्वं कन्या कन्यैव नो वधूभावम् ।
प्रतियाति सर्वमेतद्वेदविधिज्ञा वदन्ति विद्वांसः ॥८७॥
तस्माद्यदि समयात्प्राग्धवः समेयान्मृतिं तदा कन्या ।
तस्यानुजाय देया सङ्गतिरेषैव सर्ववचनानाम् ॥८८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सप्तपदी होने से पूर्व कन्या कन्या ही रहती है, वधूभाव को प्राप्त नहीं होती है इस बात को सभी वेदज्ञ विद्वान् कहते हैं ॥८७॥ सप्तपदी होने से पूर्व यदि किसी कारण वश कन्या का पति मर जावे तो उस कन्या का उसके छोटे भाई देवर से विवाह करना चाहिए यही समस्त धर्मशास्त्रों का रहस्य है ॥ ८८ ॥

सप्तपदीतः पश्चात्कन्या गोत्रेण सङ्गता पत्युः ।
सर्वं जहाति पैतृकगोत्रव्यवहारमागमादेशात् ॥८९॥
हृदयेन हृदयदेशः प्राणैः प्राणो मनोऽपि तन्मनसा ।
सप्तपदीतः पश्चादैक्यं समवैति मन्त्रसम्बन्धात् ॥९०॥

सप्तपदी होने के अनंतर कन्या पति के गोत्र में मिल जाती है उसका अपने पैतृक गोत्रके साथ कोई संबंध नहीं रहता है। ८९ ॥ सप्तपदी होने पर आपस में वधू और वर का हृदय से हृदय, प्राण से प्राण, मन से मन मिल जाता है। उस समय के वैदिक मन्त्र इसमें प्रमाण है ॥ ९० ॥

एकीभावं प्रगते पञ्चीकरणे शरीरसम्बन्धः ।
पूर्णतयैव यथावत्प्रजायतेऽतो न कन्यकास्वाम्यम् ॥९१॥
पित्रा सकृत्प्रदत्ता पराङ्गभूता दिवङ्गते पत्यौ ।
अर्द्धाङ्गभूतदेहा कस्मै केन प्रदातुमिह शक्या ॥९२॥

पंचीकरण के एक हो जाने पर कन्या के शरीर का पति के शरीर के साथ सर्वाङ्गीण संबंध हो जाता है इसलिए कन्या का अपने शरीर पर स्वाम्य नहीं रहता है ॥ ९१ ॥ जिस कन्या का पिता ने एक बार [स्व-स्वत्व-निवृत्तिपूर्वक परस्वत्वोत्पादक] दान दे दिया, जिसका पति के साथ सर्वाङ्गीण संबंध हो चुका, पति की वह अर्द्धाङ्गस्वरूप वह कन्या यदि दैवयोग से विधवा हो जाय तो उसको कौन और किसके लिए दे सकता है। इस पर सूक्ष्म दृष्टि से विचार कीजिए ॥ ९२ ॥

यदि सा स्वयं स्वदेहं परेण पुंसा नियोजयत्यत्र ।
कुलटा तदा स्वयं सा सतीकदम्बे विगीयते पापात् ॥९३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पति के मरने पर यदि वह स्वयं अपने शरीर को दूसरे के साथ मिलाती है तो वह कुलटा ( वेश्या ) होकर पतिव्रताओं में स्वयं निंदनीय समझी जाती है ॥ ६३ ॥

[ शूद्रविवाहविमर्शः ]

शूद्रेषु यो विवाहः प्रजायते तत्र नैव मन्त्राणाम् ।
विनियुक्तिरस्ति तस्मादमन्त्रकं कर्म शूद्रजातीनाम् ॥६४॥
अतएव तेषु गोत्रप्रकल्पनं नास्ति नापि सप्तपदी ।
तदभावे कन्यायाः स्वातन्त्र्यं केन शक्यते हातुम् ॥६५॥

शूद्रजाति में एक पुरुष के मरने पर जो कराव होता है उसमें मंत्र-प्रयोग कारण नहीं है, क्योंकि शूद्रों का वेदाधिकार न होने पर विवाह भी अमंत्रक ही होता है। अमंत्रक विवाह होने पर वधूवर का पति-पत्नी-भाव भी केवल नाम के लिए ही कहा जा सकता है वास्तव में नहीं। इस लिए उनका उदाहरण देना अप्रासंगिक है ॥ ६४ ॥ मंत्रपूर्वक विवाह न होने के कारण ही उनमें न गोत्र व्यवहार है और न सप्तपदी है। जब शूद्रों में गोत्र होता ही नहीं तो बदला क्या जाय ? इसी कारण कन्या का अपने शरीर पर स्वाम्य रहता है ॥ ६५ ॥

एकस्मिन्दिवमाप्ते पुरुषे पश्चात्परस्य गेहे सा ।
निवसति तस्मादेव प्रायः शूद्रेषु वृत्तमस्त्येतत् ॥६६॥
अतएव तत्र विधवापदप्रवृत्तिर्न मुख्यरूपेण ।
सञ्जाघटीति वैदिकमन्त्राणां तेषु सर्वथाऽभावात् ॥६७॥

इसी कारण स्त्री शूद्रजाति में एक पुरुष के मरने पर दूसरे पुरुष के साथ उसके घर में रहती है। यह विधवा का विवाह नहीं किन्तु कराव है। शूद्रों में प्रायः होता रहता है। धर्मशास्त्रों में विवाह वही माना जाता है जो विधि से वेदमन्त्रों द्वारा होता है ॥ ६६ ॥ इसीलिए शूद्रजाति के कराव में मुख्यरूप से विधवा शब्द की प्रवृत्ति ही नहीं होती है उनमें उपचारमात्र वैधव्य माना जाता है वास्तव में नहीं क्योंकि वैदिक मंत्रों का उनमें सर्वथा अभाव है ॥ ६७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शूद्रः श्मशानभूतो वेदानर्हः प्रनष्टगोत्रगतिः ।
पदजः परोपजीवी यत्कुरुते तन्न सद्द्विजैः कार्यम् ॥९८॥
एवं पुनर्द्विजातीन्विधवाधर्मं निबोधयन्धर्मः ।
दिनचर्यामपि हर्षात्समापयामास वेदसन्दिष्टाम् ॥९९॥

शूद्र वेद के लिए श्मशान रूप है, [ वेदांतदर्शन, पूर्वमीमांसा, अथर्ववेद, गृह्यसूत्र, उपनिषदें, धर्मशास्त्र] इन सब में शूद्र को वेद का अधिकारी नहीं माना है, गोत्रपरंपरा से अलग है, पद से उत्पन्न है, परोपजीवी है, इन पाँच कारणों से पतित शूद्र का द्विजों को अनुकरण कदापि नहीं करना चाहिए ॥ ९८ ॥ इस प्रकार धर्मदेव ने द्विजों के प्रति विधवा धर्म का रहस्य समझाकर वेदादिसत्यशास्त्रानुमोदित उसकी दिनचर्या का भी उपसंहार किया ॥ ९९ ॥

एतावतैव समयेन सहस्रभाना
वस्ताचलं प्रति गते विषयेऽप्यकस्मात् ।
पूर्तिङ्गते सुरधुनीतटदत्तचित्तः
सर्गं समाप्तिमनयत्कविरप्रमत्तः ॥१००॥

इतने ही में सूर्य भगवान् अस्ताचल की चोटी पर पहुँच गए और हमारा विषय भी उपक्रमोपसंहार द्वारा समाप्त हो चुका । इन दो कारणों से यह सर्ग भी हमने यहीं पर समाप्त कर दिया ॥ १०० ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये,
दिनचर्याविवेचनं नामैकविंशतितमः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## द्वाविंशः सर्गः

भविष्यवृत्तान्तमतःपरं पुन-
　　र्महीपतिं प्रष्टुमुपागता जनाः ।
यथाक्रमं प्रश्नपरम्परामिमा-
　　मुपस्थितस्यास्य पुरो बभाषिरे ॥१॥

इसके अनन्तर भविष्य वृतान्त पूछने के लिए सभा में आए हुए धार्मिक सज्जनों ने धर्मदेव के समक्ष अपना प्रश्न इस प्रकार उपस्थित किया ॥ १ ॥

महीपते ! पापपरायणः कलिः
　　कदाऽवसानं प्रतियास्यति क्षितौ ।
पदङ्कदा भारतभूतले न्यधा-
　　द्भविष्यति स्थास्यति कुत्र निर्वृतः॥२॥

हे भगवन् ! इस पापपरायण कलियुग का अवसान कब होगा ? इस भारत में इसका पदार्पण कब हुआ ? भविष्य काल में यह कहाँ रहेगा ॥२॥

समेत्य तारुण्यमयं महाबलः
　　किमाचरिष्यत्यभयः पदे पदे ।
कदा च कल्किर्भगवान्भुवस्तले
　　स्वभक्तरक्षार्थमवातरिष्यति ॥३॥

जब यह प्रथम चरण समाप्त करके द्वितीय तथा तृतीय चरण में पहुँचेगा तब क्या क्या उत्पात मचावेगा ? और भगवान् कल्कि का अवतार कब होगा ? ॥ ३ ॥

महीश्वरोऽसाववतीर्य भूतले
　　किमद्भुतं कर्म चिराय शान्तये ।


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधास्यते सर्वमिदं यथाक्रमं
निबोधयत्वद्य भवानुपागतः ॥४॥

भगवान् कल्कि अवतार लेकर क्या क्या अद्भुत कार्य करेंगे ? इन सब लोकोत्तर प्रश्नों का कृपा करके आप उत्तर प्रदान कीजिए ॥ ४ ॥

अदः समाकर्ण्य मनोरमं वचः
समागतानां समयोचितं नृपः ।
समुत्तरादाननिविष्टमानसा-
निदं बभाषे निगमानुमोदितम् ॥५॥

सभा में उपस्थित हुए धार्मिक सज्जनों की इस समयोचित प्रश्न-परम्परा को सुनकर प्रसन्न-चित्त धर्मदेव ने इस प्रकार कथन आरम्भ किया ॥ ५ ॥

दिवं प्रयातो भगवानधोक्षजो
यदा तदैवात्र पदं कलिर्न्यधात् ।
वदन्त्यदः पूर्वविदो मुनीश्वराः
परापरज्ञानजुषः शुकादयः ॥६॥

जिस दिन इस धरातल से भगवान् श्रीकृष्णचन्द्रजी अपने गोलोक को पधारे उसी दिन कलियुग ने भारत में पदार्पण किया ऐसा शुकदेव आदि महर्षिगण पूर्वकाल में कह गये हैं ॥ ६ ॥

मघां व्युदस्याशु महर्षयो यदा
क्रमेण नक्षत्रमगुस्तदुत्तरम् ।
ततःप्रभृत्येष वयस्यवस्थित-
श्चकास्ति भूमौ बहुभिः स्वसाधनैः ॥७॥

मघा नक्षत्र को छोड़ कर सप्तर्षि मण्डल जब पूर्वाषाढ़ नक्षत्र पर गया है तभी से इस कलि का प्रभाव बढ़ने लगा है ॥ ७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मघामगुः सप्तमहर्षयः क्रमा-
यदा तदाऽयं शिशुतामुपागतः ।
पदे पदे धर्मरताननुक्रमा-
द्विवेश नानाविधपापसङ्क्रमैः ॥८॥

जिस दिन सप्तर्षि मण्डल मघा नक्षत्र पर आया हुआ था उस समय यह कलि छोटे बालक के रूप में मनुष्यों में प्रविष्ट होने लगा ॥ ८ ॥

अमुष्य पादे प्रथमे कलेर्जनाः
प्रमादतः कृष्णविनिन्दकाः शठाः ।
विवृद्धिमेष्यन्ति निरस्तवैदिक-
क्रियाकलापा निगमागमद्विषः ॥६॥

इस कलि के प्रथम चरण में मनुष्य अपने प्रमाद से भगवान् श्रीकृष्ण-चन्द्रजी की निन्दा करना आरम्भ करेंगे और अपना अपना कर्म छोड़ते हुए वेदों की निन्दा में प्रवृत्त होंगे ॥ ६ ॥

पदे द्वितीये क्रमशः समागते
यथोत्तरं विस्मृतनामकीर्तनाः ।
विनष्टरागा भगवत्पदाम्बुजे
जना भविष्यन्ति कलेः प्रतर्दनात् ॥१०॥

इसके दूसरे चरण में भगवान् का नाम तक भूल जायँगे और हृदय में उनके कभी भी भगवान् का स्मरण न आवेगा ॥ १० ॥

तृतीयपादे धरणीतलङ्गते
निरस्तवर्णव्यवहारवृत्तयः ।
पुरे पुरे दुर्मदवर्णसङ्कराः
पशुत्वमेष्यन्ति जनाः समन्ततः ॥११॥

जब इसका तीसरा चरण उपस्थित होगा तब पृथिवी पर वर्ण-व्यवस्था नष्ट हो जायगी और सब मनुष्य वर्णसंकर होकर पशु की तरह व्यवहार करने लगेंगे ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदे चतुर्थे विहताच्युतक्रियाः
प्रनष्टयज्ञाः प्रमदाप्रियङ्कराः ।
स्वतो भविष्यन्ति जना मदोद्धताः
प्रकर्षतो विस्मृतजातिबन्धनाः ॥१२॥

इसके चतुर्थ चरण में भगवान् का पदे पदे अनादर होगा, यज्ञों की चर्चा तक उठ जायगी, मनुष्य स्त्रियों के गुलाम बनेंगे, जाति पाँति का भेद न रहेगा ॥ १२ ॥

इमामवस्थां प्रगते भुवस्तले
न बाहुजानां भविताऽनुशासनम् ।
प्रमत्तशूद्रादिनिकृष्टजन्मना-
मनारतं स्थास्यति राज्यमुद्धुरम् ॥१३॥

यह कलि की दशा भारत में जब उपस्थित होगी तब क्षत्रियों का राज्य नष्ट होगा, केवल शूद्र राजा इस पृथिवी पर राज्य करेंगे ॥ १३ ॥

प्रवर्तते यद्भुवि शासनं क्रमा-
त्ततःपरं मौननृपप्रशासनम् ।
प्रवत्स्यते यत्त्रिशतं समाः क्षितौ
प्रतिष्ठितं स्थास्यति धर्मनाशनम् ॥१४॥

वर्तमान समय में जो राज्य प्रचलित है उसकी दश पीढ़ी बीत जाने पर भारत में मौन जाति का राज्य होगा जो तीन सौ (३००) वर्ष तक रहेगा ॥ १४ ॥

सहस्रमेकं नवतिं नवाधिका-
मतीत्य मौनत्रिशतीं च तत्परम् ।
प्रवीरकान्ताः क्षितिपा धरातले
शतं समाः शास्तुमलं षडुत्तरम् ॥१५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एक हजार निन्यानवे वर्ष [ १०९९ ] के अनंतर वर्तमान शासन का जब अंत आवेगा तब तीन सौ [ ३०० ] वर्ष तक मौन राज्य रहेगा। तदनंतर प्रवीरक तक बहुत से राजा एक सौ छः वर्ष तक [ १०६ ] यहां पर राज्य करेंगे ॥ १५ ॥

त्रयोदशैषां तनयाः पुनः क्षितिं
प्रशास्य वंशानुगमेन सर्वतः ।
यशोऽवशिष्टाः स्वकृतैरघोत्तरैः
स्वतो भविष्यन्ति विनष्टशासनाः ॥१६॥

इनके अनंतर महाराजा प्रवीरक के उत्तराधिकारी तेरह राजा भारत में शासन कर अपने राज्य के प्रभाव से सब को अपने वश में करेंगे ॥१६॥

स पुष्पमित्रः पुनरत्र भूतले
समेत्य राज्यं बहु बाहुसम्भवः ।
विभिन्नभागेषु निजान्वयोद्भवा-
न्निवेशयिष्यत्यपरान्महीभुजः ॥१७॥

इनके अनन्तर महाराजा पुष्पमित्र क्षत्रिय राजा इस धरातल पर शासन करके भूमि के भिन्न भिन्न भागों पर अपने पुत्रपौत्रों को नियुक्त करेंगे ॥ १७ ॥

क्रमाद्विनाशं प्रगतेषु तेष्वपि-
प्रचण्डमन्युर्भुवि मागधो नृपः ।
भुवं समस्तामनुशास्य यत्नतो
विनष्टवर्णां भुवनङ्करिष्यति ॥१८॥

इन सब के नष्ट होने पर मगध देश का अत्यंत क्रोधी एक राजा समस्त पृथिवी पर शासन करके वर्णव्यवस्था का नाश करेगा ॥ १८ ॥

अवन्तिसौराष्ट्रकलिङ्गमालव-
क्षितौ पुनः केऽपि समेत्य शासनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुखेन काश्मीरभुवस्तटावधि
स्वयङ्करिष्यन्ति मदोद्धतक्रमाः ॥१६॥

इसके अनंतर अवंति, सौराष्ट्र, कलिंग, मालव, इन देशों में कुछ शूद्र राजा राज्य करते करते कश्मीर तक अपना राज्य बढ़ावेंगे ॥ १६ ॥

इति क्रमेणात्र परीक्षितात्परं
बृहद्रथाद्याः क्षितिपाः पदे पदे ।
परस्परायोधनतः समुत्थितं
क्षयङ्गमिष्यन्ति विधेरनुग्रहात् ॥२०॥

इस क्रम से इस भूमंडल पर महाराजा परीक्षित के अनंतर महाराज बृहद्रथ से लेकर अनेक राजा शासन करते करते अंत में आपस में सब एक दूसरे से लड़ कर नष्ट होंगे ॥ २० ॥

तथाविधानां मदमत्तभूभुजां
प्रशासने यानि कलेः कुतूहलात् ।
मुहुर्भविष्यन्ति जनेषु भैरवा-
ण्यनुक्रमात्तानि पठन्तु कोविदाः ॥२१॥

इस प्रकार पूर्व कहे हुए राजाओं के शासनकाल में कलि के जो जो अद्भुत विकास होंगे उनका अब क्रमशः सूचीपत्र पढ़िए ॥ २१ ॥

महीकरत्रस्तविनष्टचेतसो
जना महीपाः करमात्रजीविनः।
विनष्टसस्या वसुधा पयोधराः
क्वचित्क्वचिद्वृष्टिकरा न सर्वतः ॥२२॥

प्रजा के मनुष्य प्रतिदिन नवीन भूमि-कर से त्रस्त होंगे, राजा लोग भूमि कर से ही निर्वाह करेंगे, पृथिवी पर अन्न और तृण दोनों कम होंगे और मेघमाला खंड-वृष्टि पर उतारू होगी ॥ २२ ॥

विनष्टवैधव्यकथाः पुरे पुरे
विनष्टलज्जाः प्रमदा गृहे गृहे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परान्नरक्ताः प्रसभं द्विजोत्तमाः
श्वपाकचर्मम्नकिरातवृत्तयः ॥२३॥

नगर नगर में स्त्रियां वैधव्यवेश को नष्ट कर वेश्या बनेंगी, गृह गृह में स्त्रियां निर्लज्ज होंगी, ब्राह्मण परान्नपुष्ट होकर शूद्रवृत्ति करेंगे ॥२३॥

विनष्टरागाः स्वपतौ कुलस्त्रियः
पुरेपुरे वारवधूजनव्रजाः ।
नदीतटे मन्दफला महीरुहः
प्रचण्डवेगाः सरितोऽपि भूतले ॥२४॥

स्त्रियां अपने पति की सेवा में संकोच करेंगी, ग्राम ग्राम में वेश्या बढ़ेंगी, नदियों के किनारों पर फसल होगी और नदियों के वेग से ग्राम नष्ट होंगे ॥ २४ ॥

स्वयङ्गृहीतद्रुतभैक्ष्यवृत्तयः
पदे पदे मस्करिणो जनाधमाः ।
धृतोपवीताः परवञ्चने रताः
परान्नपुष्टा वणिजोऽपि भिक्षवः ॥२५॥

वर्णसंकर साधुवेष धारण करके संसार को ठगेंगे, शूद्र और अन्त्यज संन्यासी बन कर उपदेश देंगे, नीच जातियां उपवीत पहनेंगी, और वैश्य भिक्षावृत्ति से निर्वाह करेंगे ॥ २५ ॥

धनाढ्यतैवोत्तमजन्मबोधिका
विदेशनीरेषु हठेन तीर्थता ।
प्रचण्डवाचालजनेषु विज्ञता
यशोविशेषाय स धर्मसञ्चयः ॥२६॥

धन से उत्तम जाति प्रतीत होगी, पास के तीर्थों से श्रद्धा हटकर दूर के तीर्थों में होगी, वाचाल पंडित माने जायेंगे और कीर्ति के लिए धर्माचरण होगा ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महालसत्वं विरतेः प्रबोधकं
बलेन हीनाः क्षमया परिष्कृताः ।
परस्परं वस्तुविपर्ययप्रथा
वदान्यतायाः प्रथमं निदर्शनम् ॥२७॥

महा आलसी विरक्त बनेंगे, दुर्बल क्षमावान् समझे जायँगे, किसी से कुछ लेकर बदले में कुछ देना उदारता का बोधक होगा ॥ २७ ॥

परस्परस्वीकृतिरेव वैदिकी
विवाहदीक्षा वनितासहोदरैः ।
सखित्वभावः स्वजनप्रवञ्चनं
प्रशस्तचातुर्यकलानिबोधकम् ॥२८॥

आपस में मित्रता ही वैदिक विवाह समझा जायगा, स्त्री के भाई श्याल मित्र बनेंगे और अपने बांधवों का ठगना ही चातुर्य्य माना जायगा ॥ २८ ॥

प्रतिग्रहादानपराः पदोद्भवा-
गुरोः परीवादरता गुणेप्सवः ।
गृहानुरक्ता यतयः पदे पदे
विरक्तवेषा गृहमेधिनो जनाः ॥२९॥

शूद्र प्रतिग्रह लेनेवाले होंगे, शिष्य गुरु की निंदा करनेवाले बनेंगे, संन्यासी गृहस्थ बन कर धन और धाम के उद्यम में लगेंगे और गृहस्थ जन विरक्त-वेष होकर कष्ट का अनुभव करेंगे ॥ २९ ॥

प्रसाधनं वेश्मनि केशवेषयो-
रलङ्क्रिया बन्धुषु गर्वदर्शनम् ।
कुसीदवृत्तिः परमा कुलीनता
धनित्वमेवात्र महत्त्वबोधकम् ॥३०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मकान में जाकर केश और वेष का बनाना ही अलंकार होगा, बांधवों पर हुकूमत रहेगी. सूद से धन कमाना कुलीनता का सूचक होगा और धनवान् होना ही महत्त्व का परिचायक होगा ॥ ३० ॥

ख-नेत्र-वर्षावधि षोडशायुषः
क्रमेण सर्वेऽपि चिरायुषो जनाः ।
पुरे पुरे वामनताविडम्बिनो
निजार्थदक्षाः परमार्थपङ्गवः ॥३१॥

मनुष्यों की परमायु बीस वर्ष की होगी, सोलह वर्ष की अवस्था वाले तरुण समझे जायेंगे । मनुष्य और स्त्री वामन ( छोटे कद के ) होंगे, सब लोग स्वार्थी होकर परमार्थ करना भूल जायेंगे ॥ ३१ ॥

सुताः स्वपित्रोरनुशासने रताः
पदोद्भवानां परिचारका द्विजाः ।
वधूसखायः परवञ्चका नरा
निजोदरोपस्थभृतौ धृतव्रताः ॥३२॥

पुत्र पिता पर शासन करेंगे, द्विज शूद्रों की सेवा करेंगे, मनुष्य हर काम में स्त्रियों से सलाह लेगें और सब प्राणी शिश्नोदर-परायण बनेंगे ॥ ३२॥

सहोदरैर्भ्रातृभिरेव सङ्गताः
कुमारिकाः कामुकतामुपागताः ।
सुताःस्वमातर्यपि कामदृष्टयो
जनेषु के पुत्रवधूषु नो रताः ॥३३॥

आपस में भाई और बहन के विवाह होंगे, पुत्र माता से स्त्री का व्यवहार करेंगे, श्वशुर पुत्रवधुओं पर आसक्त होंगे ॥ ३३ ॥

अवेरधःस्थं लघवः कलेर्वशा-
दनातपं वीक्ष्य खरांशुभिः क्षताः ।
जनाः प्रयास्यन्ति सुखाय भूतलं
पराभवन्त्ये भुवने महोन्नताः ॥३४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनुष्य छोटे होने के कारण भेड़ की छाया में आकर विश्राम करेंगे, बावन अंगुल के मनुष्य बहुत बड़े माने जायेंगे ॥ ३४ ॥

अनेकदस्युप्रतिघातपीडिता
जनाः परित्यज्य निजानि सर्वतः ।
गृहाणि यास्यन्ति वनानि शर्मणे
कदन्नमूलाभ्यवहारदुर्बलाः ॥३५॥

चोरों से त्रस्त होकर मनुष्य इधर उधर भटकते हुए कदन्न से दुर्बल होकर स्थानरहित होंगे और वनों में कष्ट भोगेंगे ॥ ३५ ॥

विपत्प्रदिष्टामतिगर्हितां भृतिं
समावलम्ब्योन्नतभावमानिनः ।
जनाः कुलीनं निजदासमापदि
क्रमेण हास्यन्ति तथा जरद्गवीम् ॥३६॥

अत्यंत निकृष्ट नौकरी को प्राप्त होकर मनुष्य अपने को उन्नत मानेंगे और पुराने कुलीन सेवक को आपत्काल में छोड़ कर बूढ़ी गौ को घर से निकाल बाहर करेंगे ॥ ३६ ॥

गृहे गृहे काकणिकामितं धनं
ग्रहीतुकामा धनमानवर्जिताः ।
स्वमित्रबन्धुष्वपि वैरवासनां
विडम्बयिष्यन्ति विहाय सौहृदम् ॥३७॥

एक काकिणी मात्र धन के ऊपर विवाद करने वाले, मानशून्य जन अपने पुत्रादि पर भी संदेह करके उनसे द्वेष करेंगे ॥३७॥

अदृष्टवेदागमसत्कथा अपि
प्रपञ्चरक्ताः परनिन्दने रताः ।
शठा हठादुन्नतमासनं जवा-
द्वाप्य धर्मं गदितुं विवक्षवः ॥ ३८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिन्होंने न कभी वेदों का अवलोकन किया, न कभी पुराण और इतिहास का अनुशीलन किया ऐसे परनिन्दक, प्रपंची, दंभी शठ हठ से उन्नत आसन पर बैठ कर धर्मोपदेश देने के लिए उद्यत होंगे ॥ ३८ ॥

द्विजन्मनां राक्षसयोनिसम्भवा
गृहेषु दैवादधिगत्य सम्भवम् ।
विरुद्धकार्यादरणे सदा रता
विडम्बयिष्यन्ति जनानुपस्थितान् ॥ ३९ ॥

ब्राह्मण, क्षत्रिय, वैश्यों के गृहों में राक्षस जन्म लेकर वैदिक मर्यादा को नष्ट करेंगे और अपनी मनमानी बात चलाकर बूढ़े माता पिता आदि का तिरस्कार करेंगे ॥ ३९ ॥

विदेशभाषामधिगत्य धार्मिक-
प्रधानकृत्येषु कुतर्कसंश्रयात् ।
मतं स्वकीयं विनिवेश्य तद्गतं
विनाशयिष्यन्ति महत्त्वमद्भुतम् ॥ ४० ॥

अरबी, फारसी, लेटिन, ग्रीक आदि देशों की भाषा सीख कर मनुष्य धार्मिक कार्यों में तर्क करेंगे और उनमें अपने मत का परिचय देकर धार्मिक महत्त्व को नष्ट करेंगे ॥ ४० ॥

परस्परं भिन्नमतप्रधानता-
मुपेत्य मन्दाः किल केऽपि भूतले ।
मतप्रपञ्चप्रथनार्थमुद्यताः
स्वयं प्रणेष्यन्ति नवीनदर्शनम् ॥ ४१ ॥

आपस में एक दूसरे से भिन्न अपने अपने मत की स्थापना करने के लिए कोई कोई मदोद्धत नवीन दर्शनों के संपादन में भी संकोच न करेंगे, [निराकार मीमांसा] इसका प्रत्यक्षनिदर्शन है ॥४१॥

मतं ऋषीणाममतं न सम्मतं
निजं मतं सर्वमतेन सम्मतम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निवेद्य मूढेषु मदेन केऽप्यहो !
नवीनगीतोद्ग्रथनार्थमुद्यताः ॥ ४२ ॥

ऋषियों का मत अमत है, इसीलिए संमत नहीं है, हमारा मत सर्व-मत-संमत है, ऐसा मूढ़ मनुष्यों में कहकर कोई कोई मदांध नवीन ,नवीन गीता-ग्रंथ बना कर प्रवृत्त करेंगे ॥४२॥

मदोद्धताः केऽपि मदान्धदृष्टयो
जनाः स्वकार्यं भुवि कर्तुमुत्त्वराः ।
नवस्मृतीनामपि वाक्यसङ्ग्रहं
स्वयं करिष्यन्ति मतप्रवर्तकाः ॥ ४३ ॥

कोई कोई विकृत-मस्तिष्क संसार में अपना मतलब गांठने के लिए नवीन स्मृति अथवा स्मृति-संग्रह बनाकर मनुष्यों में उपस्थित करेंगे ॥४३॥

मलीमसत्वान्मनसो यथोचितं
तदर्थमप्राप्य निरर्थकश्रमाः ।
अमन्दमन्दाः किल केऽपि पूर्वज-
स्मृतौ वदिष्यन्ति हठाद्विमिश्रणम् ॥४४॥

अपने मन की मलिनता के कारण समझ में न आनेवाले दुरूह शास्त्रीय विषयों को ग्रंथों में देखकर कोई कोई वैशाखनंदन उनको ,"प्रक्षिप्त" कहने के लिए उद्यत हो जावेंगे ॥४४॥

इति क्रमान्नष्टसमस्तसत्पथे
जगत्यनिर्दिष्टपथेन केशवः ।
अनुत्तरं कालमुपेत्य शम्भले
कलेः स्वयं कल्कमपाकरिष्यति ॥ ४५ ॥

इस प्रकार समस्त व्यवहार जब कलि के प्रभाव से नष्टप्राय हो जायँगे तब ब्रह्मर्षि देशांतर्गत शंभल ग्राम में वैशाख शुक्ल द्वादशी को विष्णुयश नामक ब्राह्मण के घर में सुमति के गर्भ से भगवान् कल्कि प्रकट होकर विश्व का उद्धार करेंगे ॥४५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदाऽवतीर्णो भगवान्भुवस्तले
स कल्किरूपेण सुरद्रुहः खलान् ।
विनाशयिष्यत्यघपुञ्जभञ्जन-
स्तदा कृतं भूमिमवातरिष्यति ॥ ४६ ॥

जब भगवान् कल्किरूप में अवतीर्ण होकर गो-ब्राह्मण-द्रोही यवनों का नाश करेंगे तब भारत में कृतयुग का पदार्पण होगा ॥४६॥

स देवदत्तेन हयेन माधवः
क्रमेण सर्वान्यवनक्षितीश्वरान् ।
निहत्य खड्गेन पुनः कृतं युगं
प्रवर्धयिष्यत्यवनीतले स्वयम् ॥ ४७ ॥

देवदत्त नामक अश्व पर सवार होकर निशित निस्त्रिंश से जब भगवान् कल्कि कल्क का सर्वथा नाश करेंगे तब कृतयुग बढ़ेगा ॥४७॥

तदैव देवापिमरू महाबलौ
हरेरनुज्ञामधिगत्य भूतले ।
करिष्यतः सर्वहिताय धार्मिक-
प्रवर्तनं वैदिकमार्गरक्षकम् ॥ ४८ ॥

उसी समय देवापि और मरु यह दोनों सूर्य तथा चंद्रवंशी क्षत्रिय भूतल में विश्व की रक्षा के लिए धर्म का प्रचार करेंगे ॥४८॥

चतुर्भिरंशैरवतीर्य केशवः
कृतं व्यवस्थाप्य निहत्य बर्बरान् ।
भुवस्तले पूर्ववदत्र सर्वतः
सुखोदयं दैववशाद्विधास्यति ॥ ४९ ॥

शंभल में भगवान् कल्कि चार विभागों में अवतीर्ण होंगे वे बर्बर यवनों को नष्टकर कृतयुग का आरंभ करके सर्वत्र सुख का संचार करेंगे ॥४९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समस्तमेतत्सुमतेः सुतोदया-
वधि प्रकामं भुवने समाहितैः ।
भवद्भिरव्यग्रतया यथाक्रमं
प्रचारणीयं मम दिव्यशासनम् ॥ ५० ॥

जब तक सुमति के गर्भ से भगवान् प्रकट न हों तबतक सब मनुष्यों को उचित है कि वे धर्माज्ञा का यथावत् पालन करें ॥५०॥

यदेन्दुसूर्यौ नितरां भविष्यतो
बृहस्पतिस्तिष्ययुतश्च सङ्गतः ।
तदैकराशौ भविताऽत्र भूतले
शिवं हरेर्जन्म कृतस्य चोदयः ॥ ५१ ॥

जब एक राशि पर सूर्य चंद्रमा और बृहस्पति पुष्य नक्षत्र में एकत्र होंगे उस समय भगवान् का अवतार और कृतयुग का उदय होगा ॥५१॥

क्रमेण दिव्याब्दसहस्रमीदृशः
कलिर्व्यवस्थास्यति साम्प्रतं कलेः ।
प्रवृत्तमेकं पदमेव यद्दशा
भवत्समक्षेऽद्य मया निवेदिता ॥ ५२ ॥

यह कलियुग दिव्य एक सहस्र वर्ष तक रहेगा। इसकी पूर्णायु चार लाख बत्तीस हज़ार [४३२०००] वर्ष है। इस समय कलि के प्रथम चरण में पाँच सहस्र अट्ठाईस [५०२८] वर्ष भुक्त हुए हैं। बाकी ४२६९७२ वर्ष भोगने के लिए बाकी हैं। भुक्त वर्षों की जो दशा थी वह हमने कही है ॥५२॥

पुरञ्जयस्यात्र भुवस्तले गतं
परीक्षितानन्तरमुग्रशासनम् ।
यदष्टत्रिंशन्मितवत्सरोत्तरं
शतं समानां समभूदनारतम् ॥ ५३ ॥

इस कलियुग में परीक्षित राजा के अनंतर पुरंजय तथा उसके चार
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri
उत्तराधिकारियों का एक सौ अड़तीस वर्ष [१३८] शासन रहा ॥५३॥

दशापरेऽतःपरमत्र भूतले
महीभुजः शास्तुमिमामुपागताः ।
महीं यदष्टोत्तरमुन्नतात्मना-
मभूत्समानां त्रिशतं यथोत्तरम् ॥ ५४ ॥

उनके अनंतर दस राजाओं का इस भारत में तीन सौ आठ वर्ष [३०८] यथाक्रम बड़ा उग्रशासन काल बीत गया ॥५४॥

शतं समानामगमत्तदुत्तरं
प्रशासने नन्दमहीभुजः क्षितौ ।
बभूव यः शूद्रकुलोनयोषितः
समागमेनात्र निरस्तबाहुजः ॥ ५५ ॥

उनके अनंतर सौ वर्ष [१००] तक नंदभूप का शासन रहा । यह राजा नंद शूद्र स्त्री में उत्पन्न होने के कारण शूद्र माने जाते थे ॥५५॥

ततःपरं मौर्यनृपानुशासने
मही स्थितेयं ऋषि-वह्नि-नेत्रजैः ।
मिता समाभिः समुपेत्य मन्त्रिणं
सुखेन चाणक्यमतर्क्यधीबलम् ॥ ५६ ॥

उसके अनंतर मौर्य वंश के दश राजाओं का भारत में एक सौ सैंतीस [१३७] वर्ष राज्य रहा । इनके महामंत्री प्रसिद्ध नीतिकार ब्राह्मण कुलभूषण स्वनामधन्य चाणक्य थे ॥५६॥

शतं पुनर्द्वादशवत्सरैर्मितं
दशैव भूपाः स्वबलेन तत्परम् ।
महीं क्रमादद्भुतभोगभूमयः
प्रमादतस्ते बिभराम्बभूविरे ॥ ५७ ॥

मौर्य राज्य के अनंतर एक सौ बारह [११२] वर्ष तक अन्य दस राजाओं का भारत में शासन रहा । ये राजा बहुत गर्ववाले थे ॥५७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततःपरं कण्वकुलोद्भवा नृपाः
शराब्धिवह्निप्रमितानि सङ्ख्यया ।
सुखेन वर्षाणि धरातले क्रमा-
द्सङ्ख्यभोगैरनयन्नुपागतैः ॥ ५८ ॥

इनके अनंतर कण्ववंश के चार राजाओं का भारत में तीन सौ पैंतालीस [३४५] वर्ष राज्य रहा । इन राजाओं ने बहुत आनंद उठाया ॥५८॥

तदुत्तरं त्रिंशदहो ! महीभुजः
क्षितावभूवन्बहुशासने रताः ।
चतुःशती यत्समयस्य बोधिका
षडुत्तरा पञ्चकमध्यवर्तिनी ॥ ५९ ॥

इनके अनंतर तीस राजाओं ने इस पृथिवी पर चार सौ छप्पन [४५६] वर्ष तक निष्कंटक राज्य का उपभोग किया ॥५९॥

सहस्रमेकं नवतिर्नवाधिका
तदुत्तराणां यवनादिभूभुजाम् ।
गताऽस्ति यस्मिन्यवनानुशासिता
चकास्ति गौराङ्गमहाप्रभोः कृपा ॥ ६० ॥

इनके अनंतर इस पृथिवी पर आठ यवन, चोदह तुर्क, दश गौरांग, ग्यारह मौन, बाईस आभीर इन सब का शासनकाल जो कि एक सहस्र निन्यानवे वर्ष [१०९९] तक रहेगा, उपस्थित हुआ है । इसमें यवनों तक का शासनकाल बीत गया । आजकल विश्वविजयी गौरांगों का शासन हो रहा है ॥६०॥

दश प्रशास्यन्ति भुवं बलादिमां
सुखेन गौराङ्गमहीभुजः क्रमात् ।
पराशरस्यात्मज एवमादरा-
दुवाच योगेक्षितराजशासनः ॥६१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भारतवर्ष में गौरांगों का राज्य दश पीढ़ी तक चलेगा यह बात महर्षि वेदव्यासजी ने श्रीमद्भागवत में कही है। इनकी अभी तक तीन अथवा चार पीढ़ियाँ बीत गई हैं ॥६१॥

न तद्वचः किञ्चदपीह भूतले
भवत्यतथ्यं गतभूपशासनम् ।
निदर्शनं प्रस्तुतमत्र दृश्यता-
मतीततत्त्वेक्षणादत्तमानसैः ॥६२॥

महर्षि वेदव्यासजी त्रिकालदर्शी थे। उनका कोई भी कथन झूठ नहीं होता है। इसका प्रत्यक्ष उदाहरण बीता हुआ काल है ॥६२॥

समस्तमेतद् गतमागतं तथा
भविष्यमप्यक्षरशो यथोत्तरम् ।
निबोधितं प्रश्नपरम्परावशा-
द्भवादृशां भारतवासिनां पुरः ॥६३॥

सज्जनो! आपके प्रश्नों का उत्तर देते हुए हमने भूत और भविष्य दोनों स्वरूपों में जो कुछ सत्य सत्य वृत्तांत था कह दिया। जो बीत गया वह आपने देख लिया। जो भविष्य है उस पर भूतानुसंधान से आप विश्वास करें ॥६३॥

भवद्भिरेतद्धृदये यथोचितं
विचार्य सर्वं निजधर्मरक्षणम् ।
विधीयतां यद्वदलं कृषीवलः
स्वबीजरक्षां विदधाति यत्नतः ॥६४॥

आप सब लोक इन सब बातों का विचार करके जहां तक बने वहां तक प्राणपण से अपने अपने धर्म की रक्षा करें जिससे धर्म का बीज बना रहे। कृषीवल की तरह वर्णव्यवस्था के अनुकूल आप अपने वीर्य की रक्षा करें। स्ववीर्य में किसी प्रकार की वर्णसंकरता न होने पावे ॥६४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्वधि भुवनेऽस्मिन्कल्कहर्ता स कल्किः
कलिमिममकलङ्कः कालयोगादुपेतम् ।
शमयति न तदन्तं सावधानाः समन्ता-
द्भवत भरतभूमौ भारतीया मनुष्याः ॥६५॥

जब तक इस भारतभूमि में पाप के नाश करनेवाले भगवान् कल्कि प्रकट होकर उस कलियुग का समूल दर्पदलन न करें तब तक हे भारत के मनुष्यो ! अपने कर्म धर्म में सावधान बने रहो ! एक कदम भी इधर उधर मत हटो ॥ ६५ ॥

एवं वदत्युपनतेषु महोदयेषु
धर्माभिधे नरपतौ जनतासमुत्थः ।
हर्षध्वनिः समभवत्सह तेन भव्यः
सर्गोऽप्ययं क्रमवशादवसानमापत् ॥ ६६ ॥

इस प्रकार धर्मपरिषद् में धर्मदेव का धर्मोपदेश समाप्त होने पर सभ्यों ने हर्षध्वनि प्रकट की और उसके साथ ही साथ यह सर्ग भी अवसान पर पहुँच गया ॥ ६६ ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये,
भविष्यकथनन्नाम द्वाविंशः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## त्रयोविंशः सर्गः

व्यवस्थिते धर्मराज्ये जाते धर्मोपदेशने ।
सभास्थापनमेवासीत्कर्तव्यं धर्मवादिनाम् ॥१॥
नगरेषु विशालेषु ग्रामेषूपवनेष्वपि ।
धर्मसाम्राज्यमेवासीद्भारते प्रधनात्परम् ॥२॥
न तादृशं किमप्यासीत्पत्तनं भारते नवम् ।
न यत्र धर्मचर्चाऽभूद्धर्मरक्षैकहेतवे ॥३॥
द्विजातयो धर्मपराः शूद्राः सद्धर्मसेवकाः ।
पुरे पुरे धर्मसभामलञ्चक्रुः समुन्नताम् ॥४॥
दुर्गसम्पादनं यद्वद्राज्यरक्षाकरं मतम् ।
सभासम्पादनं तद्वद्धर्मरक्षापरं मतम् ॥५॥

भारत में धर्मदेव का राज्य स्थापित होने पर सभाओं का स्थापन करना ही धार्मिक जनों का एकमात्र कर्तव्य रह गया ॥ १ ॥ कलि से युद्ध करने पर प्रत्येक नगर, ग्राम, वन और उपवनों में धर्मदेव का ही एकमात्र शासन होने लगा ॥ २ ॥ भारत में ऐसा एक भी नगर नहीं था जिसमें धर्म की रक्षा के लिए धर्मचर्चा न हो ॥ ३ ॥ द्विजगण धर्मपरायण और शूद्र भी द्विजसेवापरायण सर्वत्र धर्मसभाओं का स्थापन करने लगे ॥ ४ ॥ राज्य को दृढ़ रखने के लिए जिस प्रकार दुर्गों की आवश्यकता होती है उसी प्रकार धर्म को दृढ़ बनाने के लिए धर्मसभाओं की आवश्यकता होती है ॥ ५ ॥

मनस्येतदवस्थाप्य भारतीयैर्महोदयैः ।
सनातनस्य धर्मस्य रक्षायै विहिताः सभाः ॥६॥
देवमन्दिररम्याणि भवनानि पुरे पुरे ।
सपताकानि नव्यानि रेजुर्धर्मस्य भूभृतः ॥७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथावकाशमेतेषु भवनेषु सभासदः ।
धर्मप्रचारकर्तव्यं चक्रुरत्यन्तहर्षिताः ॥८॥
धर्मरक्षणमेवासीत्सर्वभावेन सर्वदा ।
सभागतानां सभ्यानामुद्देश्यमतिविस्तृतम् ॥९॥
प्रधानता ब्राह्मणानां भूभुजामपि मन्त्रिता ।
वणिजां कोषपालत्वं सर्वासु परिषत्स्वभूत् ॥१०॥

इस बात को हृदय में रखकर भारतीयों ने सनातन धर्म की रक्षा के लिए सर्वत्र सभायें स्थापित कीं ॥६॥ प्रत्येक नगर में पताकाओं से अलंकृत धर्मदेव के मन्दिर चमकने लगे ॥ ७ ॥ यथावकाश इन मन्दिरों में सभासद एकत्र हो कर धर्म का प्रचार करने लगे ॥ ८ ॥ सभा में आये हुए सभ्यों का धर्मरक्षा के अन्यत्र और कोई उद्देश्य नहीं था ॥ ९ ॥ प्रत्येक सभाओं में ब्राह्मण प्रधान, क्षत्रिय मंत्री, वैश्य कोषाध्यक्ष तथा शूद्र मंदिर-परिष्कारक हुए ॥ १० ॥

उत्तरोत्तरभूयिष्ठैः सदस्यानां महोद्यमैः ।
समस्ते धर्मसाम्राज्ये बभूवुर्वार्षिकोत्सवाः ॥११॥
एतस्मिन्नेव समये परीक्षार्थमतिप्रभः ।
आविरासीदतिबलः स्वयं धर्मः सनातनः ॥१२॥
सर्वमायोजनं वीक्ष्य विश्वमात्रे यथोत्तरम् ।
स तानुवाच सदयं भारतीयमहोदयान् ॥१३॥
कर्तव्यपथमाश्रित्य भवद्भिर्यदिदं कृतम् ।
मदर्थे तेन सर्वत्र मत्प्रचारो व्यवर्धत ॥१४॥
इदानीं मत्प्रचाराय भारतीयैः पदे पदे ।
मन्निदेशाद्विधातव्यं देववाणीप्रवर्तनम् ॥१५॥

उत्तरोत्तर सदस्यों के उद्योग से धर्म के समस्त राज्य में वार्षिकोत्सव होने लगे ॥११॥ इस प्रकार का आयोजन करते करते सभा में धर्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देव उपस्थित हुए ॥ १२ ॥ धर्मदेव ने समस्त भारत में इस प्रकार का आयोजन देखकर कहा ॥१३॥ आप लोगों ने अपना कर्तव्य समझ कर मेरे लिए जो कुछ किया उससे मेरी वृद्धि हुई ॥ १४ ॥ इस समय मेरे कथन से आप लोग सर्वत्र संस्कृत का प्रचार करें ॥ १५ ॥

देववाणीप्रचाराय गङ्गायमुनयोस्तटे ।
विद्यालयाः प्रकल्प्यन्तां सदाचारप्रवर्तकाः ॥१६॥

दिशां मुखेषु सर्वेषु तिलकीकृतकीर्तयः ।
ब्रह्मचर्याश्रमाः पुण्याः स्थाप्यन्तां बहुभिर्जनैः ॥१७॥

यथा यथाऽत्र भूलोके देववाणी समुन्नता ।
भविष्यति तथैवेदं भारतं भा-रतान्वितम् ॥१८॥

अद्यत्वे यदिदं लोके दृश्यते परिवर्तनम् ।
अभावतः सुरगिरां तदिदं पुरतः स्थितम् ॥१९॥

राजभक्तिप्रचाराय सुरवाणीसमर्चनम् ।
सदैव मनुजैः कार्यं विशेषेण महीतले ॥२०॥

देववाणी के प्रचार के लिए गंगा और यमुना के तट पर विद्यालयों का स्थापन करें ॥१६॥ प्रत्येक नगर में ब्रह्मचर्याश्रम खोलकर इस कार्य में सब सज्जन भाग लें ॥१७॥ जैसे जैसे इस भारत में देववाणी का प्रसार होगा वैसे वैसे यह भारत आनंदित होगा ॥ १८ ॥ आजकल जो व्यवहार में परिवर्तन दीख रहा है यह सब देववाणी के अभाव से है ॥ १९ ॥ राजभक्ति को दृढ़ रखने के लिए देववाणी के प्रचार से अन्य कोई अच्छा उपाय नहीं है ॥ २० ॥

अभ्यसन्ति प्रकर्षेण ये जनाः सुरभारतीम् ।
राजभक्ताः सदा लोके ते भवन्ति सुबुद्धयः ॥२१॥

भारतीयैः प्रतिपुरं गोवंशपरिरक्षणे ।
सदा समाहितैर्भाव्यं भारतोदयहेतवे ॥२२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोपाल इव गोपालो भारतीयो जनव्रजः ।
न भविष्यति भूलोके यावत्तावत्कुतः सुखम् ॥२३॥
समस्तः पृथिवीभारो गवां श्रृङ्गमधिश्रितः ।
पुराणवेदकथितः प्रत्यक्षमुपलभ्यते ॥ २४ ॥
यज्ञार्थमत्र भूलोके यासां सम्भवनं मतम् ।
ता लोकमातरः पुण्या धेनवः कामधेनवः ॥२५॥

जो मनुष्य देववाणी का अभ्यास करते हैं वे राजद्रोही कदापि नहीं होते हैं ॥२१॥ भारत के उदय के लिए गोरक्षा की ओर भी भारतीयों को ध्यान देना चाहिए ॥२२॥ भारत के मनुष्य जब तक गोपाल के समान गोपालन नहीं करेंगे तब तक उनको सुख प्राप्त न होगा ॥२३॥ पृथिवी का समस्त भार गौ के शृंग पर है, यह बात पुराण वेद में लिखी है ॥२४॥ यज्ञ के लिए जिनका भारत में अस्तित्व है उन गौओं का दर्शन अत्यंत पुण्यजनक है ॥२५॥

यज्ञशाला अपि शिवा देशकल्याणहेतवे ।
ममैवादेशतः कार्या भारतीयैः पुरे पुरे ॥२६॥
यज्ञधूमसमुद्भूता जलदाः पृथिवीमिमाम् ।
प्लावयन्ति यदा लोकस्तदा भवति शर्मभाक् ॥२७॥
अपास्तं मत्कृते लोके यैरशेषविधं सुखम् ।
धर्मोपदेशकास्तेऽत्र माननीयाः पदे पदे ॥२८॥
मदुद्धारपरं येषां हृदयं भुवि निर्मलम् ।
त एव भूतले सत्यं प्राप्तजीवनसत्फलाः ॥२९॥
धर्मोपदेशकैरेव जगदेतच्चराचरम् ।
निवेश्यते धर्ममार्गे पूर्वापरविवेचकैः ॥३०॥

देश के कल्याण के लिए भारत में सर्वत्र यज्ञशाला बनानी चाहिए ॥ २६ ॥ यज्ञ के धूम से पैदा हुए मेघ जब बरसते हैं तब संसार में आनन्द

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

होता है ॥२७॥ केवल मेरे उद्धार के लिए जिन्होंने समस्त सुख छोड़ा है ऐसे उपदेशकों का मान करना चाहिए ॥२८॥ मेरे उद्धार के लिए जिनका हृदय खुला हुआ है उनका ही संसार में जीवन सफल है ॥२६॥ धर्मोपदेशक ही संसार में मनुष्यों को धर्ममार्ग पर चलाते रहते हैं ॥३०॥

वेदव्याख्याननिपुणाः पुराणकृतसच्छ्रमाः ।
ब्राह्मणा एव भूलोके मता धर्मोपदेशकाः ॥३१॥
धर्मशिक्षाविभागोऽयं जगदीशेन पूर्वतः ।
निवेशितो गुणाढ्येषु भूसुरेष्वेव सर्वथा ॥३२॥
वेदोपदेशनकृते ब्रह्मणा ब्राह्मणाः कृताः ।
ये मुखादुद्गतास्तस्य भुवनेऽस्मिन्सहोदराः ॥३३॥
न वेतनमुपादाय धर्ममार्गोपदेशनम् ।
ब्राह्मणैर्भुवि कर्तव्यं वेतनं शूद्रजीवनम् ॥३४॥
सम्पादनं पुस्तकानां मम वृद्धिकरं परम् ।
मदुद्देश्येन रचना यदि तेषां कृता भवेत् ॥३५॥

वेदादि सत्यशास्त्रों में प्रवीण पुराण वेदज्ञ ब्राह्मण ही उपदेशक होते है ॥३१॥ ईश्वर ने पहले ही से धर्मशिक्षा का विभाग ब्राह्मणों को सौंपा हुआ है ।३२॥ संसार में वेदों के उपदेश देने के लिए ब्रह्मा ने ब्राह्मण ही नियत किए हैं ॥३३॥ ब्राह्मणों को वेतन लेकर धर्म का प्रचार कभी नहीं करना चाहिए ॥३४॥ मेरे प्रचार के उद्देश्य से पुस्तकों का संपादन करना ही मुझे जीवित रखना है ॥ ३५ ॥

देवमन्दिरनिर्माणं देवमन्दिरदर्शनम् ।
देवमन्दिरसम्पत्तिः सर्वं धर्मस्य भूतये ॥३६॥
नामग्रहणमात्रेण यस्य मुक्तिः प्रजायते ।
तन्मन्दिरसमारम्भः कस्य न स्याद्विवृद्धये ॥३७॥
जीर्णमन्दिरसम्पत्तेरुद्धारः पृथ्वीतले ।
नवमन्दिरनिर्माणादुत्कृष्टफलदायकः ॥३८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिखासूत्रवतामेषा मन्दिरादिव्यवस्थितिः ।
धर्मप्रवर्द्धिनी लोके सम्पत्तिरतिनिश्चला ॥३९॥
लोकोपकारमनसा धर्मशालादिनिर्मितिः ।
सुप्रबन्धा यदि भवेत्सत्यं धर्माभिवृद्धये ॥४०॥

देवमंदिरों का बनाना, देवदर्शन करना, ये सब मेरे बढ़ाने के कार्य हैं ॥३६॥ जिनके नाम लेने मात्र से मुक्ति प्राप्त होती है उन देवगणों का मंदिर बनवाना सब से अधिक पुण्यप्रद है ॥३७॥ पुराने मन्दिरों का जीर्णोद्धार नवीन मन्दिर के बनवाने से भी अधिक फलदायक है ॥३८॥ शिखासूत्रधारियों के लिए मन्दिर से बढ़कर अन्य कोई स्थिर संपत्ति नहीं है ॥ ३९ ॥ संसार के उपकार के लिए धर्मशाला का बनवाना भी बड़ा पुण्य है ॥ ४० ॥

धर्मशालादिरूपेण यानि कान्यपि भूतले ।
लभ्यन्ते तानि सर्वाणि मम रूपाणि वस्तुतः ॥४१॥
वापीकूपतडागादिनिर्माणमपि भारते ।
धर्मोद्धाराय सततं कल्पते समयोचितम् ॥४२॥
चतुष्पथेषु घोरेषु विपिनेषु पदे पदे ।
प्रपासम्पादनं भूयः सर्वदा धर्मवर्द्धनम् ॥४३॥
नवीनाऽऽरामनिर्माणं फलवद्वृक्षयोजनम् ।
कुञ्जराशनसंसेकः सर्वदा धर्मवर्धनः ॥४४॥
बकुलाशोकमन्दारपारिजाताम्रसेचनम् ।
धर्ममार्गवतां लोके विशेषेण सुखावहम् ॥४५॥

धर्मशाला के नाम से जो कुछ आजकल संपत्ति दीख रही है वह सब मेरी ही विभूति है ॥४१॥ बवड़ी-कुआ-तालाब आदि का बनवाना भी मेरी वृद्धि का कारण है ॥४२॥ चौराहों पर, बड़े बड़े वनों में, प्रपा का लगाना सब से बढ़कर धर्म है ॥४३॥ नवीन बाग का लगाना, फलदार वृक्षों का रोपना, पीपल पर जल चढ़ाना, बड़े धर्मकार्य हैं ॥४४॥ बकुल, अशोक, मंदार, पारिजात, आम्र, इनका सेवन करना बड़ा पुण्य है ॥४५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तुलसीनववृक्षाणां यत्र तत्र निवेशनम् ।
न केवलं धर्मवृद्ध्यै परत्रेह च शर्मणे ॥४६॥
उपवासा मनुप्रोक्ताः सर्वेऽपि विधिभेदतः ।
विनिर्दिशन्ति सततं धर्ममेव सनातनम् ॥४७॥
मलं यथा धातुगतं वह्निदाहात्पलायते ।
शरीरसङ्गतं तद्वन्मलं व्रतनिषेवणैः ॥४८॥
अज्ञानाद्यानि पापानि सम्भवन्ति दिने दिने ।
उपवासेन विलयं यान्ति तानि निसर्गतः ॥४९॥
नारायणेति कथनं नारायणसमर्चनम् ।
नारायणकथारम्भः कस्य नैव विभूतये ॥५०॥

तुलसी का स्थल स्थल पर लगाना, इह लोक और परलोक दोनों में फलदायक है ॥४६॥ धर्मशास्त्र-प्रतिपादित व्रत और उपवास धर्म के प्रायः बढ़ानेवाले होते हैं ॥ ४७ ॥ अग्नि के योग से जिस प्रकार धातुओं का मल नष्ट होता है उसी प्रकार उपवास करने से शरीर का मल नष्ट होता है ॥४८॥ अज्ञानजन्य जो पाप मनुष्य से हो जाते हैं वे उपवास से नष्ट हो जाते हैं ॥४९॥ नारायण का नाम स्मरण, पूजन, गुण कीर्तन, सबके लिए कल्याणकारक है ॥५०॥

श्रीमद्भागवतादीनां श्रवणं हरिकीर्तनम् ।
अनेकविधकष्टानां प्रतीकाराय कल्पते ॥५१॥
रामायणी येन कथा न श्रुता धरणीतले ।
विफलं मानवं जन्म तस्य मन्ये दुरात्मनः ॥५२॥
वेदादप्यधिकं यस्या महत्त्वं भुवि विद्यते ।
सा येन भगवद्गीता न श्रुता तेन किं कृतम् ॥५३॥
तपोविद्याविशिष्टानां ब्राह्मणानां पदे पदे ।
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri
पूजनं विधिवल्लोके सर्वपापप्रणाशनम् ॥५४॥

स्वभावतो यथा लोके मेध्य एव धनञ्जयः।
तथैव जन्मना विप्रः समानोद्भवदर्शनात् ॥५५॥

श्रीमद्भागवत का श्रवण तथा हरिकीर्तन अनेक प्रकार के कष्टों को दूर करता है ॥ ५१ ॥ जिस मनुष्य ने रामायण की कथा नहीं सुनी उस का भारत में जन्म होना न होना बराबर है ॥५२॥ वेदों से भी अधिक जिसका महत्त्व मुनिजन गाते हैं उस गीता का श्रवण सर्वोत्तम कर्म है ॥५३॥ तपोविद्याविशिष्ट ब्राह्मणों का पूजन करना समस्त पापों को नष्ट करता है ॥५४॥ संसार में जिस प्रकार अग्नि स्वभाव से पवित्र है उसी प्रकार ब्राह्मण पवित्र हैं ॥५५॥

स्वभावतः पवित्राणि त्रीणि वस्तूनि भूतले।
ब्राह्मणोऽग्निस्तथा धेनुर्धर्मशास्त्रप्रमाणतः ॥५६॥
नास्ति चेदिह विश्वासः पूज्यत्वे भूसुरात्मनाम्।
अथर्ववेदमध्यस्थं ब्रह्मसूक्तं विलोक्यताम् ॥५७॥
एवमात्मपरित्राणपरं वदति भूपतौ।
धर्मराजे परिषदं प्राप्तवान्वरुणोऽमरः ॥५८॥
आगतं तं समालोक्य वरुणं यादसाम्पतिम्।
स्वागतोचितकर्तव्ये धर्मः स्वयमवातरत् ॥५९॥
निवृत्ते स्वागतविधौ प्रवृत्ते बहुवाचिके।
वरुणः कथयामास धर्मदेवं पुरःस्थितः ॥६०॥

ब्राह्मण, गौ, और अग्नि ये तीन संसार में स्वभाव से पवित्र माने जाते हैं ॥५६॥ ब्राह्मणों के पूज्य होने में यदि कुछ संदेह हो तो अथर्ववेद का [ ब्राह्मणसूक्त ] पढ़िए ॥५७॥ इस प्रकार धर्मदेव के कथन करते ही सभा में वरुण देव का आगमन हुआ ॥५८॥ वरुण को सभा में आया हुआ देखकर धर्मदेव ने स्वयं उनका स्वागत किया ॥५९। स्वागत के होने पर बातों के प्रसंग में वरुण ने धर्मदेव से इस प्रकार कथन किया ॥६०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवन् ! भवता ये ये निर्जिताः प्रधनोत्सवे ।
पापावताराः क्रमशस्तेभ्यो दण्डः प्रदीयताम् ॥६१॥
भवदाज्ञामनुप्राप्य मया ते पाशबन्धने ।
निबद्धाः पश्य तिष्ठन्ति पापोपहतचेतनाः ॥६२॥
दण्डधारां विधिप्रोक्तां विविच्य भवताऽधुना ।
तारतम्येन सर्वेभ्यो द्रुतं दण्डः प्रदीयताम् ॥६३॥
एवमात्मगतं भावमावेदयति निर्जरे ।
वरुणे धर्मदेवोऽपि जगाद समयोचितम् ॥६४॥
येषामेवंविधे कार्येऽधिकारोऽस्ति निसर्गतः ।
मदधीनाः प्रकुर्वन्तु ते स्वयं दण्डनिर्णयम् ॥६५॥

हे भगवन् ! आपने जिन पापावतारों को युद्ध में जीता है उनको अब दंड दीजिए ॥६१॥ आपकी आज्ञा से मैंने उनको पाश में बांधकर अब तक यंत्रणा में रक्खा है ॥६२॥ दंडधारा का तारतम्य देखकर इन सब को यथाक्रम दंड देना चाहिए ॥ ६३ ॥ इस प्रकार अपना वक्तव्य समाप्त करने पर धर्मदेव ने वरुण के प्रति कहा ॥६४॥ जिनका इस कार्य में स्वभाव-सिद्ध अधिकार है वे ही मेरी आज्ञा से इस कार्य को करेंगे ॥६५॥

धर्मशास्त्रप्रणेतारो मन्वत्रिलिखितादयः ।
द्रुतमागत्य कुर्वन्तु यथार्थं दण्डनिश्चयम् ॥६६॥
एवं न यावदुदितं धर्मदेवस्य भूपतेः ।
समागात्पूर्णतां तावदाययुस्तत्र कोविदाः ॥६७॥
श्रुतेरनुगमो येन धर्मशास्त्रे समादृतः ।
स मनुर्धर्ममर्मज्ञः सभामध्यमुपाविशत् ॥ ६८ ॥
सूर्यादधीत्य सद्विद्यां यो यजुर्वेदमस्मरत् ।
याज्ञवल्क्योऽपि स मुनिः समागाद्धर्मशासनात् ॥६९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विश्वामित्रमदध्वंसी तेजःपुञ्ज इवापरः ।
अथर्ववेदतत्त्वज्ञो वसिष्ठोऽपि सभामगात् ॥ ७० ॥

मनु, अत्रि, वशिष्ठ आदि धर्मशास्त्रों के संपादक स्वयं यहां उपस्थित होकर दंड का निर्णय करें ॥ ६६ ॥ इस प्रकार जैसे ही आपका आदेश समाप्त हुआ तैसे ही मुनिगण आकर उपस्थित हुए ॥ ६७ ॥ सब से प्रथम वेदानुकूल स्मृति के प्रवर्तक मनुजी महाराज पधारे ॥ ६८ ॥ तदनंतर सूर्य से प्राप्त-विद्य यजुर्वेद के आचार्य याज्ञवल्क्यजी पधारे ॥ ६९ ॥ तदनंतर अथर्ववेद के तत्त्वज्ञ वशिष्ठजी महाराज उपस्थित हुए ॥ ७० ॥

वेदव्याकरणज्ञाता धर्मशास्त्रप्रवर्तकः ।
कात्यायनोऽपि तत्रर्षिरासीद्धर्मसभोदरे ॥ ७१ ॥
एभ्योऽपरेऽपि ये केचिद्भारते धर्मतत्त्वगाः ।
सर्वे समागतास्तत्र दण्डनीतिमचिन्तयन् ॥ ७२ ॥
उपस्थितेषु सर्वेषु यमादिषु यथोत्तरम् ।
धर्मदेवः सभामध्ये सर्वानिदमभाषत ॥ ७३ ॥
येन येन विधेराज्ञासमुल्लङ्घनमादृतम् ।
तस्य तस्योचितं दण्डं भवन्तो दातुमर्हथ ॥ ७४ ॥
एवमाभाष्य विरते धर्मदेवे यथाक्रमम् ।
विस्पष्टं वाचयामास वरुणः कर्मपत्रिकाम् ॥ ७५ ॥

तदनंतर श्रौतसूत्र तथा कल्पसूत्र के प्रवर्तक मुनिवर कात्यायनजी पधारे ॥ ७१ ॥ इनसे जो अवशिष्ट ऋषि थे वे भी सब आकर दण्डधारा पर विचार करने लगे ॥ ७२ ॥ इन सब के एकत्र होने पर धर्मदेव ने सभा में कहा ॥ ७३ ॥ जिस जिस ने वेद की आज्ञा का उल्लंघन किया है उस उसको आप लोग उचित दंड प्रदान करें ॥ ७४ ॥ इस प्रकार आज्ञा देकर धर्मदेव के बैठने पर वरुणदेव ने कार्यारंभ किया ॥ ७५ ॥

सर्वतः प्रागयं तत्र शौद्धोदनिपुराकृतम् ।
धर्मदेवस्य पुरतो वाचयामास वाचिकम् ॥ ७६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शौद्धोदनिरयं नाम्ना राजन्यकुलसम्भवः ।
वेदान्विनिन्दयामास यज्ञमात्रप्रवर्तकान् ॥ ७७ ॥
वाजपेयादियज्ञेषु निरीक्ष्य पशुहिंसनम् ।
सदयः पशुवर्गेषु ब्राह्मणेष्वदयोऽभवत् ॥ ७८ ॥
विनिन्दनं ब्राह्मणानां तत्पत्नीनां वियोजनम् ।
शुल्कादानं भूसुरेभ्यः कृतमस्याभवत्प्रियम् ॥ ७९ ॥
वर्णानामाश्रमाणां च विनाशे कृतनिश्चयः ।
नवीनं कल्पयामास मतं बौद्धाभिधं हठात् ॥ ८० ॥

सबसे प्रथम बुद्ध को समक्ष में लाकर वरुणदेव ने इनका कर्त्तव्य उपस्थित किया जो इस प्रकार है ॥ ७६ ॥ इसने क्षत्रिय कुल में जन्म लेकर यज्ञप्रवर्तक वेदों की निन्दा की ॥ ७७ ॥ यज्ञों में पशुहिंसा देखकर पशुओं पर दया की और ब्राह्मणों पर अत्याचार किया ॥ ७८ ॥ प्रधान रूप से ब्राह्मणों की निंदा और उनकी स्त्रियों को उन से अलग कर देना इसका कार्य था ॥ ७९ ॥ इसने वर्णाश्रमों को नष्ट कर अपने नाम से बौद्ध मत का प्रचार किया ॥ ८० ॥

यज्ञकुण्डानविरतं निपात्य धरणीतले ।
श्रावकान्वर्धयामास निजसिद्धान्तबोधकान् ॥ ८१ ॥
ब्रह्मविष्णुमहेशानां मन्दिरेष्वमुना पुरा ।
निजां मूर्तिमवस्थाप्य विहितस्तदनादरः ॥ ८२ ॥
एवमादीनि कृत्यानि विनिवेद्य विमूकताम् ।
प्रयाते यादसाम्पत्यौ धर्मो भूपतिरब्रवीत् ॥ ८३ ॥
सर्वोत्तमं पितृपते ! यदस्ति तव शासने ।
भवनं तत्र सदयं नीयतामयमादरात् ॥ ८४ ॥
नाममात्रं यदकरोदयं पशुकुले दयाम् ।
अतो नामास्य भूलोके कल्पान्तमुपतिष्ठतु ॥ ८५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यज्ञकुंडों को नष्ट कर इसने बहुत से श्रावक मठों का सम्पादन कराया ॥८१॥ देवमन्दिरों से देवताओं को हटाकर उनमें अपनी प्रतिमा का स्थापन कराया ॥८२॥ इस प्रकार के अन्य भी अनेक कृत्य बनाकर बैठे हुए वरुण के प्रति धर्म ने कहा ॥८३॥ इनको सर्वोत्तम सुन्दर महल में भेजिए और वहीं आराम करने दीजिए ॥८४॥ पशुओं पर नाम मात्र दया करने के कारण भूतल में इसका नाम रहेगा ॥८५॥

निराकृत्य हरादीनामर्चनं यदयं स्वकम् ।
प्रथयामास तदयं नास्तिकत्वेन घोष्यताम् ॥८६॥
येषु लोकेषु गच्छन्ति प्रायशो यज्ञनिन्दकाः ।
तेष्वेवास्य रतिर्भूयादेतदेवास्य पूजनम् ॥८७॥
एवमाभाष्य पुरतः स्थितं बुद्धमनुद्धतम् ।
सुतरामर्पयामास श्राद्धदेवाय श्रीमते ॥८८॥
सोऽपि स्वदूतप्रमुखं दण्डपाणिमुपस्थितम् ।
अस्यातिथ्यविधानाय योजयामास सत्वरम् ॥८९॥

देवगणों को हटाकर जो उसने मंदिरों में अपना पूजन कराया इस अपराध में इसको नास्तिक कोटि में लिखिए ॥८६॥ यज्ञ विरोधी महानुभाव जिन लोकों को प्राप्त होते हैं उनमें ही आपका अनुराग बढ़े, यही आपका उचित सत्कार है ॥८७॥ धर्मदेव का इस प्रकार आदेश समाप्त होने पर वरुण ने इसको धर्मराज के सुपुर्द किया ॥८८॥ उसने भी अपने दंड-पाणि नामक सेवक को बुलाकर आपके आतिथ्य का प्रबन्ध कर दिया ॥८९॥

अतःपरं भगवतो निदेशाद्धर्मभूपतेः ।
वरुणो वाचयामास चार्वाकचरितावलिम् ॥९०॥
चार्वाक इत्यभिधया प्रथितो जगतीतले ।
अयमाविरभूल्लोके मागधेषु कदाशयः ॥९१॥
विनैव जगदीशेन जगदेतच्चराचरम् ।
भवत्यदः स्वकथनं बह्वयं पर्यबोधयत् ॥९२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदोऽप्ययं ब्राह्मणानामुदराभरणात्तमः ।
ब्राह्मणैरेव रचितो नेश्वरेणेत्यभाषत ॥९३॥

एतदेवास्य चरितं मागधस्य विशेषतः ।
निवेद्य वरुणस्तत्र मूकायितमनाटयत् ॥९४॥

इसके अनंतर धर्मदेव की आज्ञा से वरुण ने चार्वाक का कर्मपत्र पढ़ा जो इस प्रकार है ॥९०॥ यह मगध देश की मागध जाति में उत्पन्न हुआ है ॥९१॥ ईश्वर नहीं है और जगत् ईश्वर के विना ही बनता है इसका यह प्रधान सिद्धान्त था ॥९२॥ चारों वेद ब्राह्मणों ने लिखे हैं, ये ईश्वर-कृत नहीं हैं, यही इसका मंतव्य है ॥९३॥ चार्वाक का इतना कर्तव्य सुनाकर वरुण जी बैठ गए ॥९४॥

वरुणे मूकतामाप्ते मुनीनामनुमोदनात् ।
धर्मशास्त्रे निगदितं धर्मो दण्डमकल्पयत् ॥९५॥

लोकमात्रप्रणेतारं वेदमात्रप्रवर्तकम् ।
नाङ्गीकरोति यो लोके स राजद्रोहदण्डभाक् ॥९६॥

वेदेषु यन्निगदितं जगदीशेन भूतले ।
वृथैव मन्यते नूनं स तदाज्ञाविघातकः ॥९७॥

अपराधद्वयमिदं चार्वाकशिरसि स्थितम् ।
यदन्येभ्योऽपराधेभ्यो महत्तरमुपस्थितम् ॥९८॥

सत्क्रियाभिरनन्ताभिरतोऽयं परितो वृतः ।
सङ्घातनाम्नि विशदे भवने विनिवेश्यताम् ॥९९॥

उनके बैठते ही मुनियों की अनुमति से धर्मदेव ने कहा ॥९५॥ लोक तथा वेद के एकमात्र अध्यक्ष ईश्वर को न माननेवाला राजद्रोही होता है ॥९६॥ ईश्वर ने जो वेदों में कहा है उसका अपमान करनेवाला आज्ञोल्लं-घक होता है ॥९७॥ यह दोनों अपराध इसने सब अपराधों से बढ़ कर किये हैं ॥९८॥ इसलिए इसको नानाविध सत्कारों के साथ संघात नामक महल में लेजाओ ॥९९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दण्डमेवमुपादिश्य विरते धर्मभूपतौ ।
बृहस्पतेरुपकृतिं यादसाम्पतिरब्रवीत् ॥ १०० ॥
मद्रप्रदेशनिलयो बृहस्पतिरयं स्वयम् ।
धर्मान्निवारयामास मनुजानवरस्थितीन् ॥ १०१ ॥
पितर्युपरते यच्च श्रौद्धदैहिकं क्रियते कृतम् ।
तदयं नास्तिकतया दूषयामास तर्कतः ॥ १०२ ॥
यानि वैदिककर्माणि सम्भवन्ति भुवस्तले ।
तानि सर्वाण्ययं तर्कैश्च्छेदयामास दुस्तरैः ॥ १०३ ॥
कर्मपत्रमिदं तस्य समाकर्ण्य बृहस्पतेः ।
धर्मो नियोजयामास दण्डधारामुपस्थिताम् ॥१०४॥

इस प्रकार दंडाज्ञा देकर धर्मदेव के बैठने पर वरुण ने बृहस्पति का कर्मपत्र पढ़ा जो इस प्रकार है ॥१००॥ मद्रदेश का रहनेवाला यह बृहस्पति मनुष्यों को सर्वदा धर्म से हटाता रहा ॥१०१॥ पिता के मरने पर जो श्राद्ध किया जाता है उसका यह खंडन करता रहा ॥ १०२ ॥ अपने तर्कबल से इसने समस्त वैदिककर्मों का उच्छेदन किया ॥ १०३ ॥ इसको सुन कर धर्मदेव ने जो दंडधारा नियत की वह इस प्रकार है ॥ १०४ ॥

लोकान्तरमिते मर्त्ये यत्किञ्चिदुपकल्प्यते ।
तत्सर्वं वेदसम्मत्या धर्मशास्त्रानुमोदनात् ॥१०५॥
यतोऽयं पैतृकं कर्म दूषयामास सर्वतः ।
अतःस्थावरगर्तेषु दुर्भगोऽयं निवेश्यताम् ॥१०६॥

मनुष्य के मरने पर जो कुछ किया जाता है वह सब वेद और धर्मशास्त्र के आधार पर किया जाता है ॥१०५॥ इसलिए इस वेदविरोधी को स्थावरगर्तों में भेज दो ॥१०६॥

दण्डमेवमुपस्थाप्य निवृत्ते धर्मभूपतौ ।
दयानन्दचरित्राणि यादसाम्पतिरब्रवीत् ॥१०७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयं नाम्ना दयानन्दः स्वसिद्धान्तप्रवर्तकः।
वेदमार्गविघाताय सर्वानेवमभाषत ॥ १०८ ॥

इस प्रकार दंडाज्ञा देकर धर्म के बैठने पर वरुण ने दयानंद का कर्मपत्र पढ़ा जो इस प्रकार है ॥ १०७ ॥ इसका नाम दयानंद है, इसने अपने मत के प्रचार और वेदमार्ग का नाश करने के लिए सब मनुष्यों से कहा ॥ १०८ ॥

नियोगः क्रियतां मर्त्यैश्छेद्य तां जातिबन्धनम्।
गुणकर्मानुरूपेण क्रियतां वर्णकल्पनम् ॥१०९॥
विनिवर्तयितुं धर्मं मत्कृतानि जनव्रजैः।
पठ्यन्तां पुस्तकानीति सर्वत्रायमघोषयत् ॥११०॥
निन्दयामास तीर्थानि गुरुद्रोहं भुवस्तले।
प्रथयामास यत्नेन नियोगं विधवाजने ॥१११॥
सर्वत्रावस्थितं देवं निराकारकथामिषात्।
तिरयामास मनुजान्वञ्चयामास भाषणैः ॥११२॥
पुराणवेदनिन्दायां कृतयत्नः पदे पदे।
अवतारार्चनस्यापि निषेधे तत्परोऽभवत् ॥११३॥
वेदब्राह्मणयोर्मध्ये भेदमाकल्प्य हेतुभिः।
वेदभागविनाशाय परिश्रममयं व्यधात् ॥११४॥
बलादयं कृतमतिर्मन्त्रार्थानां विपर्यये।
ऋषीणां देवतानाञ्च विपर्यासमकल्पयत् ॥११५॥
प्रसङ्गतो बहिष्कृत्य लूनाङ्गान्मन्त्रसञ्चयान्।
तद्विरुद्धार्थसंसिद्ध्यै तेषामुद्धरणं व्यधात् ॥११६॥
ईदृग्विधान्यनेकानि चरितान्यस्य वादिनः।
निवेद्य परिषन्मध्ये वरुणो मूकतामगात् ॥११७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सब नियोग करो, जातिबंधन तोड़ो, गुण-कर्म स्वभाव से वर्ण मानो, इस प्रकार यह सर्वत्र कहता था ॥१०८-११०॥ इसने वृंदावन हरद्वार आदि तीर्थों का निंदा की, सब को गुरुद्रोह सिखाया, विधवाओं में नियोग का प्रचार कराया ॥१११॥ सर्वत्र विद्यमान ईश्वर को इसने निराकार कह कर उसका पूजन बंद किया ॥११२॥ इसने भागवतादि पुराणों की भरपेट निंदा की और अवतारपूजा का घोर विरोध किया ॥११३॥ वेद और ब्राह्मणों में भेद बता कर इसने ब्राह्मण भाग का वेदत्व हटाया ॥११४॥ मंत्रों के अर्थ बदल कर इसने मंत्रों के ऋषि और देवता बदल दिये ॥११५॥ प्रसंग से मंत्रों को अलग रख इसने मंत्रों को लंगड़ा बना दिया ॥ ११६ ॥ इस प्रकार के अनेक चरित्र इसके पढ़कर वरुणदेव अपने स्थल पर बैठ गए ॥११७॥

वाचंयमत्वमापन्ने वरुणे परिषत्पतिः ।
दयानन्दकृते मार्गमुवाच मनुसम्मतम् ॥११८॥
येन मार्गेण गच्छन्ति लोके पुण्यजनाः क्रमात् ।
तेनैव यात्वयं दैवादभीष्टं स्थानमद्भुतम् ॥११९॥
अवतारपरीवादादयं मुण्डी धरातले ।
अकीर्तिमेव सर्वत्र यातु मा यातु तद्यशः ॥१२०॥
दिव्यामेवंविधामाज्ञां प्रदाय परिषत्पतिः ।
दयानन्दं सभामध्ये धर्मराजाय दत्तवान् ॥१२१॥
धर्मराजोऽपि विविधानार्यानस्य परिग्रहे ।
नियोज्य गुरुपूजायाः प्रबन्धमधिकं व्यधात् ॥१२२॥

वरुणदेव के बैठने पर धर्मदेव ने दयानंद के लिये जो मार्ग बताया वह इस प्रकार है ॥११८॥ लोक में जिस मार्ग से पुण्यजन जाते हैं उसी मार्ग से इसको यहाँ से अभीष्ट स्थान पर भेजो ॥ ११९ ॥ रामकृष्णादि को ईश्वरावतार न मानने के कारण इसका अपयश हो ॥१२०॥ इस प्रकार दिव्य आज्ञा देकर धर्मदेव ने दयानंद को धर्मराज के सुपुर्द किया ॥१२१॥ धर्मराज ने भी इनको आर्यों के हवाले कर खूब गुरुपूजा का प्रबन्ध कर दिया ॥१२२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वरुणोऽथ सभामध्ये धर्मदेवमुपस्थितम् ।
अपृच्छत्पाशबद्धानां पुनर्दण्डपरम्पराम् ॥१२३॥
भगवन्नवशिष्टा ये ममपाशे नियन्त्रिताः ।
कुत्र तेषां निवसनं कश्च मार्गः समुच्यताम् ॥१२४॥
इति प्रश्नपरं वीक्ष्य वरुणं पुरतः स्थितम् ।
धर्मदेवः सभामध्ये तमाह समयोचितम् ॥१२५॥
यत्र यत्र स्थिताः सर्वे मायादेवीसुतादयः ।
संप्रेष्यन्तां तदनुगास्तत्र तत्र ममाज्ञया ॥१२६॥

इधर वरुणदेव ने अवशिष्ट जनों के लिए फिर दंड देने की प्रार्थना की ॥१२३॥ और पूछा कि इनसे जो वचे हुए हैं उनको कहाँ भेजा जावे और कौन सा मार्ग बताया जावे ॥१२४॥ वरुण के इस प्रकार पूछने पर धर्मदेव ने उत्तर दिया ॥१२५॥ जहाँ जहाँ पर इनके आचार्य भेजे गए हैं वहीं पर इनको भी भेजो ॥१२६॥

एवं यथोचितं दण्डं प्रदाय विरते शिवे ।
धर्माभिधे नरपतौ सर्वे जग्मुर्यथागतम् ॥१२७॥
यमोऽपि सर्वानादाय वरुणेन समर्पितान् ।
मतप्रवर्तकानुग्रो जगाम निजमालयम् ॥१२८॥
मध्ये समागतां प्रेतामतीत्य रुधिरोन्नताम् ।
ददृशुस्ते नभोमध्ये यमालयमुपस्थितम् ॥१२९॥

इस प्रकार सब को यथोचित दंड देकर सभाविसर्जन हुआ और सब उठे ॥१२७॥ वरुण के हाथ से इन सब को लेकर यमराज भी अपने लोक को चले ॥१२८॥ चलते चलते बीच में रुधिरपूर्ण वैतरणी को पार कर इन सबों ने यमालय का दर्शन किया ॥१२९॥

[ कलापकम् ]

क्वचिद्वसानदीरम्यं क्वचिद्रुधिरविन्दुभिः ।
क्लिन्नमेकान्तदुर्गन्धपरिव्याप्तगृहोदरम् ॥१३०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयं निष्पीड्यतां पापस्तैलयन्त्रे शिलातले ।
विदार्यतामयं वेगादयमग्नौ निवेश्यताम् ॥१३१॥
अस्य पापस्य शूलेन भेद्यतां हृदयस्थलम् ।
छेद्यतामस्य जठरं वञ्चकस्य दुरात्मनः ॥१३२॥
एवमादिभिरत्युग्रभयकम्पप्रवर्तकैः ।
महास्वनैरभिव्याप्तं विविशुस्ते यमालयम् ॥१३३॥
यमेन ते यथास्थानं निवेश्य बहु सत्कृताः ।
स्वकर्मणां फलं तत्र धर्मादेशात्प्रपेदिरे ॥१३४॥

इसके अनंतर कहीं वसा पूर्ण, कहीं रुधिर पूर्ण, कहीं दुर्गंधयुक्त, मार्ग से निचोड़ो, चीरो, जलाओ, भेदो, छेदो, इस प्रकार के भयंकर शब्दों द्वारा अभिव्याप्त यम की संयमनी पुरी में इन सबों ने प्रवेश किया ॥ १३०-१३३ ॥ यमराज ने भी संयमनी पुरी में यथोचित स्थान देकर इनको कर्मों का फल भोगने के लिए विवश किया ॥१३४।

मनुजैरिदमालोक्य धर्मराजस्य शासनम् ।
न कथञ्चिदपि त्याज्यो धर्म एषः सनातनः ॥१३५॥
न धर्मादपरं किञ्चित्त्रिषु लोकेषु विद्यते ।
भयप्रणाशनं तस्मादयमेव निषेव्यताम् ॥१३६॥
अनादिकालसंसिद्धं धर्ममेनं विहाय ये ।
मतान्यनुगमिष्यन्ति ते गमिष्यन्ति रौरवम् ॥१३७॥
आसन्नमरणे काले यमदूते पुरःस्थिते ।
न कोऽपि मनुजत्राता भूतले तमृते शिवम् ॥१३८॥

मनुष्यों को चाहिए कि इनकी दुर्दशा देखकर अपना मन धर्म से कभी न हटावें ॥ १३५ ॥ धर्म के अतिरिक्त अन्य कोई संसार में भय से बचाने वाला नहीं है ॥१३६॥ अनादि काल से प्रचलित सनातन धर्म को छोड़ कर जो मनुष्य अन्य मतानुगामी बनेंगे उनको नरक में जाना होगा ॥१३७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मरने के समय जब यमदूत सामने आकर खड़े होंगे उस समय भगवान् शंकर को छोड़कर अन्य कोई बचाने वाला न होगा ॥ १३८ ॥

यद्यस्ति मरणाद्भीतिर्यद्यस्ति नरकाद्भयम् ।
यद्यस्ति हृदयं मुक्तौ देयं तर्हि मनः शिवे ॥१३६॥

सज्जनो ! यदि आपको मृत्यु से भय है, यदि नरक से आपको डर है यदि आपको मुक्ति की इच्छा है तो अपना मन श्रीशंकर भगवान् के चरणों में लगाइए ॥ १३६ ॥

ये चन्द्रचूडचरणाम्बुरुहं स्वचित्ते
भक्त्या निवेश्य निगमोक्तपदैः स्तुवन्ति ।
ते नैव यान्ति यमराजपुरीं प्रसादा-
दीशस्य संसृतिमपास्य भजन्ति मुक्तिम् ॥१४०॥

जो मनुष्य चन्द्रचूड़ भगवान् का चरणकमल हृदय में रख कर भक्ति से उनकी स्तुति करते हैं वे उनकी कृपा से मार्कण्डेय के समान यमपुरी को न जाकर सर्वदा मुक्ति को प्राप्त होते हैं ॥१४०॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये,
दण्डप्रदानवर्णनं नाम त्रयोविंशः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# चतुर्विंशतितमः सर्गः

अथ धर्मदेवपरिषद्यवातरत्काऽपि हंसमारुह्य ।
देवी गिरामधीशा यामवलोक्यात्र विस्मिताः सर्वे ॥ १ ॥
नभसः समापतन्तीं प्रसन्नचित्तामवेक्ष्य तान्देवीम् ।
धर्मोऽर्घ्यपाद्यदीपैः समर्चयामास पादयोः प्रणमन् ॥ २ ॥

इस के अनंतर धर्मदेव की सभा में अनिर्वचनीय, सर्वमान्य हंसवाहिनी, भगवती सरस्वती जो उपस्थित हुईं जिनको देखकर सभी विस्मित हुवे ॥ १ ॥ आकाश मार्ग से अवतीर्ण हुई प्रसन्नमन सरस्वती जी को देखकर धर्मदेव ने प्रणाम करते हुए अर्घ्य पाद्य, दीप से आपका अर्चन किया ॥२॥

अनुगृह्य सर्वमेतत्प्रसन्नचित्ता पुरःस्थितं धर्मम् ।
समुवाच देवजुष्टा समयोचितमेव सर्वतः पश्यन् ॥ ३ ॥
देवात्र धर्मयुद्धे ये ये वीराः स्वधर्ममवगत्य ।
दैवाददुः शरीरं ये वा जीवन्ति भूतले शिष्टाः ॥ ४ ॥
तेषां यशोधनानां विशिष्टकीर्तिं स्वनामधन्यानाम् ।
अवगन्तुमीहते मे मनः प्रकामं भवत्प्रयासेन ॥ ५ ॥

पूजा स्वीकार करके समक्ष में उपस्थित धर्मदेव के प्रति देववंदनीय भगवती जी ने सब ओर देख कर समयोचित वक्तव्य कहा ॥ ३ ॥ हे धर्मदेव ! आपके इस धर्मयुद्ध में जो जो दानवीर, धर्मवीर, दयावीर, युद्धवीर, अपना कर्तव्य समझकर तन मन धन दे चुके अथवा इस समय देने को उद्यत हैं, उन यशोधनों की नामावली के साथ साथ विशिष्ट कीर्ति को श्रवण करने के लिए मेरी अभिलाषा है जो आपके परिश्रम से सिद्ध हो सकती है ॥ ४-५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतन्मनीषितं मे भुवि प्रयासं विनैव यः कश्चित् ।
आपूरयिष्यतीह स्थास्यति तस्यापि निश्चला कीर्तिः ॥ ६ ॥
मोदादिदं वदन्तीं गिरामधीशाममन्दभावेन ।
सभ्यो जगाद कश्चिद्धर्मादेशेन तत्पुरः प्रणमन् ॥ ७ ॥
भगवति ! गिरामधीशे ! भवत्प्रसादेन सर्वतः पूर्वम् ।
लोकान्तरङ्गतानां वदामि नामानि माननीयानाम् ॥ ८ ॥

मेरे बिना परिश्रम किये ही जो सज्जन इस मेरी अभिलाषा को पूर्ण करेगा उसका संसार में चिरकाल तक यश बना रहेगा ॥६॥ इस प्रकार आनंदपूर्वक आदेश देती हुई भारती के समक्ष धर्मदेव की सभा के एक सदस्य ने धर्म के आदेश से प्रणामपूर्वक कहा ॥ ७ ॥ हे मातः ! आपकी आज्ञा का पालन करने के लिए मैं उपस्थित हूँ, आपकी कृपा से अब मैं सब से प्रथम उन महानुभावों की नामावली उपस्थित करता हूँ जो भूतल में इस समय नहीं हैं ॥ ८ ॥

भारति ! भारतवर्षे समस्तवेदाङ्गसङ्गतिप्रवणाः ।
श्रीशिवकुमारपादाः शिवार्चनाय प्रदत्तसर्वस्वाः ॥ ९ ॥
अध्याप्य भारतीयान्द्विजानमन्दं गुरुत्वमासाद्य ।
सर्वत्र देवलोकं शिवं प्रयाताः शिवप्रसादेन ॥१०॥

वेदादि सत्यशास्त्रों के प्रधान आचार्य, शिवार्चन में दत्तसर्वस्व, स्वनाम-धन्य श्री पण्डित शिवकुमारजी शास्त्री भारतीयों को अनवरत विद्या-दान देकर भगवान् के आदेश से भगवत्सायुज्य को प्राप्त हो गए ॥ ९-१० ॥

मातस्तवावातारा: समस्तसाहित्यसिन्धुधृतसाराः ।
श्रीगङ्गाधरपादाः पुरा बभूवुः प्रसिद्धबहुयशसः ॥११॥
तेऽप्यध्याप्य यथावत्समस्तशास्त्राणि भिन्नवादानि ।
गङ्गाधरत्वमापन्नुपेत्य सायुज्यमागमप्रथितम् ॥१२॥

हे मातः ! आपके दूसरे अवतार, समस्त शास्त्रों के अद्वितीय वेत्ता, प्रातः स्मरणीय श्री पण्डित गंगाधर शास्त्री जी संसार में संस्कृत विद्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

को अनवरत प्रवाह बहाते हुए समस्त भारतीयों को विद्यादान देकर अंत में भगवान् गंगाधर शंकर के स्वरूप में समासीन हुए ॥ ११-१२॥

दामोदर इव भुवने वेदं विस्तार्य विद्वदनुगम्यः ।
श्रीदामोदरशास्त्री दिवं प्रयातः समाप्य निजकृत्यम् ॥१३॥
वैय्याकरणमृगेन्द्रः पातञ्जलभाष्यनिभृतसर्वस्वः ।
शास्त्री राजारामः स्वर्यातः कस्य मानसं नागात् ॥१४॥

दामोदर भगवान् के सदृशही, भारत में वेदों का विस्तार करके विद्वदनुगम्य श्री० दामोदर शास्त्री जी अपनी मानवलीला का संवरण कर चुके ॥१३॥ व्याकरण महाभाष्य ही जिनका गुप्त सर्वस्व था, वे वैय्याकरण-केसरी श्री राजाराम शास्त्री, भारत से स्वर्ग को सिधारे ॥१४॥

आगमनिगमविचारणसञ्चारप्रत्तजीवनप्राणः ।
श्रीराममिश्रशास्त्री वैष्णवलोकञ्जगाम बुधवन्द्यः ॥१५॥
ज्योतिर्विदां वरिष्ठः समस्तगणितप्रपञ्चपञ्चास्यः ।
विस्तार्य दिव्यकीर्तिं सुधाकरोऽपि स्वलोकमाश्वगमत् ॥१६॥

वेद के और शास्त्रों के विचार एवं प्रचार में दिया है अपना समस्त जीवन तथा प्राण जिन्होंने वे बुधवन्द्य श्री० रामिश्र शास्त्री अपना कर्तव्य समाप्त कर विष्णु लोक को सिधारे ॥१३॥ ज्योतिर्विदों में प्रधान गणितज्ञ केसरी श्री० पंडित सुधाकर द्विवेदी असमय में भारत को छोड़कर अपने चंद्रलोक को सिधारे ॥ १६ ॥

म-य-र-स-त-ज-भ-न गत्या यावद् व्याप्तं समस्तमपि तावत् ।
श्रीदुःखभञ्जनकविर्व्याप्य समासेन दिव्यलोकमगात् ॥१७॥
वेदान्तवेद्यमेकं ब्रह्माद्वैतं विविच्य विबुधेषु ।
श्रीविश्वरूपपादा मद्गुरुगुरवः समागमन्मोक्षम् ॥१८॥

म, य, र, स, त, ज, भ, न, इन आठ गणों में जितना वाङ्मय व्याप्त है उस समस्त वाङ्मय पर अपना पूर्णाधिकार जमा कर श्री० कविवर दुःखभंजन जी दिव्य लोक को प्राप्त हुए ॥ १७ ॥ वेदान्तवेद्य, प्रधान, अद्वैत ब्रह्म का विद्वानों को उपदेश देकर हमारे पितृचरणों के गुरुवर श्री० विश्वरूप जी महाराज मोक्ष को प्राप्त हुए ॥ १८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्यापि यन्महत्त्वं वाराणस्यां विलोक्यते विविधम् ।
ते विश्वमात्रगुरवो दिवं प्रयाता जवादुमापतयः ॥१९॥
कलिकातानगरीगतविद्यालय एव यद्गुणग्रामम् ।
प्रथयति भारतवर्षे यतिवर्यः सोऽपि मुक्तिमार्गमगात् ॥२०॥

बनारस की गली गली में जिनका महत्त्व आज भी विद्वान् गा रहे हैं वे श्री० उमापति त्रिपाठी आज भारत में नहीं हैं। आपका "सनातनधर्मोद्धार" नामक संस्कृत निबंध बड़ा ही सुन्दर है ॥१९॥ कलकत्ते में जिनके नाम पर बड़ा भारी विद्यालय बना हुआ है वे श्री० विशुद्धानन्द जी महाराज आज इस भारत में नहीं हैं ॥२०॥

वाचस्पत्याभिधमिह बृहदभिधानं निजप्रयासेन ।
सम्पाद्य लब्धकीर्तिस्तारानाथोऽपि गामिमामजहात् ॥२१॥
काणादं मतमखिलं गोतमसूत्रोपयुक्तमन्यदपि ।
योऽध्यापयत्प्रसादात्सीतारामः स मोक्षमुपयातः ॥२२॥

संस्कृत में "वाचस्पत्य बृहदभिधान" जिन्होंने लिखा वे श्री० तारानाथ तर्कवाचस्पति भट्टाचार्य दिव्यलोक को प्राप्त हुवे ॥२१॥ काणाद और गौतम इन दोनों मतों को नव्य तथा प्राचीन रूप से जिन्होंने भारत में व्याप्त किया वे नैय्यायिक श्री० सीताराम शास्त्री स्वर्ग को पधारे ॥२२॥

यद्भारती समस्ते भारतवर्षे प्रसिद्धिमुपयाता ।
कविवरगट्टूलालः स भारतीशो यशोऽवशिष्टोऽभूत् ॥२३॥
यः काव्यकल्पनायामनन्यलभ्यं जवादनौपम्यम् ।
दैवादवाप लोके दिवं जगामात्र सोऽम्बिकादत्तः ॥२४॥

जिनका काव्य भारतवर्ष में प्रसिद्ध है वे भारतमार्तण्ड श्री० पंडित गट्टूलाल जी महाराज यशोवशिष्ट हुए ॥२३॥ काव्य कल्पना में असाधारण जिनकी प्रतिभा भारतवर्ष में प्रसिद्ध है वे श्री० पंडित अंबिकादत्त जी व्यास आज इस भारत में नहीं हैं ॥ २४ ॥

Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योवाल्लभं जगत्यां प्रदर्शयामास भक्तिरससिन्धुम् ।
कामेन कामवनगः स देवकीनन्दनाचार्यः ॥२५॥
वेदान्तमद्वितीयं मतं व्यवस्थाप्य भारतीयेषु ।
रघुवरदयालुशर्मा दिवं प्रयातो विहाय निजकीर्तिम् ॥२६॥

श्रीवल्लभाचार्य जी महाराज के द्वारा संसार में प्रवृद्ध हुए भक्ति रस को जिन्होंने बताकर मनुष्यों का कल्याण किया वे श्री० देवकीनन्दनजी महाराज इस असार संसार से गोलोक को सिधारे ॥२५॥ भारतीय मनुष्यों में वेदान्त-प्रतिपाद्य अद्वैतसिद्धांत को व्यवस्थापित करके श्री० पं० रघुवर दयालु शर्मा भी अपनी कीर्ति को छोड़कर चल बसे ॥ २६ ॥

वेगादनार्यमार्गं व्युदस्य वेदप्रतिष्ठितन्धर्मम् ।
योऽदीधरज्जगत्यां स भीमसेनोऽपि देवलोकमगात् ॥२७॥
अनुवादितसद्ग्रन्थः समस्तनव्यप्रवृत्तमतमन्थः ।
ज्वालाप्रसादशर्मा विहाय भूमिं जवादगात्स्वर्गम् ॥२८॥

दयानन्द प्रतिपादित अनार्य सिद्धांतों को छोड़कर सनातन धर्म की सेवा करनेवाले स्वनामधन्य श्री० पं० भीमसेन जी वेदाचार्य आज भारत में नहीं हैं। आप कलकत्ता यूनीवर्सिटी में बहुत काल तक वेदाध्यापक रहे हैं। भूत दयानन्द ने आप से बहुत ज्ञान प्राप्त किया था ॥ २७ । अनेक संस्कृत ग्रंथों के अनुवादक, तथा आर्यसमाज के धूमकेतु, सनातनधर्म के प्रचारक श्री पं० ज्वाला प्रसाद जी मिश्र आज इस धरातल पर नहीं हैं ॥ २८ ॥

वैष्णवमतप्रवर्तकसद्ग्रन्थानामनारतं वक्ता ।
गोविन्दरामशास्त्री ममावलोके रसादगान्नाकम् ॥२९॥
अनिवार्यतर्कवादः प्रमाणभूयिष्ठशास्त्रकृतवादः ।
श्रीकृष्णदिव्यनामा न वर्ततेऽस्मिन्विशालभूभागे ॥३०॥

वैष्णव धर्म में अनन्य श्रद्धा रखनेवाले, पुराणवेद के रहस्य वेत्ता, भगवद्धर्मप्रतिपादक श्री पं० गोविन्दराम शास्त्री आज नहीं है ॥२९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपने तर्कबल से विपक्षियों का मुख मोड़ने वाले, प्रमाणवाद में पंडित श्रीकृष्ण शास्त्री भी आज भूतल पर नहीं हैं ॥३०॥

गीतारहस्यनामा नवो निबन्धोऽन्वबन्धि यैर्बद्धैः ।
तिलकोपनामधेया दिवङ्गतास्ते महोदया भव्याः ॥३१॥
धर्मानुकूलकार्ये निजोपदेशैर्नियोजयन्मनुजान् ।
श्रीमाधवप्रसादः पुरं महेन्द्रस्य दैवतः समगात् ॥३२॥

"गीता रहस्य" नामक ग्रंथ का संपादन करके, भारत के कर्तव्य का निर्णय करनेवाले, लोकमान्य श्री० बालगंगाधर तिलक असमय में इस असार संसार को छोड़कर स्वर्ग में पधारे। आप पक्के कर्मनिष्ठ और सनातन धर्म के सच्चे सेवक थे ॥३१॥ अधर्म मार्ग से मनुष्यों को हटाकर सनातन धर्म में ले जानेवाले श्री० पं० माधव प्रसाद जी मिश्र आज इस लोक में नहीं हैं ॥३२॥

गोलोकदिव्यलीलां कथाप्रसङ्गेषु भक्तिभावेन ।
माथुरनन्दकिशोरः प्रवदन्वेगाद्गतोऽलं स्वर्गम् ॥३३॥
आसीन्न कोऽपि काले यस्मिन्वक्ता तदाऽयमेकाकी ।
देवीसहायनामा विविच्य धर्मज्ञनेष्वगात्स्वर्गम् ॥३४॥

कथाप्रसंग में गोलोक का अद्भुत रहस्य समझानेवाले मथुरा के रहनेवाले श्री० पं० नन्दकिशोर जी भी आज भारत में नहीं हैं ॥३३॥ जिस समय सनातनधर्म का कोई भी प्रचारक मैदान में नहीं उतरा था उस समय पं० देवीसहायजी ने बहुत कुछ काम किया। "धर्म दिवाकर" पत्र निकाल कर आपने सनातन धर्म का बड़ा उपकार किया। आप पाटन (जयपुर) के रहने वाले थे और धर्म के अनन्य प्रेमी थे ॥ ३४ ॥

येभ्योऽष्टकं सभाष्यं सकौमुदीकं सशेखरं यत्नात् ।
मत्पूर्वजैरधीतं युगलकिशोरा दिवङ्गतास्तेऽद्य ॥३५॥
साहित्यामृतसिन्धौ येषां वाचस्तरीवदानन्दम् ।
प्रथयन्ति विष्णुदत्तास्ते मद्गुरवः पुरीमगुर्दैवीम् ॥३६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जिन से हमारे पिताजी ने अष्टाध्यायी-महाभाष्य आदि ग्रंथ पढ़े थे वे श्री० पं० युगलकिशोरजी आज भारत में नहीं हैं । ३५ ॥ साहित्यरूपी अमृत सागर में जिनका कथन नौका के समान माना जाता था वे हमारे गुरुवर्य्य श्री० विष्णुदत्त पन्त जी भी आज नहीं हैं ॥ ३६ ॥

वरमधिगत्य दयावानश्वत्थाम्नः क्रमेण यः कीर्तिम् ।
तस्तार भूमिवलये भगवद्वल्लभ इहाद्य न प्राप्यः ॥३७॥
यो धर्मरक्षणार्थं परःसहस्राण्यदाद्वसून्यत्र ।
राजा प्रतापसिंहः काश्मीरेशः स चाप्यगात्स्वर्गम् ॥३८॥

अश्वत्थामा के वरप्रदान से जिन के पूर्वजों ने आयुर्वेद का तत्त्व प्राप्त किया था वे स्वनामधन्य राजवैद्य श्रीभगवान् वल्लभजी भी आज इस असार संसार में नहीं हैं ॥ ३७ ॥ सनातन धर्म की सेवा के लिए जिन का तन मन धन सर्वदा उद्यत रहता था वे काश्मीर के महाराजा प्रतापसिंह जी भी इस धरातल को छोड़ कर देवलोक पधारे ॥ ३८ ॥

यन्मन्दिरेष्वमन्दं सहितो रमया हरिर्नरीनर्ति ।
श्रेष्ठी लक्ष्मणदासः स मधोः पुर्यामवाप मुक्तिपदम् ॥३९॥
श्रीवेङ्कटेश्वराख्यं मुम्बापुर्यां निवेश्य यत्नेन ।
यन्त्रालयं दिवमगाच्छ्रेष्ठी मन्ये स खेमराजोऽपि ॥४०॥
अस्यैव दिव्यकीर्तेः सहोदरोऽन्यः प्रकाशितग्रन्थः ।
गङ्गाविष्णुः श्रेष्ठी जगाम विष्णोः परं पदं भव्यम् ॥४१॥

जिनके मन्दिर में श्रीद्वारिकाधीश जी स्वयं लक्ष्मी के साथ आनन्द कर रहे हैं वे सेठ लक्ष्मणदासजी आज भारत में नहीं हैं ॥ ३९ ॥ मुम्बई में श्रीवेंकटेश्वर नामक यन्त्रालय का स्थापन करके जिन्हों ने घर घर सनातन धर्म का साहित्य भर दिया है वे सेठ श्री०खेमराजजी आज भूतल पर नहीं हैं ॥ ४० ॥ आप के सहोदर भाई सेठ श्री० गंगाविष्णुजी जो कि लक्ष्मीवेंकटेश्वर के अध्यक्ष थे, वे भी इस समय धराधाम पर नहीं हैं ॥ ४१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एते मया समुक्ताः प्रधानरूपेण ये दिवं याताः ।
धर्माय दत्तजीवनसर्वस्वास्ते समत्वमुपगत्य ॥४२॥
अधुना ये भूमितले वेविद्यन्ते महोदयास्तेषाम् ।
नामावलिं भवत्याः पुरतो हर्षेण वर्णयाम्यम्ब ! ॥४३॥

हे मातः ! धर्मयुद्ध में प्रधान रूप से अड़ कर जिन महारथियों ने धर्म का साथ दिया वे महानुभाव मैंने यहाँ तक गिनाये हैं ॥ ४२ ॥ आजकल भारत में जो जो महानुभाव सनातन धर्म के लिए अपना तन मन धन लगा रहे हैं उनकी नामावली इस प्रकार है ॥ ४३ ॥

मीमांसकप्रधानः प्रशस्तवेदार्थसङ्गतिप्रवणः ।
श्रीमान्नित्यानन्दः सम्प्रति काश्यां शिवं भजन्नास्ते ॥४४॥
अतिगहनवेदकाननविहरणशीलः प्रणीतसद्ग्रन्थः ।
श्रीमधुसूदनशर्मा जयपुरभूमिं रसादलङ्कुरुते ॥४५॥

दर्शनों के प्रधान मर्मज्ञ, वेद तथा वेदांगों के पूर्ण विवेचक, श्री० म० म० नित्यानन्दजी पन्त आजकल काशी में विद्यमान हैं ॥ ४४ ॥ वैदिक गहन के प्रधान पञ्चानन तथा द्वादशपादात्मक "ब्रह्मविज्ञानशास्त्र" के सम्पादक श्री० पं० मधुसूदनजी राजपण्डित आजकल जयपुर में निवास करते हैं ॥ ४५ ॥

साहित्यामृतसिन्धौ
कृतावगाहः प्रशस्तवाग्बन्धः ।
हरनारायणशास्त्री
साम्प्रतमास्ते विनोदयँल्लक्ष्मीम् ॥४६॥

साहित्यामृतसिंधु के अन्तस्तलस्पर्शी, धार्मिक ग्रंथों के मार्मिक विद्वान्, अनेक संस्कृत निबन्धों के प्रणेता, संस्कृत-साहित्य-सम्मेलन के प्रधान, म० म० विद्यासागर श्री० हरनारायण शास्त्री आजकल भारत की राजधानी दिल्ली में लक्ष्मी का आनन्द ले रहे हैं। आप सारस्वत-वंशोद्भव श्री० पं० रामदयाल जी के आत्मज हैं। आप ने श्री० पं० उदयप्रसाद

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

से व्याकरण पढ़ा, और श्री० पं० गोविन्दराम जी से साहित्य पढ़ा, तथा म० म० श्री० पं० राममिश्र जी से वेदान्त पढ़ा। आप की विद्या पर मुग्ध हो कर राजराजेश्वर ने आप को महा-महोपाध्याय पदवी प्रदान की। भारत में आप असाधारण विद्वान् हैं ॥ ४६ ॥

वेदोपवेदशिक्षा-
प्रचारसन्दत्तचित्तसद्वित्तः ।
श्रीमाँल्लक्ष्मणशास्त्री
वाराणस्यां शिवार्चनं कुरुते ॥४७॥

वेद और वेदांगों के प्रधान आचार्य तथा वैदिक साहित्य के उद्धार में दत्तचित्त म०म० श्री० पं० लक्ष्मण शास्त्री (द्रविड़) आजकल काशी में विद्यमान हैं। आपने "साङ्ग वेद-विद्यालय" खोलकर भारत का बड़ा उपकार किया है ॥४७॥

आयुर्वेदोद्धर्ता
साहित्यनिधिः समस्तमर्मज्ञः ।
श्रीमृत्युञ्जयसेवी
शालग्रामः प्रकाशते लोके ॥४८॥

प्राचीन आयुर्वेद के उद्धारक, संस्कृत साहित्य के प्रधान मर्मज्ञ, "श्री मृत्युञ्जय औषधालय" के प्रवर्तक, साहित्याचार्य श्री० पं० शालग्राम शास्त्री आजकल लखनऊ में चमत्कार दिखा रहे हैं। आप सनाढ्य कुलभूषण हैं। "आयुर्वेद महत्त्व" आदि अनेक उत्तम निबंधों के प्रणेता है। कवित्वमर्मज्ञ हैं। साहित्य दर्पण के ऊपर "विमला" टीका लिख कर आपने बड़ा उपकार किया है। आप बरेली के रहनेवाले हैं। आपकी विद्वत्ता सर्वोत्तम तथा असाधारण है ॥४८॥

यष्टीकमणिसनाथं
विद्यालयमेकमुन्नतं काश्याम् ।
समस्थापयत्स्वयत्नैः
स देवकीनन्दनो जयति ॥ ४९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काशी में "टीकमाणि विद्यालय" का स्थापन कराकर जिन्होंने वर्तमान पंडित मंडली में महत्त्व प्राप्त किया है वे दर्शनालंकार श्री० पं० देवकी-नन्दन जी आजकल बनारस में रहते हैं। आप सनातन धर्म के अनन्य सेवक तथा संस्कृत के प्रौढ़ विद्वान् हैं और अनेक ग्रंथों के संपादक हैं ॥ ४९॥

आर्यान्विजित्य वादे
गुरुकुलविद्वद्गणाश्च यो बहुशः ।
अधुनोत्स्वनव्यतर्कै-
र्गिरिधरशर्मा स भूतले मान्यः ॥५०॥

शास्त्रार्थ में उद्दण्ड आर्यसमाजियों का दर्प दलन करनेवाले, गुरुकुल के शास्त्रार्थ में अनेक पंडितों का गर्व विध्वंस करनेवाले, सनातन धर्म कालेज लाहौर के भूतपूर्व प्रिन्सिपल, वर्तमान में जयपुर महाराजा के कालेज में प्रधानाध्यक्ष म० म० व्याकरणाचार्य श्री० पं० गिरिधर शर्मा चतुर्वेदी आजकल जयपुर में विद्यमान हैं। आप बहुत काल तक "संस्कृत-साहित्य सम्मेलन" के मंत्री भी रह चुके हैं, । "संस्कृत रत्नाकर" का आपने बड़ी योग्यता के साथ संपादन किया है ॥ ५० ॥

नव्यं संस्कृतकोषं
विलक्षणं यः स्वयं प्रयत्नेन ।
सम्पादयति स रामा-
वतारशर्मा भुवस्तले धन्यः ॥५१॥

बिहार प्रांत के अद्वितीय पण्डित तथा संस्कृत-महाकोष के प्रणेता, "परमार्थ दर्शन" के आविर्भावक, शास्त्रार्थ विजयी, साहित्याचार्य श्री० पं० रामावतार जी पाण्डेय एम०, ए०, आजकल बिहार प्रांत की राज-धानी पाटलिपुत्र में बिराज रहे हैं। आप गवर्नमेन्ट कालेज के प्रिन्सिपल हैं और भारत के असाधारण विद्वान् हैं ॥ ५१ ॥

धर्मप्रदीपनामा
यस्सङ्कलितश्चकास्ति सद्ग्रन्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीमाननन्तकृष्णः
स विज्ञमान्यो न केन भुवि वन्द्यः ॥५२॥

सनातन धर्म की रक्षा के लिए "सनातनधर्म-प्रदीप" नामक नव्य-निबंध संस्कृत में लिखकर जिन्होंने जनता का उपकार किया है वे म० म० श्री० पं० अनन्तकृष्ण शास्त्री आजकल कलकत्ते में विद्यमान हैं। आप गवर्नमेन्ट कालेज में प्रोफ़ेसर हैं और संस्कृत के प्रगाढ़ विद्वान् हैं ॥५२॥

पञ्चनदीयप्रान्ते
धर्मोद्धाराय यः स्वयं यतते।
यदुकुलभूषणशास्त्री
स धर्मवीरेषु सादरं नम्यः ॥५३॥

पंजाब देश में सनातन धर्म की रक्षा के लिए तन मन धन अर्पण करने वाले, स्वनामधन्य श्री० पंडित यदुकुलभूषण शास्त्री आजकल मुलतान में विद्यमान हैं। आप उस प्रांत के महारथी हैं। आपके समक्ष में आर्यसमाजी उपदेशक गीदड़ की तरह भाग जाते हैं ॥५३॥

अनुकरणीयचरित्रः
शमादिसद्वृत्तरक्षणे दक्षः।
शास्त्री सीतारामो
मरुप्रदेशं विभूषयन्नास्ते ॥५४॥

प्रत्येक बात में अनुकरणीय चरित, शम-दम-तितिक्षा-क्षमा आदि ब्राह्मणोचित गुणों के एकमात्र निकेतन, आदर्श ब्रह्मचर्याश्रम के संस्थापक तथा परिचालक स्वनामधन्य श्री० पं० सीताराम जी शास्त्री आजकल भिवानी में विद्यमान हैं ॥५४॥

साक्षात्कृतं यथावद्
ब्रह्माद्वैतन्तदेकभावेन।
अच्युतमुनिः स लोके
जयत्यपास्तप्रपञ्चविस्तारः ॥५५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्यक्ष में ब्रह्म का साक्षात्कार करने से जीवन्मुक्त, वेदान्तशास्त्र के अगाध विद्वान्, सदाचार-निष्ठ, परमहंस परिव्राजकाचार्य श्री० स्वामी अच्युत मुनि जी महाराज आजकल भृगुक्षेत्र ( भेरिया ) में रहकर ब्रह्मानन्द का प्रवाह बहा रहे हैं। आप के आश्रम में श्री० स्वामी विश्वेश्वराश्रम जी महाराज वेदान्त का अध्यापन करा रहे हैं। आप वेदांत के अद्वितीय विद्वान् हैं, सच्चरित्र और आदर्श महापुरुष हैं, सज्जनों को आप से लाभ उठाना चाहिए ॥५५॥

वाराणसेयविश्रुत-
विद्यालयमेत्य विस्तृतस्थानम् ।
योऽध्यापयति यथाव-
द्विद्वद्वन्द्योऽस्ति प्रमथनाथः सः ॥५६॥

काशीस्थ हिन्दू विश्वविद्यालय में अनवरत विद्यादान देकर संसार का उपकार करनेवाले श्री० पं० प्रमथनाथ तर्करत्न आजकल काशी में निवास कर रहे हैं [ यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् । नच्छन्दोभंग इत्याहुस्तदा दोषाय सूरयः ॥ इति छन्दोमञ्जर्यां गङ्गादासः ] ॥५६॥

आचार्यवर्यवल्लभ-
पादोद्भूतामृतप्रवाहेण ।
स्नपयन्ति ये स्वभक्ता-
न्गोकुलनाथा जयन्ति ते जगति ॥५७॥

आचार्यवर्य श्री० १०८ आद्यवल्लभाचार्य जी महाराज के सदुपदेशों का तत्त्व समझाकर भारतनररत्नों का जीवन सफल करनेवाले श्री० १०८ गोकुलनाथजी महाराज आजकल मुंबई में विराज रहे हैं। आप भारत में अद्वितीय सत्हृदय महानुभाव हैं। आपके द्वारा समय समय पर अनेक सद्ग्रंथों का प्रकाशन होता रहता है। वर्तमान समय के आचार्यों में आप अद्वितीय हैं ॥५७॥

प्रज्ञाप्रसिद्धनाना-
विधबहुसद्ग्रन्थसङ्ग्रहव्यग्रः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीयादवस्त्रिविक्रम-
तनयो वैद्यः स्वतेजसा जयति ॥५८॥

अपने असाधारण परिश्रम से आयुर्वेदीय प्राचीन ग्रंथों का प्रकाशन करनेवाले स्वयं संस्कृत साहित्य के असाधारण विद्वान् श्री० पं० यादव जी त्रीकम जी आचार्य आजकल मुंबई में विद्यमान हैं। आप आयुर्वेद के मर्मज्ञ तथा अद्वितीय वैद्य हैं ॥ ५८ ॥

रामानुजार्यवर्य-
प्रसादमाधुर्यनिर्झरीभङ्गैः ।
मदयन्नमन्दभक्ता-
न्वैष्णवधर्मप्रचारको जयति ॥५९॥

श्री रामानुजचार्य के प्रसाद से प्राप्त, भक्तिमन्दाकिनी का अमन्द रस प्रवाह जिन की कृपा से मनुष्यों को अनायास ही प्राप्त हो जाता है, वे प्रतिवादि-भयंकर मठ के प्रधानाचार्य श्री० १०८ अनन्ताचार्य जी महाराज आजकल मुम्बई के "दिव्य देश" में विराज रहे हैं ॥५९॥

वृन्दावनैकभूमे-
र्यस्याद्यापि प्रगीयते मनुजैः ।
कीर्तिः स लोकवन्द्यो
मधुसूदन एव विश्रुताचार्यः ॥६०॥

सर्वदा श्री वृन्दावन में निवास करनेवाले गौड़माध्वेश्वराचार्य श्री मधुसूदन गोस्वामीजी आज कल श्रीवृन्दावन धाम में निवास करते है। आप अच्छे विद्वान् हैं ॥६०॥

धर्मोपदेशकानामाद्यो वन्द्यो भुवस्तले भूपैः ।
श्रीमान्दीनदयालुश्चकास्ति सर्वत्र धार्मिकप्राणः ॥६१॥
अमुना समस्तदेशे निजश्रमेण प्रसार्य धर्माज्ञाम् ।
विद्यालयप्रतिष्ठा व्यधायि विद्राव्य नास्तिकप्रवरान् ॥६२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मोपदेशकों में सबसे प्राचीन, परम प्रतापी, कर्मवीर, परम साहसी, दिग्विजयी, धीरोदात्त गुणान्वित, यशोधन सनातन धर्म के सच्चे सेवक अनथक प्रचारक, परोपकारी, श्री पं० दीनदयालु शर्म्मा व्याख्यान वाचस्पति, आजकल झज्झर में विद्यमान हैं ॥६१॥ आपने भारत के प्रत्येक प्रांत में भ्रमण करके पाठशाला ब्रह्मचर्याश्रम, स्कूल, कालेज, विद्यालयों का स्थापन कराया। लाहौर की सनातनधर्म सभा और सनातनधर्म कालेज आपके परिश्रम का ही प्रबल उदाहरण है ॥६२॥

यस्यास्ति मदनमोहनमूर्तेः सर्वत्र नाममाहात्म्यम् ।
लोके स्वनामधन्यश्चकास्ति धर्मेण मालवीयः सः ॥६३॥
प्राचीनविश्वविद्यालयप्रतिष्ठां पुनर्नवीकर्तुम् ।
अश्रान्तमेष यतते भारतभूमावतिप्रसिद्धगतिः ॥६४॥

संसार में अति प्रसिद्ध, देश के प्रधान नेता श्री० पं० मदनमोहन मालवीय आजकल प्रयाग में निवास करते हैं। आपने "सनातनधर्म संग्रह" नामक एक पुस्तक लिख कर जनता का उपकार किया है ॥६३॥ काशी में प्राचीन विश्वविद्यालयों का उदाहरण उपस्थित करने के लिए आपने एक नवीन हिन्दू विश्वविद्यालय स्थापित किया है। उसी के संचालन में आप सर्वदा तत्पर रहते हैं ॥६४॥

यो रत्नदुर्गभूमौ निधाय बीजं श्रमेण धर्मस्य ।
श्रीमाधवप्रसादस्ततान वर्षैर्न केन वन्द्यः सः ॥६५॥
उत्खाय नास्तिकानां मतानि गर्वेण धर्मसञ्चारम् ।
यश्चक्रे मरुभूमौ राधाकृष्णः स विद्यते जगति ॥६६॥

मरुदेशीय रत्नगढ़ में राजस्थान ब्रह्मचर्याश्रम का स्थापन करके, धर्म का जिन्होंने बीजारोपण किया है वे पं० नानूराम जी के सुपुत्र श्री० पं० माधवप्रसादजी एम्० ए०, आजकल मुंबई में विराज रहे हैं ॥६५॥ नास्तिक (परलोक न माननेवाले) आर्यसमाजियों का अपने पांडित्य से सर्वदा दर्प दलन करनेवाले श्री० पं० राधाकृष्ण जी मिश्र आजकल कलकत्ते में विद्यमान हैं ॥६६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्यावदानपद्यं मदेन लोकाः पठन्ति नगरेषु
संसदि राजगुरूणां हरिप्रसादः स राजते भुवने ॥६७॥
प्राचीनतममनुत्तममैतिह्यं येन रचितं यत्नैः ।
स जगति लज्जारामः प्रसिद्ध एवास्ति भारतीयेषु ॥६८॥

जिनका अवदानपद्य पढ़नेवाले अनेकों विद्वान् आज भी यत्रतत्र धर्मप्रचार कर रहे हैं वे म० म० श्री० हरिप्रसाद शास्त्री एम्० ए०, सी० आई० ई०, आजकल कलकत्ते में विद्यमान हैं ॥६७॥ प्राचीन इतिहास के विज्ञ, प्राणपण से सनातनधर्म की रक्षा करनेवाले, साहित्य के प्रधान मर्मज्ञ श्री पं० लज्जाराम शर्मा (महता) आज कल बूंदी में विद्यमान हैं ॥६७॥

यो मागधीं परिस्थितिमवलोक्याद्यापि सस्पृहं यतते ।
धर्माय दत्तचित्तो गङ्गाविष्णुः स वर्तते जगति ॥६९॥
सिद्धान्तवादिवृन्दे यत्प्राशस्त्यं विलोक्यते मनुजैः ।
कार्तान्तिकः स लोके श्रीकृष्णाख्यः स्वतेजसा जयति ७०

मगधदेश की वर्तमान परिस्थिति को देखकर बिहार प्रान्त में सनातन धर्म का प्रचार करनेवाले श्री० पं० गंगाविष्णु मिश्र काव्यतीर्थ आजकल मखमीलपुर में निवास करते हैं। आप हमारे सहयोगी और सनातन धर्म के सच्चे सेवक हैं ॥६९॥ ज्योतिष के अन्तर्गूढ़तत्त्वज्ञ, सिद्धांतवेत्ता, श्रीकृष्ण शर्मा (कार्तांतिक) आजकल मुम्बई में विद्यमान हैं। आपकी विद्वत्ता का मुम्बई में बहुत कुछ मान है ॥७०॥

अश्रान्त एव नित्यं यो धर्माय प्रवर्तते लोके ।
श्रीमान्गणेशदत्तः स्वनामधन्योऽस्ति साम्प्रतं पुरतः ॥७१॥
पूर्वोपार्जितवित्तव्ययप्रभावेण धर्मकार्याणि ।
श्यामविहारीलालः कुर्वन्नद्यापि वर्तते धन्यः ॥७२॥

सनातन धर्म के अनथक प्रचारक, श्री पं० गणेशदत्त शास्त्री आजकल ग्वालियर में आयुर्वेदीय विभाग का काम कर रहे हैं। पुराने प्रचारकों में आप का भी कार्य प्रशंसनीय है ॥७१॥ सनातन धर्म के प्रधान सेवक,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सनाढ्यकुलभूषण श्री० पं० श्याम बिहारी लाल जी ( भटेले ) आजकल इटावा में विद्यमान हैं। आप आनरेरी मजिष्ट्रेट हैं। आपने सनातनधर्म हाईस्कूल खोलकर जनता का बड़ा उपकार किया है। आप पुराने रईस और धर्मात्मा सज्जन हैं ॥ ७२ ॥

एकीकृत्य समस्तं निचयं सौन्दर्यसन्ततेर्देवः ।
चक्रे यदेकरत्नं मोहनलालः स वर्तते जगति ॥७३॥
कुर्माचलीयपूर्वजदैवज्ञोद्भूतगणितमर्मज्ञः ।
श्रीरामदत्तशर्मा विद्वद्रत्नं चकास्ति मद्देशे ॥७४॥

संसार का समस्त सौन्दर्य एकत्र करके विधाता ने जिनको बनाया वे पं० मोहनलाल जी त्रिपाठी आजकल लखीमपुर (खीरी) में आनन्द कर रहे हैं। आपका सनातनधर्म हाईस्कूल, संस्कृत पाठशाला, छात्रावास, धर्म प्रचार, उदारता, परोपकारता आदि गुणग्राम इस प्रांत के धर्म प्रचारकों में सर्वोन्नत हैं। आप कट्टर सनातनधर्मी और साहित्य के मर्मज्ञ हैं ॥ ७३ ॥ कूर्माचल के दैवज्ञों में अद्वितीय, सनातन धर्म के प्राचीन महोपदेशक श्री० पं० रामदत्त जी ज्योतिर्विद् आजकल हलद्वानी मंडी (नैनीताल) में रहते हैं। आपका पंचांग समस्त भारत में प्रसिद्ध तथा प्रचलित है ॥ ७४ ॥

यो नास्तिकव्रजकृते काल इवालं प्रगीयते मनुजैः ।
शास्त्री कालूरामः स भुवनमध्ये तनोति बहु धर्मम् ॥७५॥
सम्पादयन्यथावद् ब्राह्मणसर्वस्वमुत्तमं पत्रम् ।
धर्मन्तनोति भुवने यः श्रीमान्ब्रह्मदेवः सः ॥७६॥

नास्तिक आर्यसमाजियों के लिए काल स्वरूप श्री० पं० कालूराम जी युक्तिविशारद आजकल अमरौधा ( कानपुर ) में निवास करते हैं। आप हमारे सहयोगी और प्रसिद्ध महारथियों में से एक हैं। हिन्दू-पत्र के आप संपादक हैं। आपने "पुराणवर्म" लिखकर जनता का बड़ा उपकार किया है ॥७५॥ शास्त्रीय विषयों के प्रकाशक, सनातनधर्मपोषक, स्वर्गवासी पं० भीमसेन जी द्वारा प्रवर्तित, [ ब्राह्मण सर्वस्व ] नामक मासिक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पत्र के संपादक श्री पं० ब्रह्मदेव शास्त्री आज कल इटावा में रहते हैं। आप सनातन धर्म के कट्टर पक्षपाती हैं ॥ ७६ ॥

सेवां विधाय भारतवर्षे धर्मस्य वेदसिद्धस्य।
दुर्गादत्तोऽप्यधुना मन्ये कालं यथासुखं नयति ॥७७॥
जङ्गमतीर्थवदस्यां भारतभूमौ परिभ्रमन्येन।
सूपकृतं जनजातं नन्दकिशोरः स सज्जनैर्मान्यः ॥७८॥

ऋषिकुल हरिद्वार के प्रधान पोषक सनातन धर्म के प्रचारक श्री० पं० दुर्गादत्त जी पन्त आजकल काशीपुर में रहते हैं। आप आनरेरी मजिस्ट्रेट हैं। आपने बहुत कुछ धर्म प्रचार किया है ॥७७॥ भारतवर्ष में सर्वत्र सनातन धर्म का प्रचार करनेवाले, हिन्दी के अनन्य भक्त, श्री० पं० नन्द-किशोर जी शुक्ल आजकल टेढ़ा उन्नाव में रहकर धर्म का प्रचार कर रहे हैं ॥७८॥

प्राधान्यमेत्य लोके देवैर्दत्तं प्रयागनगरेऽस्मिन्।
यो राजते बुधेन्द्रो गङ्गानाथः स विद्यते मान्यः ॥७९॥
सम्पाद्य पूर्वकाले सरस्वतीं यः प्रसादगुणयुक्ताम्।
कीर्तिन्ततान लोके स महावीरप्रसादशर्माऽऽस्ते ॥८०॥

ईश्वर की कृपा से विद्या-व्यवसायियों में उच्चतम पद प्राप्त करके भारत का उपकार करनेवाले श्री० डॉ० गंगानाथ ( झा ) आजकल प्रयाग नगरी को अलंकृत कर रहे हैं। आप वर्तमान समय में इलाहाबाद यूनीवर्सिटी के वाइसचांसलर हैं ॥ ७९ ॥ भारतवर्ष के प्रसिद्ध हिन्दी-लेखक, "सरस्वती" के प्रधान संपादक, संस्कृत साहित्य के अनुभवी समालोचक, संपादन कला के प्रधानाचार्य श्री० पं० महावीर प्रसाद द्विवेदी आजकल अपने जन्म-स्थान में रिंगत्तरंगिणी भगवती भागीरथी के परम पावन तट पर अपने शेष जीवनकाल का उपयोग कर रहे हैं ॥८०॥

सम्पादयन्प्रयत्नैः शिक्षां देशोपकारसम्बद्धाम्।
स सकलनारायण इह भूमेर्वलये चकास्ति धर्मज्ञः ॥८१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रम्ये विहारदेशे विद्यादानेन तोषयँल्लोकान् ।
हरिहरकृपालुनामा विद्वद्वर्यश्चकास्ति वेदज्ञः ॥८२॥

संसार को शिक्षा देने के लिए "शिक्षा" नामक पत्र को निकालकर, श्री० पं० सकलनरायण जी पाण्डेय आजकल कलकत्ता के संस्कृत कालेज में प्रोफ़ेसर पद को सुशोभित कर रहे हैं ॥८१॥ बिहार प्रांत के प्रधान नगर पाटलिपुत्र में संस्कृत विद्या का अध्यापन करानेवाले स्वनामधन्य श्री० पं० हरिहरकृपालु जी आजकल पटना में निवास करते हैं ॥ ८२ ॥

समयोचितनवकर्मा विद्वद्गोष्ठीगरिष्ठजनमान्यः ।
व्रजनन्दनप्रसादस्तनोति दिव्यानि सच्चरित्राणि ॥८३॥
नवमाधुरीधुरीणः सुधासमुद्योगदत्तनिजवित्तः ।
मृत्युञ्जयानुरागी स रूपनारायणो वरीवर्ति ॥८४॥

समयोचित नवीन नवीन कार्य करनेवाले, विद्वद्गोष्ठी में मान प्राप्त करनेवाले श्री० पं० व्रजनन्दनप्रसादजी आजकल मुरादाबाद में विद्यमान हैं। आप एड्वोकेट श्री० पं० शालिग्राम जी वकील के सुपुत्र हैं, और पक्के सनातन धर्मी हैं ॥८३॥ नव "माधुरी" के लेखकों में धुरीण, तथा निरंतर "सुधा" के आस्वादन में प्रवीण श्री० पं० रूपनारायण जी पांडेय आजकल लखनऊ में मृत्युञ्जय की सहयोगिता प्राप्त कर रहे हैं ॥८४॥

अग्नित्रयीव दीप्ता लोके वेदत्रयीव बुधवेद्या ।
बन्धुत्रयी प्रकामं जयति गुणानां त्रयीव सद्रूपा ॥८५॥
धर्मायार्पितवित्तःकेशवचरणार्चनानुरतचित्तः ।
श्रीवैजनाथनामा देवि ! चतुर्वेदवंशजः सोऽयम् ॥८६॥

अग्नित्रयी के समान देदीप्यमान, वेदत्रयी के समान बुधवेद्य, मिश्र बंधुत्रयी आजकल अनेक स्थानों में रह कर सनातनधर्म की असाधारण सेवा कर रही है। आपका "मिश्रबंधुविनोद" भारत में अतिप्रसिद्ध है ॥ ८५ ॥ धर्म के लिए धन का उपयोग करनेवाले, श्री० विष्णु भगवान् के अनन्य भक्त, परमवैष्णव श्री० बैजनाथ जी चतुर्वेदी आज कल कलकत्ता में विराज रहे हैं ॥८६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मप्रचारकृत्यं मुहुर्विधातुं निजप्रयत्नेन ।
श्रीमान्गणेशदत्तश्चकास्ति पञ्चाम्बुपावने देशे ॥८७॥
धर्मैकपक्षपाती निरस्तनानाविधैकमतवादी ।
श्रीरामदत्तरायस्तनोति सेवां सदैव विज्ञानाम् ॥८८॥

पंजाब में सनातन धर्म का लगातार प्रचार करने वाले गोस्वामी गणेशदत्त जी आजकल लायलपुर में निवास करते हैं। आप सनातन धर्म प्रतिनिधि सभा पंजाब के वर्तमान मंत्री हैं। त्यागमूर्ति, सच्चरित्र और सत्य-भाषण में हरिश्चन्द्र हैं ॥ ८७ ॥ सनातन धर्म के कट्टर पक्षपाती, नास्तिक सिद्धान्तों के सर्वदा खंडन करने वाले ब्राह्मणकुलभूषण श्री० पं० रामदत्त राय जी आज कल कलकत्ते में "हिन्दी बङ्गवासी" का संपादन कर रहे हैं ॥८८॥

मरुदेशीयब्राह्मणसमितेर्मन्त्री निरस्तशूद्रकुलः ।
श्रीमान्हनुमद्दत्तः कलिकातायां विराजते विज्ञः ॥८९॥
यः सिन्धुदेशजातान्स्वधर्मतत्त्वं मुहुः प्रबोधयति ।
सिद्धेश्वरः स मन्त्री धर्मसभायाश्चकास्ति भुवनेऽत्र ॥९०॥

मारवाड़ी ब्राह्मण सभा के प्रधान मंत्री, तथा ब्राह्मणत्व के कट्टर पक्षपाती, शूद्र-दर्पदलन, श्री० पं० हनुमानदत्त जोशी कलकत्ते में "मारवाड़ी ब्राह्मण" का संपादन कर रहे हैं ॥ ८९ ॥ सिन्ध प्रान्त में सनातन धर्म का प्राणपण से प्रचार करने वाले, कट्टर सनातनधर्मी श्री० पं० सिद्धेश्वर शर्मा "सिन्धु समाचार" पत्र के द्वारा सनातनधर्म की सेवा कर रहे हैं ॥९०॥

सम्पादकेषु लब्धं येनाचार्यत्वमेकजनलभ्यम् ।
वृद्धः सोऽमृतलालस्तवाम्ब ! सेवामहर्दिवं कुरुते ॥९१॥
ज्वालामुखीसनाथं भव्यं देशं स्वजन्मना हर्षात् ।
योऽभूषयत्स लोके मनसारामोऽस्ति वैद्यराड् धन्यः ॥९२॥

अनेक पत्रों का संपादन करते करते जो स्वयं अपने अनुभव के कारण 'संपादकाचार्य" बन चुके हैं वे वयोवृद्ध श्री० पं० अमृतलाल चक्रवर्ती

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आजकल "श्री वेंकटेश्वर समाचार" का मुंबई में संपादन कर रहे हैं ॥९१। ज्वालामुखी देवी के समीप, कांगड़ा जिले के मुहूई ग्राम में, सारस्वत वंशावतंस श्री० पं० दीवानचन्द्रजी थे उनके सुपुत्र श्री० पं० मनसाराम शर्मा शास्त्री तथा आयुर्वेदाचार्य आजकल रावलपिंडी सदर में आयुर्वेदीय चिकित्सा के द्वारा जनता का उपकार कर रहे हैं। आप स्थानीय ब्राह्मणसभा के प्रधान हैं, सनातन धर्म हाईस्कूल के प्रधानाध्यापक हैं और आयुर्वेद विद्यापीठ के सदस्य हैं ॥९२॥

विद्यामुपेत्य दिव्यां प्रबन्धकत्वं रसादलङ्कुरुते ।
स सुधाकरस्त्रिपाठी वदान्यमान्यः क्रमेण सम्मान्यः ॥९३॥
दैनिकपत्रनियन्त्रणकार्ये दैवादवाप्तनिर्बन्धः ।
झावरमल्लः शर्मा सर्वत्रातिप्रसिद्ध एवाऽऽस्ते ॥९४॥

संस्कृत साहित्य के परमानुरागी; नीति प्रवीण, श्री० पं० सुधाकर जी त्रिपाठी बी० ए० आजकल बरेली में रानीसाहब के स्टेट का प्रबन्ध कर रहे हैं। आप कट्टर सनातन धर्मी हैं ॥ ९३ ॥ दैनिक पत्रों के संपादन में सिद्धहस्त, हिन्दू संसार के प्रधान संपादक, श्री० पं० झावरमल्ल शर्मा आजकल दिल्ली में निवास करते हैं । आपने "हिन्दू-विवाह रहस्य" लिख कर सनातनधर्म का बड़ा उपकार किया है ॥ ९४ ॥

प्रेमामृतप्रवाहं प्रेमसभासु प्रवर्धयन्यत्नैः ।
ज्योतिप्रसादशर्मा तनोति भद्राणि भारते भूयः ॥९५॥
अनुभूतयोगमार्गः प्रभूतवित्तागमानुगतकार्यः ।
श्रीवृद्धिचन्द्रवैद्यो मुम्बापुर्यामसंशयं जयति ॥९६॥

दिल्ली की अनेक प्रेमसभाओं में, प्रेमामृत का प्रबल प्रवाह बहाने वाले, अनन्य भगवद्भक्त श्री० पं० ज्योतिप्रसाद जी आजकल इन्द्रप्रस्थ में सनातन धर्म की सेवा कर रहे हैं ॥९५॥ योगमार्ग के प्रधान अनुभवी, आयुर्वेद का रहस्य जाननेवाले, लक्ष्मण गढ़ के निवासी श्री० पं० वृद्धिचंद्र जी राजवैद्य आजकल मुंबई में धर्म प्रचार कर रहे हैं ॥९६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संस्कृतसाहित्यमयं पत्रं सम्पाद्य पद्यभूयिष्ठम् ।
पशुपतिनाथादिबुधव्रातः सर्वत्र किन्न मानार्हः ॥९७॥
मातङ्गानिवमत्तान्यो विद्राव्य स्वतेजसा लोके ।
श्रीचन्द्रशेखराह्वो जयत्यमन्दं स केन नहि मान्यः ॥९८॥

"संस्कृतसाहित्य-परिषद्" नामक संस्कृत पत्र के संपादक, तथा संस्कृत नाटकाभिनय के प्रधान प्रबंधक श्री० पं० पशुपतिनाथ जी तथा श्री० पं० गीष्पतिराय चतुर्धुरीण आदि सहृदय विद्वद्गण आजकल कलकत्ते में आनंदामृत का आस्वादन कर रहे हैं ॥ ९७ ॥ मदमत्त मातंगों को जिस प्रकार सिंह भगा देता है ठीक उसी प्रकार अहंकारी विद्वानों का गर्व खर्व करनेवाले, स्वनामधन्य श्री० पं० चंद्रशेखर शास्त्री आजकल कानपुर को सुशोभित कर रहे हैं ॥ ९८ ॥

करुणारुणाकमलाक्षः कमलाकान्तार्चनारतस्वान्तः ।
श्रीकृष्णदत्तवैद्यः कस्य न भूत्यै भुवस्तले भव्यः ॥९९॥
हरिहरसुरूपशास्त्री स्वनामधन्यः स मौलचन्द्रश्च ।
दीनदयालोस्तनयौ सनयौ धर्माय सच्छ्रमं कुरुतः ॥१००॥

करुणावरुणालय, सर्वदा प्रसन्नवदन, आयुर्वेद के प्रधानाचार्य, राजवैद्य श्री० पं० कृष्णदत्त जी ( शंखधार ) आजकल मुरादाबाद में धर्म। प्रचार कर रहे हैं ॥ ९९ ॥ स्वनामधन्य श्री० पं० हरिहरसुरूप शास्त्री, तथा पं० मौलिचन्द्र शर्मा एम्० ए० यह दोनों ही महानुभाव सनातन धर्म की अच्छी सेवा कर रहे हैं। आप दोनों महानुभाव जगत्प्रसिद्ध श्री० पं० दीन दयालु शर्मा जी के सुपुत्र हैं जिनके विषय में पहले लिखा जा चुका है ॥१००॥

समवाप्तदिव्यविद्यः प्रशस्तकर्मा विनीतलघुवेशः ।
श्रीलीलाधरशास्त्री नवीनविद्येषु विद्यते धन्यः ॥१०१॥
लोकोपकारकर्मसु विद्यादाने तथा स्वधर्मेऽपि ।
जयनारायणमिश्रो मरुदेशीयश्चकास्ति विख्यातः ॥१०२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मचर्याश्रम में विधिपूर्वक विद्याभ्यास समाप्त करके सनातन धर्म की सेवा करने वाले, ऋषिकुल हरद्वार के प्रधान स्नातक श्री० पं० लीलाधर शास्त्री आजकल पंजाब में धर्म का प्रचार कर रहे हैं ॥१०१॥ संसार के उपकार में, विद्यादान में तथा अपने धर्मानुष्ठान में जिनका समस्त समय व्यय होता है वे स्वनाम धन्य श्री० पं० जयनारायणजी मिश्र (फतेहपूर) निवासी आजकल कलकत्ते में धर्म प्रचार कर रहे हैं ॥१०२॥

सर्वेषु दिव्यकर्मसु धर्माधिक्यं विविच्य यो यतते ।
श्री रामलालशर्मा स वैद्यवर्यः प्रशंसनोयतमः ॥१०३॥
आनन्दयति यथावद्धर्मानुगतान्महोदयान्योऽत्र ।
सोऽप्यानन्दीलालो विद्वद्वर्यश्चकास्ति भुवनेषु ॥१०४॥

धार्मिक कार्यों में सहयोग देने वाले आयुर्वेद विशारद श्री० पं० रामलालजी (रसवैद्य) आज कल मुंबई में धर्म प्रचार कर रहे हैं ॥१०३॥ धर्म में प्रेम रखने वाले सज्जनों को प्रतिदिन आनन्द देने वाले सीकर निवासी श्री० पं० आनंदीलालजी (खंडेलवाल) आजकल कलकत्ते में आनंद कर रहे हैं ॥१०४॥

अलवरनरेशसंसद्यवाप्तदिव्यानवद्यसम्मानः ।
श्रीचन्द्रदत्तशास्त्री भुवस्तलेऽतिप्रसिद्ध एवाऽऽस्ते ॥१०५॥
परमेश्वराज्जगत्त्यां रमेश्वराद्वा नितान्तमानन्दम् ।
सम्प्राप्य योऽत्र रमते नवीनविद्वत्सु लोकमान्यः सः ॥१०६॥

महाराजा अलवरनरेश के द्वारा प्राप्तसंमान विद्याविनोदी श्री० पं० चंद्रदत्त शास्त्री (पर्वतीय) आजकल अलवर में रहकर धर्म्म का प्रचार कर रहे हैं ॥१०५॥ परमेश्वर अथवा रमेश्वर से वरदान प्राप्त कर जिन्होंने विद्याव्यवसायियों में महत्त्व प्राप्त किया है वे श्री० पं० परमेश्वरानन्दजी शास्त्री आजकल सनातन धर्म कालेज (लाहौर) में धर्माध्यापन करा रहे हैं ॥१०६॥

यद्भारती यथावत्कवित्वमासाद्य गोकुलस्थानाम् ।
मदयति मनांसि नित्यं नन्दकिशोरः स भूतले जयति १०७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मोपदेशनार्थं कृतश्रमो यः प्रसिद्धनगरेषु।
श्रीरामचन्द्रशास्त्री स भूतलस्थान्विनोदयञ्जयति ॥१०८॥

अविश्रांत रूप से जिनके काव्यामृत प्रवाह श्री० १०८ गोवर्धनलालजी महाराज को आनन्दित कर रहे हैं वे श्री० पं० नन्दकिशोर भट्ट ( आशुकवि ) आजकल नाथद्वारे में निवास करते हैं ॥ १०७ ॥ संसार में जिनका धर्मप्रचार सूर्य की तरह देदीप्यमान माना जाता है वे श्री० पं० रामचंद्र शास्त्री आज कल पीलीभीत में धर्म प्रचार कर रहे है ॥ १०८ ॥

अस्मत्प्रधानमित्रं भगवत्सेवाऽनुरक्तपरिवारः।
श्रीरङ्गनाथनामा गोस्वामी देवि ! भारते जयति ॥१०९॥
अन्ते नामस्मरणं धुनोति पापानि यस्य देवस्य।
नारायणः स भूतलवासिजनानां सुखाय सम्भूयात् ॥११०॥

सर्वदा भगवत्सेवा में अनुरक्त प्रसन्नवदन श्री० गोस्वामी रङ्गनाथजी महाराज आजकल बरेली में भगवद्भक्तों को भक्तिमार्ग का उपदेश दे रहे हैं ॥१०९॥ जिनके नामस्मरणमात्र से मनुष्य मुक्तबंधन हो कर भगवत्सायुज्य को प्राप्त करता है वे श्री० नारायणदत्तजी गोस्वामी आजकल भारत में धर्मप्रचार कर रहे हैं ॥ ११० ॥

यस्य प्रकाश एव व्युदस्य तिमिरौघमुन्नतिन्तनुते।
जगति प्रकाशानन्दः पञ्चनदाख्ये स वियते देशे ॥१११॥
विनयार्जवादिसद्गुणगणैरुपेतं स्वधर्मबहुनिष्ठम्।
यमनोखेलालबुधं स्मरन्ति लोकाः स भारते मान्यः ॥११२॥

जिन का प्रकाश समाजरूपी तिमिर को हटा कर मनुष्यों को धर्म की ओर बढ़ाता है वे स्वामी प्रकाशानन्द जी आजकल पंजाब में धर्म की धूम मचा रहे हैं [ अत्र तीव्रप्रयत्नेन संयोगाद्देरगौरवम् ] ॥ १११ ॥ विनय, आर्जव, धर्मप्रियता आदि गुणगणों के कारण जिनका सर्वत्र सर्वदा स्मरण होता रहता है वे श्री० पं० अनोखे लाल शर्मा आजकल तिलहर में धर्मप्रचार कर रहे हैं ॥ ११२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एते मया समुक्ताः प्रधानभावेन यैरविश्रान्तम् ।
अत्युपकृतः स्वधर्मो भारतभूमौ निजप्रयासेन ॥११३॥
साम्प्रतमनन्यधर्मान्भारतभूमिप्रतिष्ठितान्भूपान् ।
गणयामि धर्मकार्ये यैरादरतः पदं क्रमाद्दत्तम् ॥११४॥

हे मातः ! यहां तक मैंने उन ब्राह्मण महानुभावों का वर्णन किया है जिन्होंने हर प्रकार से सनातन धर्म की रक्षा के लिए प्रयत्न किया है ॥११३॥ अब मैं उन राजा-महाराजाओं का आपके समक्ष में वर्णन करूंगा जिन्होंने भारतवर्ष में तन मन धन से सनातन धर्म की सहायता की है ॥११४॥

अनवरतदानवारां
समुच्चयोऽब्धिस्वरूपमुपयातः ।
यस्याद्य भूमिभागे
स चन्द्रचूडः प्रशास्ति निजराज्यम् ॥११५॥

जिनका निरंतर दान देने के समय गिरा हुआ जल राशि ही समुद्र के स्वरूप में परिणत होगया है वे महाराजा चन्द्रचूडसिंह जी ( सी० आई० ई० ) रईस चंदापुर अवध में विद्यमान हैं । आप अच्छे संस्कृतज्ञ कवि हैं ॥११५॥

धवलयति जीवलोकं
धवलपुरस्थोऽपि यः स्वकीर्तिजलैः ।
अनवरतमुदयभानुः
स भूपवर्यश्चकास्ति सन्मित्रम् ॥११६॥

जिनका उज्वल यश समस्त संसार को धवलित कर रहा है वे धवलपुराधीश सर सवाई महाराज राणा उदयभानुसिंह लोकेंद्र बहादुर के०सी० एस्०आई० ) तथा ( के० सी० वी० ओ० ) महाराजाधिराज धौलपुर आज कल अपने राज्य में विराजमान हैं । आपके पास धर्मचर्चा के लिए सर्वदा श्री० पं० चन्द्रशेखर जी रहते हैं ॥११६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वत्र लब्धमान्यः
स्वमानरक्षार्थमुद्यतस्वान्तः ।
भूसुरकुलावतंसो
रमेश्वरोऽस्मिन्भुवस्तले जयति ॥११७॥

सनातन-धर्म-सभाओं में प्रायः प्रधान पद को अलंकृत करनेवाले महाराजाधिराज सर, डाक्टर रमेश्वरसिंह जी [ जी० सी० आई० ई०, के० बी० ओ० ] दर्भंगानरेश आजकल अपने राज्य में रहते हैं ॥ १७ ॥

यं भगवतीप्रसादं
नमन्ति भूयः स्मरन्ति सच्चित्रम् ।
बलरामपुरनरेशः
स भूमिभाजां सुखाय सम्भूयात् ॥११८॥

जिनका गुणगौरव आज अवध के रईसों में घर घर गाया जा रहा है वे महाराजा भगवतीप्रसादसिंह बहादुर ( के० सी० आई० ई० ) तथा ( के० बी० ई० स्वर्ग में भगवत्सायुज्य प्राप्त कर रहे हैं ॥ ११८ ।

वाराणसेयविद्व-
त्प्रशस्तिपात्रोभवद्वपुर्धीरः ।
प्रभुनारायणसिंह-
श्चकास्ति भूपेषु भारतीयेषु ॥११९॥

काशी के पंडितों द्वारा गीयमानावदान भूमिहारब्राह्मण-कुलभूषण सर प्रभुनारायणसिंह जी ( जी० सी० एस० आई ) तथा ( जी० सी० आई० ई० ) महाराजा बनारस आजकल रामनगर में निवास करते हैं ॥ ११९ ॥

श्रीराघवेन्द्रवंश्यः
प्रसिद्धभूपालवर्यबहुमान्यः ।
अलवरराज्याधिपति-
र्जयसिंहः सर्वभूतले जयति ॥१२०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रातःस्मरणीय सुगृहीत-नामधेय श्रीराघवेन्द्रवंश के प्रधान मुकुट-मणि, कर्नल, सवाई जयसिंह जी ( जी० सी० आई० ई०, के० सी० एस० आई० ) महाराजा अलवर आजकल अपनी राजधानी को सुशोभित कर रहे हैं ॥१२०॥

श्रीरामनन्दनेति-
प्रशस्तनामा प्रसादसंयुक्तः ।
भूसुरवंशनरेशः
प्रसिद्ध एवास्ति भारते भव्यः ॥१२१॥

सनातन धर्म की रक्षा में तन, मन, धन अर्पण करनेवाले स्वनामधन्य भूमिहार ब्राह्मण कुलभूषण श्री० रामनन्दनप्रसाद नारायणसिंह जी अपनी राजधानी सेहड़ा में विद्यमान हैं। आपके यहां प्रति वर्ष सनातन धर्म सभा तथा विद्वत्परिषद् होती है ॥ १२१ ॥

मरुदेशीयजनानां
त्राता धर्माय दत्तबहुवित्तः ।
बीकानेरनरेशो
गङ्गासिंहो न केन बहु मान्यः ॥१२२॥

मरु प्रांतीय समस्त धनी मानी सज्जनों के एकमात्र अधिपति मेजर, जनरल, सर गंगासिंह बहादुर (जी० सी० आई० ई०, जी० सी० वी०, ओ० वी० ई०, के० सी० वी० ए०, डी० सी०) महाराज बीकानेर आजकल अपने राज्य में भागीरथी का प्रवाह बहा रहे हैं ॥ १२२ ॥

अन्वर्थदिव्यनामा
वैष्णवधर्मोपयुक्तबहुधामा ।
रघुराजसिंहभूप-
श्चकास्ति रीवाँनरेशतां प्राप्तः ॥१२३॥

अन्वर्थ तथा सुन्दर नाम रूप से अलंकृत वैष्णव धर्म के अनन्य भक्त महाराजा श्री० रघुराजसिंह बहादुर आजकल अपने रीवां राज्य में प्रजावत्सलता का परिचय दे रहे हैं ॥ १२३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मस्य रक्षणार्थं वसूनि वेगेन यो ददात्यनिशम् ।
स श्रीगणेशसिंहश्चकास्ति भूपेषु धर्मवीरेषु ॥१२४॥
लवपुरपरिसरभूमौ यद्दानजलैरहर्निशं धर्मः ।
संसिच्यते मनुष्यैः स रामशरणोऽस्ति भूभृतामेकः ॥१२५॥

धर्म की रक्षा में सर्वदा तत्पर विद्वानों का मान करनेवाले धीर, वीर, गंभीर, श्रीयुत गणेशसिंह जी रईस ( भदौरिया ) आजकल आगरे में विद्यमान हैं। आपने "हिन्दूसंसार" दैनिकपत्र अपने व्यय से चलाकर सनातन धर्म का अच्छा प्रचार किया है ॥१२४॥ पंजाब प्रांत में जिनके द्वारा समय समय पर सनातन धर्म की रक्षा होती रहती है वे रायबहादुर श्री० रामशरणदासजी रईस आजकल लाहौर में विहार कर रहे हैं ॥ १२५ ॥

अत्यावश्यकगृहगतकर्माण्यपहाय धर्मसञ्चारम् ।
कुरुते यो भूमितले स विक्रमादित्यसिंह एवास्ति ॥१२६॥
भगवदनुग्रहभाजनमधिगतधर्मार्थकाममोक्षसुखः ।
रघुवरदयालुशास्त्री पञ्चनदीयेषु विद्यते धन्यः ॥१२७॥
एते मया समुक्ताः स्वधर्मरक्ताः प्रसिद्धभूपालाः ।
साम्प्रतमम्ब ! पुरस्ताद् ब्रवीमि नामानि वैश्यवर्याणाम् १२८

घर के अत्यावश्यक कार्यों को छोड़कर भी जो तन, मन, धन से सनातनधर्म की सेवा कर रहे हैं वे श्री० विक्रमादित्यसिंह जी रायबहादुर आजकल कानपुर में निवास करते हैं। आपने अपने परिश्रम से सनातन धर्म कालेज, सनातन धर्म-भवन, आदि अनेक संस्थायें स्थापित की हैं ॥१२६॥ ईश्वर की असीम कृपा के अनन्य भाजन, भगवद्भक्त श्री० पं० रघुवरदयालुजी शास्त्री प्रिन्सिपल सनातन धर्म कालेज, लाहौर में आजकल निवास करते हैं ॥ १२७ ॥ हे मातः ! यहां तक मैंने उन भूपालों का वर्णन किया है जिन्होंने धर्म रक्षार्थ अपना जीवन अर्पण किया है अब मैं आपके समक्ष वैश्य जाति के नवरत्न-उपस्थित करता हूँ ॥१२८॥

-0. Jangamwadi Math Varanasi Collection. Digitized by eGangotri

अतिमानितबुधवृन्दः प्रशस्तभूपाललब्धबहुमानः ।
श्रेष्ठी केशवदेवश्चकास्ति वैश्येषु सवभावेन ॥१२६॥
विद्वान्विवेकशीलः स्वधर्मनिष्ठः प्रशस्यबहुदानः ।
गौरीशङ्करगुप्तः सर्वत्राऽतिप्रसिद्ध एवास्ते ॥१३०॥

संसार में लब्धप्रतिष्ठ, राजमान्य, दानवीर सेठ केशवदेवजी पोद्दार रामगढ़ निवासी आजकल हरद्वार में विद्यमान हैं। आपके पुत्र सेठ श्रीनिवासजी तथा सेठ बालकृष्णलालजी अत्यन्त योग्य और विद्यानुरागी हैं॥१२६॥ विद्वान्, विवेकशील, स्वधर्मनिष्ठ श्रीमान् गौरीशंकर जी गोयनका आजकल काशी में निवास कर रहे हैं। आपके पितृव्य साधुराम-तुलारामजी तथा आपके भाई कन्हैयालालजी अत्यन्त योग्य और भगवद्भक्त हैं॥ १३० ॥

नानागुणगरिमाभिर्व्याप्तदिगन्तः स्वधर्मबहुनिष्ठः ।
श्रीपुरुषोत्तमदासः सज्जनवर्योऽस्ति भारते वर्षे ॥१३१॥
पूर्वोपार्जितपुण्यप्रभावसम्भूतदिव्यधनमानः ।
श्रीरामेश्वरगुप्तः कलिकातायां प्रसिद्ध एवास्ते ॥१३२॥

अपनी सत्कीर्ति से व्याप्त दिगन्त, धीर, वीर, उदार, विद्वान् नगीनदास पुरुषोत्तमदास, ( संघवी ) आजकल अहमदाबाद में धर्म प्रचार कर रहे हैं॥ १३१ ॥ पूर्वोपार्जित पुण्य से लब्धविभूति, धर्मानुरागी रायबहादुर बलदेवदास रामेश्वरनाथ जी ( दूधवे वाले ) आजकल कलकत्ते को अलंकृत कर रहे हैं॥ १३२ ॥

भगवदनुग्रहमात्रप्राप्तमहैश्वर्यलब्धबहुकीर्तिः ।
श्रीहरिरामः श्रेष्ठी जगत्प्रसिद्धोऽस्ति दानवीरेषु ॥१३३॥
यत्सम्प्रदत्तभूतिव्ययेन काश्याञ्चकास्ति सत्कीर्तिः ।
विद्यालयः प्रकामं स रामचन्द्रो विशाङ्गणो धन्यः ॥१३४॥

ईश्वर की कृपा से प्राप्तैश्वर्य, स्वधर्म निरत सर रामचन्द्र हरीराम ( गोयनका ) के० टी० सी० आई० कलकत्ते में विराजमान धर्मप्रेमी सज्जन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हैं ॥ १३३ ॥ जिनके दान से काशी में टीकमणि संस्कृत विद्यालय चल रहा है वे विद्यानुरागी सेठ गोपीराम रामचंद्र (टीकमाणी) कलकत्ते में विद्यमान हैं ॥ १३४ ॥

कल्याणकारि भक्तिप्रसारि कल्याणनामकं पत्रम् ।
हनुमत्प्रसादगुप्तस्तनोति सम्पाद्य भारते कीर्तिम् ॥१३५॥
साहित्यसेविविद्वत्कदम्बसङ्गीतसद्गुणग्रामः ।
कं नोऽमलं विधत्ते कन्नोमलकाव्यवारिधिः पुरुषम् ॥ १३६॥

संसार के कल्याण के लिए "कल्याण" नामक पत्र निकाल कर जिन्होंने अपनी निष्काम धर्मसेवा का परिचय दिया है वे हनुमानप्रसाद पोद्दार आजकल मुम्बई में सत्संग भवन का आनन्द ले रहे हैं ॥ १३५ ॥ साहित्यसेवी सज्जनों में परममान्य विद्यानुरागी श्रीमान् कन्नोमल जी जज धौलपुर आजकल धौलपुर में अपनी न्यायपरायणता का प्रचुर परिचय दे रहे हैं ॥ १३६ ॥

सन्तोषलब्धसम्पद्व्ययेन वेगादुपार्जयन्धर्मम् ।
भुवि रामरक्षपालः समस्तजातीयसज्जनैर्वन्द्यः ॥१३७॥
धर्मोपार्जनकर्मणि यन्नामालङ्करोति बहुकीर्तिम् ।
श्रीरामदेवगुप्तः कलिकातायां स वर्तते मान्यः ॥१३८॥

भगवद्दत्त पदार्थ में संतोष के साथ समय व्यतीत करने वाले धर्मतत्पर, धर्मधन सेठ रामरक्षपालजी (झूँझनूँ वाले) आजकल कलकत्ते में धर्म की धूम मचा रहे हैं ॥ १३७ ॥ धर्मोपार्जन में जिनका समय अधिक व्यतीत हुआ है वे धनी, मानी, उदार रामदेवजी चौखानी आजकल सनातनधर्म की अच्छी सेवा कर रहे हैं ॥ १३८ ॥

भगवत्कथानुरागं भूयोभूयः प्रतन्वता लोके ।
येनार्जितं महत्त्वं भगवद्भक्तोऽस्ति जयदयालुः सः ॥१३९॥
संवर्धयन्नमन्दं धर्मधनं यः प्रवर्धते लोके ।
श्रीवृद्धिचन्द्रगुप्तः स केन नैवाभिवीक्षितो धन्यः ॥१४०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संसार में गीतामृत प्रवाह बहाने के लिए जिन्होंने अपने परिश्रम से "गोविन्दभवन" बनवाकर जनता का असीम उपकार किया है वे सेठ जयदयाल (गोयनका) आजकल गोरखपुर में विद्यमान हैं ॥१३९॥ धर्म्म रूपी धन को अनेक प्रकार के पुण्यों से बढ़ाने वाले, भगवद्भक्त, वेदांतनिष्ठ श्रीयुत वृद्धिचन्द्र (वर्धा) वाले आजकल मुम्बई में आनन्द-समुद्र की लहरें देख रहे हैं ॥ १४० ॥

मधुरारुणलघुमूर्तिः सज्जनवाञ्छानुकूलकृतपूर्तिः ।
स चिरञ्जीलालधनी मत्प्रान्तेऽद्यापि विद्यते मान्यः ॥१४१॥
भारतमित्रनियन्त्रणकर्मव्यग्रः प्रसादगुणमूर्तिः ।
यमुनाप्रसादनामा वैश्यसभायां चकास्ति सर्वत्र ॥१४२॥
गुणगौरि ! सर्व एते मया समुक्तास्तवाज्ञया मनुजाः ।
ये धर्मयुद्धभूमौ महारथत्वं विधेर्वशादगमन् ॥१४३॥

धर्म्मकार्य के लिए सर्वदा उद्यत, सनातनधर्म्म के कट्टर पक्षपाती रायबहादुर श्रीमान् चिरंजीलाल जी (बागला) आज कल हाथरस में सनातनधर्म्म हाईस्कूल की दिन प्रति दिन उन्नति कर रहे हैं ॥ १४१ ॥ सनातनधर्म के प्रचण्ड प्रचारक "भारतमित्र" पत्र के जनरल मैनेजर श्री० यमुनाप्रसादजी अग्रवाल आजकल कलकत्ते में नास्तिकों का दर्पदलन कर रहे हैं ॥ १४२ ॥ हे गुणगौरि ! मैंने आपकी आज्ञा पाकर इन सब महानुभावों का प्रत्यक्षदृष्ट गुणगण वर्णन किया है, ये सभी महारथी धर्म की सहायता के लिए सर्वदा अग्रसर रहे हैं ॥ १४३ ॥

एवं निवेदयति धार्मिक नामपङ्क्तिं
पादानते कविवरे करुणायताक्षी ।
वागीश्वरी निजपदार्पितमानसस्य
तुष्टाव सत्कृतिमुदारपदैर्वचोभिः ॥१४४॥

इस प्रकार धार्मिक सज्जनों का गुणानुरूप वर्णन करते हुए, अपने सेवक की कृति को देखकर, भगवती सरस्वती देवी अत्यन्त प्रसन्न हुईं और कहने लगीं ॥ १४४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावन्ममास्ति भुवने गुणिनाङ्गणेषु
नानारसैरुपचितो नियतो निवासः ।
तावत्समस्तविषयेषु निरस्तदोषा
कीर्तिश्चकास्तु निगमोदितधर्मभाजाम् ॥१४५॥

जब तक मेरा गुणिगणों में निवास है, तब तक संसार में इन धर्मप्राण सज्जनों की यह निष्कलङ्क कीर्ति सर्वत्र देदीप्यमान बनी रहेगी ॥१४५॥

एतत्प्रसन्नमनसा वचसामधीशा
कालोचितं प्रतिनिवेद्य कवेः पुरस्तात् ।
यावत्प्रशस्तिमजहान्न गुणातिरेका-
त्तावत्समाप्तिमगमत्किल सर्ग एषः ॥१४६॥

इतना प्रसन्नमन से कहकर, भगवती ने जबतक समयोचित अनेक बातों को कहते हुए अपना वक्तव्य समाप्त नहीं किया तबतक यह सर्ग समाप्त हुआ ॥ १४६ ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये,
धर्मसहायकवर्णनं नाम चतुर्विंशः सर्गः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# पञ्चविंशतितमः सर्गः

अथ परितुष्टस्वान्ता भूयो वचसामधीश्वरी देवी ।
निजवंशरत्नवृत्तं वदेत्यवोचन्महाकविं हर्षात् ॥ १ ॥
मातुरनुज्ञां शिरसा वहन्नमन्दं निजार्थसञ्जुष्टाम् ।
अवदानपद्यबन्धं कविः स्वकीयं निवेदयामास ॥ २ ॥
भगवति ! हृदयनिवासे ! यदा समस्तं महालयावस्थाम् ।
प्राप्नोति सृष्टिजातं तदा न किञ्चिद्धितिष्ठते तत्त्वम् ॥ ३ ॥
सकलं तादृगवस्थं जगतामीशो विलोक्य जगद्खण्डम् ।
साङ्कल्पिकनवसर्जनदत्तस्वान्तो मुहूर्तमन्वास्ते ॥ ४ ॥

इसके अनंतर प्रसन्नमानस भगवती ने वंशवृत्तांत वर्णन करने के लिए कवि से अनुरोध किया ॥ १ ॥ भगवती की आज्ञा शिरोधार्य समझकर अपना कर्तव्य पालन करते हुए कवि ने अपने वंश का परिचय इस प्रकार सरस्वतीजी के समक्ष उपस्थित किया ॥ २ ॥ हे हृदयनिवासे भगवति ! प्रत्यक्ष में विद्यमान यह सृष्टिजाल जब महाप्रलय की अवस्था में पहुँच जाता है उस समय में यहां पर पृथिव्यादि पंच तत्वों में एक भी नहीं रहता है ॥३॥ अखंड जगदंड की जब प्रलयावस्था समाप्त होती है उस समय भगवान् नवीन सांकल्पिक सृष्टि का अनुक्रम करने के लिए विचार करते हैं ॥ ४ ॥

सदसद्विलक्षणाङ्कां मायामन्वास्य तद्वशीभूतः ।
तनुते पूर्वावस्थं हृदयनिविष्टं जगद्यथापूर्वम् ॥ ५ ॥
उदरदरीमधिशेते यस्माद्विश्वं जगत्पतेरस्य ।
जगतां निधिरिति तस्मादयं मुनीन्द्रैः प्रगीयते सर्वैः ॥६॥
कथमेष निर्मिमीते जगदिति वक्तुं जनेषु कः शक्तः ।
अर्वाग्देवा यस्मात्तस्मिन्वाचंयमत्वमेवास्तु ॥ ७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यल्लीलाकैवल्यं लोकाः सर्वे निविष्टबहुसत्त्वाः ।
भौतिकसर्गं तनुते स एव पूर्वं निजेच्छया सकलम् ॥ ८ ॥

तदनंतर सदसद्विलक्षण स्वरूप प्रकृति को कार्य में परिणत करने के लिए भगवान् पूर्वावस्थानुसार फिर जगत् का निर्माण करते हैं ॥ ५ ॥ महाप्रलय में यह समस्त जगत् भगवान् की उदरदरी में रहता है, इसीलिए मुनिजन इनको जगन्निवास अथवा जगन्निधि कहते हैं ॥६॥ भगवान् सृष्टि को किस प्रकार बनाते हैं यह बतलाना शक्ति से बाहर है, क्योंकि देवगण ब्रह्मादिक भी उस समय के बहुत पीछे प्रकट होते हैं, इसलिए इस विषय में चुप रहना ही अच्छा है ॥ ७ ॥ समस्त संसार जिसका केवल लीलामात्र है वही भगवान् सृष्टि में सब से प्रथम भौतिक सर्ग का आरंभ करते हैं ॥ ८ ॥

प्रागाकाशः प्रभवति तस्माद्वायुस्तदुत्तरं वह्निः ।
परतस्तस्मात्सलिलं तस्मादग्रे वसुन्धरा पृथिवी ॥ ९ ॥
एवं भौतिकसर्गं समाप्य देवो दयानिधिः सर्वम् ।
दिव्यामप्यनुतनुते विविधां सृष्टिं हृदन्तरव्याप्ताम् ॥१०॥
जगदम्बिकास्वरूपां शक्तिं दैवात्समेत्य स महेशः ।
देवेषु मुख्यमादौ चक्रे धातारमद्भुताकारम् ॥११॥

उसमें सब से प्रथम आकाश प्रकट होता है, आकाश से वायु, वायु से अग्नि, अग्नि से जल और जल से पृथिवी क्रमशः प्रकट होती है। यह बात [ तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ] इस श्रुति के आधार पर यहां लिखी गई है ॥ ९ ॥ इस प्रकार भगवान् पंच महाभूतों का सर्जन करके तदनंतर हृदयस्थित दैवी सृष्टि का आरंभ करते हैं ॥ १० ॥ उस में सब से प्रथम जगदंबा स्वरूप शक्ति का सहयोग लेकर भगवान् ने सब में मुख्य ब्रह्मदेव को प्रकट किया यह बात [ ब्रह्मा देवानां प्रथमः सम्बभूव ॥ १ ॥ यो ब्रह्माणं विदधाति पूर्वम् ॥ २ ॥ भूतानां ब्रह्मा प्रथमो ह जज्ञे ॥ ३ ॥ ] इत्यादि श्रुतियों से ली गई है ॥ ११ ॥

तपसि स्वतः प्रवृत्तं धातारं वीक्ष्य सत्त्वसम्पन्नम् ।
लोके सनाढ्यवंशस्थापयिता त्वं भविष्यसीत्याह ॥१२॥

Jangamwadi Math Varanasi Collection. Digitized by eGangotri

जगदीशवाक्प्रपञ्चो मृषा न भूयाददः स्वयं स्वान्ते ।
ब्रह्मा विविच्य चक्रे सनाढ्यवंशं तपःप्रभावेण ॥१३॥
सनकसनन्दनमुख्या यस्मिन्नभवन्नशेषमुनिमुख्याः ।
सोऽयं सनाढ्यवंशश्चकास्ति लोके निरस्तपरवंशः ॥१४॥

सत्त्वगुणसंपन्न ब्रह्माजी ने प्रकट होते ही तप करना आरंभ किया। यह देखकर भगवान् ने "यही ब्रह्माजी संसार में तपोविद्याविशिष्ट सनाढ्यों का वंश प्रकट करेंगे" ऐसा कहा। "सन" शब्द तप का वाची अनेक कोषों में उपलब्ध होता है। यही बात [तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात् स्वतपसः स चतुःसनोऽभूत्] श्रीमद्भागवत, स्कंध २, अ० ५, पद्य ७ में कही है ॥ १२ ॥ भगवान् का कथन निरर्थक न हो यह समझ कर ब्रह्मा जी ने "सनाढ्य" वंश का सूत्रपात आरंभ किया ॥१३॥ सनक-सनन्दन-सनातन-सनत्कुमार ये चारों आदि ऋषि जिस सनाढ्य वंश के प्रथमावतार थे वही सनाढ्य वंश आज तक संसार में प्रचलित है ॥१४॥

अयमेव भूसुराणामाद्यो वंशस्तपोविशिष्टत्वात् ।
साम्राज्यमीशदत्तं पुरा समागाद्विधातृसंसृष्टः ॥१५॥
देशेष्वनेकभेदैर्विभक्तिमाप्तेषु भारतीयेषु ।
संवसनादुपयाताः सनाढ्यवर्या बहूनि नामानि ॥१६॥
नानाविधगोत्रवशाच्छाखाभेदादनन्ततामाप्ताः ।
सर्वे सनाढ्यवंश्या भारतवर्षे वसन्ति सर्वत्र ॥१७॥

तपोविद्याविशिष्ट होने के कारण यही "सनाढ्य" वंश ब्राह्मणों का प्रथम वंश होकर ईश्वर की सृष्टि में सब पर आधिपत्य करने का अधिकार रखता है ॥१५॥ महाप्रलय के अनंतर जैसे जैसे देशों का आविर्भाव होने लगा तैसे तैसे अनेक देशों में रहने के कारण ये ही सनाढ्य अनेक दैशिक नामों का धारण करने लगे ॥ १६ ॥ गोत्रभेद तथा शाखाभेद से अनेकता को प्राप्त हुए वे ही सनाढ्य आजकल समस्त देशों में अनेक नामों से विख्यात हो रहे हैं ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मर्षिदेश एषामाद्यो देशः सनाढ्यविप्राणाम् ।
सर्वत्र विश्रुतो यः स्वनामधन्यैर्महर्षिभिः पूतः ॥१८॥
अद्याप्यस्मिन्देशे कलिकालवशादपास्तसद्वेशे ।
केवलसनाढ्यभूसुरवंशोत्पन्ना वसन्ति भूदेवाः ॥१९॥
तत्तद्देशनिवासाद्दैशिकनाम्नां य एषु संवेशः ।
गौणः स नास्ति मुख्यः प्रमाणमस्मिन्नुपस्थितो वेदः ॥२०॥

सनाढ्यों का पहला निवासस्थान "ब्रह्मर्षि" देश है जिसका वर्णन [ कुरुक्षेत्रं च मत्स्याश्च ] इस मनु के पद्य में किया गया है। प्रायः महर्षि प्राचीन समय में यहीं पर रहा करते थे। कुरुक्षेत्र से ब्रह्मावर्त (विठूर) तक लंबा और व्रज से हरद्वार तक चौड़ा ब्रह्मर्षि देश है ॥१८॥ आज भी इस ब्रह्मर्षि देश में प्रायः सनाढ्य ही अधिकतर निवास करते हैं जो अन्य दैशिक नामों में विभक्त होने पर भी घटते घटते पैंसठ लाख [६५:००००] रह गए हैं ॥१९॥ तत्तद्देशों में रहने के कारण ब्राह्मणों में जो आजकल कान्यकुब्ज आदि दैशिक नामों का प्रयोग मिलता है वह गौण है, मुख्य नहीं है, क्योंकि वैदिक साहित्य में इनका नाम उपलब्ध नहीं होता है ॥२०॥

वेदेषु नास्ति दैशिकनाम्नां यस्मात्प्रवेशनं तस्मात् ।
सर्वे सनाढ्यवंश्या भारतवर्षे वसन्ति भूदेवाः ॥२१॥
पर्यायवाचकत्वं सनाढ्यशब्दस्य तादृगर्थत्वात् ।
ब्राह्मणशब्देन समं प्रगीयते किन्न वेदमर्मज्ञैः ॥२२॥

वेदों में कहीं पर भी कान्यकुब्ज आदि शब्दों का प्रयोग नहीं मिलता है, और "सन" शब्द का प्रयोग वेदमात्र में सर्वत्र मिलता है, इस कारण ब्राह्मणमात्र "सनाढ्य" हैं, यह बात निर्विवाद है ॥ २१ ॥ ब्राह्मण और सनाढ्य, ये दोनों शब्द आपस में पर्यायवाचक हैं। [ वेदस्तत्त्वं तपो ब्रह्मेत्यमरः ॥ १ ॥ सनस्तपसि वेदे चेति कात्यायनः ] वेद में ब्राह्मण शब्द अनेक बार आता है। ब्राह्मण स्वभावतः तपोविद्या विशिष्ट होता है। रहा यौन संबन्ध ? वह ब्रह्मा जी से ब्राह्मणों का है ही, इस लिए ब्राह्मण मात्र तपोविद्याविशिष्ट होने के कारण सनाढ्य हैं ॥ २२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मण एते यस्मादपत्यभूतास्ततः प्रगीयन्ते ।
ब्राह्मणपदेन सर्वे सनाढ्यवर्यास्तप प्रभावेण ॥२३॥
यस्मादेते मुखतः पुरा ह्यसृज्यन्त ब्रह्मणा तस्मात् ।
मुख्या इत्यपि वेदे नामान्तरमस्ति धातृवंश्यानाम् ॥२४॥
मद्रोत्कलादिनाम्नां देशपरत्वेन तद्भवाः सर्वे ।
शक्यन्ते भुवि वक्तुं तत्तन्नाम्नैव नात्र सन्देहः ॥२५॥

"ब्रह्मणोऽपत्यं ब्राह्मणः" ब्राह्मण शब्द में जो "अण्" प्रत्यय है वह "अपत्यार्थ" में है, अन्य किसी अर्थ में नहीं, इस कारण देशिक नामों के साथ ब्राह्मण शब्द का कोई संबन्ध नहीं है । ब्राह्मण शब्द अन्यार्थ में प्रवृत्त है और देशिक नाम अन्यार्थ का बोधन करा रहे हैं ॥ २३ ॥ मुख से उत्पन्न होने के कारण शतपथ की श्रुति इन ब्राह्मणों को "मुख्य" शब्द से भी संबोधित करती है [ यस्मादेते मुख्यास्तस्मान्मुखतो ह्यसृज्यन्त] इति श्रुतिः । [ शरीरावयवाद्यत् ५।१।६ ] मुखे भवो मुख्यः ॥ २४ ॥ मद्र, उत्कल, आदि नामों के देशपरत्व होने से उन देशों में मनुष्य, पशु, पक्षी वृक्ष आदि जो भी कुछ उत्पन्न होगा वह सब इसी देश के नाम से व्यवहार में कहा जायगा ॥ २५ ॥

मद्रेषु सम्प्रसूताः सर्वे माद्रा यथा प्रगीयन्ते ।
तत्तद्देशप्रभवाः सर्वेऽप्येवं मनुष्यजातीयाः ॥२६॥
किमपि प्रधानभूतं सत्त्वं निर्दिश्य नामसंस्करणम् ।
प्रत्यक्षमेव लोके विलोक्यते यन्निदर्शनं बहुलम् ॥२७॥

जिस प्रकार मद्र देश में उत्पन्न होने के कारण सब माद्र, माद्री, कहे जाते हैं उसी प्रकार कान्यकुब्ज आदि देशों में उत्पन्न होने के कारण पदार्थमात्र कान्यकुब्ज कहा जा सकता है । कान्य-कुब्ज देश शोणभद्र नद के तट पर कुशनाभ नामक क्षत्रियराजा ने जो कि "महोदय पुर" का राजा था बसाया । इसका वर्णन वाल्मीकि रामायण के के बालकांड में विद्यमान है ॥२६॥ संसार में प्रधान तथा प्रसिद्ध सत्त्व के नाम पर देश का नाम कल्पित किया जाता है । जैसे सरस्वती नदी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथवा देवी जिस देश में अवतीर्ण हुई उस देश का नाम सरस्वती हुआ। [अदूरभवश्च ४।२।७०] 'सरस्वत्या अदूरभवो देशः सरस्वती, 'सरस्वति, देशविशेषे भवाः, सारस्वताः, एवमन्येऽपि ॥२७।

भरताभिधस्य राज्ञो नाम्ना लोके प्रसिद्धमस्त्येतत् ।
भारतमत्र प्रथमं निदर्शनं यत्र साम्प्रतं वासः ॥२८॥
ये वर्तमानसमये नानादेशा भुवि प्रतीयन्ते ।
भूपैस्ते निजनामभिरस्मिन्सर्गे निवेशिताः पश्चात् ॥२९॥

इसका प्रत्यक्ष उदाहरण 'भरत' देश है। भरत तीन हुए हैं। एक रामचन्द्रजी के भाई, दूसरे भरत मुनि जिन्होंने "नाट्य शास्त्र" लिखा है, तीसरे शकुन्तला के पुत्र, इन में प्रथम भरत के नाम से यह 'भारत" माना जाता है। भारत के सभी पदार्थ " भारतीय " कहे जाते हैं ॥२८॥ वर्तमान समय में अनेक नामों में विभक्त जो जो देश उपलब्ध होते हैं उनको राजाओं ने अपने अपने नाम से बसाया है। इन में बहुत से देश बहुत ही अर्वाचीन हैं, बहुत से जनक राजा के समय के हैं, और बहुत से नामांतर में परिणत होकर कुछ के कुछ बन गए हैं ॥२९॥

सर्जनकाले नैषां नामाप्यासीदतः प्रतीयन्ते ।
सर्वेऽपीमे भेदा भारतभूमेर्नवीनतामाप्ताः ॥३०॥
देशानामानन्त्याद्वदन्ति ये भेदवादिनो मनुजाः ।
दशविधभूसुरभेदं भूगोलज्ञा न ते मते विदुषाम् ॥३१॥

ब्रह्माजी ने मानव सृष्टि के आरम्भ काल में जब ब्राह्मणों को उत्पन्न किया था उस समय में इन देशों के नाम भी नहीं थे। सब ब्राह्मण एक थे। तप, विद्या और योनि, ये ही तीन कारण ब्राह्मणत्व के परिचायक थे। दैशिक उपाधियों का गन्ध भी यहाँ पर नहीं था। इसलिए ये सब नाम कल्पित हैं ॥३०॥ भूगोल में देश अनंत हैं, [ वाराही संहिता, अनंग-रंग, शक्ति-संगम तंत्र ] आदि ग्रन्थों में आज भी पाँच सौ से अधिक देशों के नाम उपलब्ध होते हैं। इस लिए देशों के नाम पर जो दशविध ब्राह्मणों के भेद मानते हैं वे अल्पज्ञ हैं [ सारस्वताः कान्यकुब्जाः ] यह

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कल्पित पद्य है। किसी आर्ष ग्रंथ में इसका पता नहीं है। इस लिए केवल देशों के नाम पर ही यदि ब्राह्मणों की संख्या निर्भर मानी जावे तो ब्राह्मण अनंत-भेद हैं ॥३१॥

माध्यन्दिनीयशाखा येषां लोके सनाढ्यविप्राणाम्।
त्रिप्रवरास्ते सर्वे शुक्लयजुर्वेदपाठिनो बहवः ॥३२॥
अस्मिन्नेवाविरभूद्वंशे गोत्रप्रवर्तकेष्वाद्यः।
विश्रुतभारद्वाजो महर्षिरेकः प्रयागकृतवासः ॥३३॥

आंगिरस, बार्हस्पत्य, भारद्वाज, ये तीन प्रवर तथा माध्यंदिनी शाखा वाले प्रायः सभी सनाढ्य हैं। भरद्वाज-वसिष्ठ आदि प्रवर्तक ऋषि सभी सनाढ्य थे। जिनकी अविकल संख्या अठासी हजार थी। मनुष्यों ने अज्ञान वश अपना पूर्व रूप छोड़ दिया है। सब परसवर्ण बने हुए हैं। प्रकृति भाव का इसमें गंध तक नहीं है। इसी लिए आपस में संधि नहीं होती है ॥३२॥ गोत्रप्रवर्तक ऋषियों में प्रधान, ब्रह्माजी की चौथी पीढ़ी में महर्षि भरद्वाज हुए जो कि सनाढ्य वंश के प्रायः गोत्र-प्रवर्तक माने जाते हैं। इन्होंने त्रिवेणी के तट को तप के लिए सर्वोत्तम समझकर प्रयाग में ही अपना प्रधानस्थान बनाया ॥३३॥

शिरसा यत्पदपद्मं दध्रे भगवान्स रामभद्रोऽपि।
भगवति! सोऽपि सनाढ्यो वसिष्ठदेवः समस्तजनवन्द्यः ३४
तपसा येनाङ्गिरसा वैदिकविज्ञानमुत्तमं प्राप्तम्।
वेदज्ञेष्वतिमान्यः स पूर्वजोऽस्मत्कुटुम्बिनामासीत् ॥३५॥
आरण्यकप्रधानं गीतं साम्नां यदन्तिकेऽधीतम्।
गन्धर्वैरपि वीणा रसिकः सोऽभूत्सनाढ्यवंशीयः ॥३६॥

प्रातः स्मरणीय, सुगृहीत-नामधेय, भगवान् श्री रामचन्द्रजी ने जिनके चरण कमल को बार बार शिर नवाया, वे तपोधन वसिष्ठ सनाढ्यों के ही पूर्वज थे ॥३४॥ जिन्होंने अपने तप के प्रभाव से अथर्व वेद प्रकट किया था वे महर्षि अँगिरा सनाढ्य ही थे। ये ब्रह्मा की तीसरी पीढ़ी में हुए हैं। यह बात [मुण्डकोपनिषद्] की पहली दो श्रुतियों से उपलब्ध होती है ॥३५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आरण्यक प्रधान सामवेद का गान जिनकी कृपा से गंधर्वों ने प्राप्त किया था वे देवर्षि नारद सनाढ्यों के ही पूर्वज थे। यह बात [ सनक संहिता ] से उपलब्ध होती है ॥ ३६ ॥

गोत्रप्रवरविधातॄन् ब्रह्मा यानत्र मानसान्पुत्रान् ।
असृजत्सर्गारम्भे सर्वे तेऽस्मत्कुलप्रणेतारः ॥३७॥
इत्थं भारतभूमौ विस्तृतिमाप्तः सनाढ्यवंशोऽयम् ।
कलियुगमेत्य लघुत्वं समापदीशप्रवर्तनादमरः ॥३८॥

सृष्टि के आरंभकाल में ब्रह्मा जी ने गोत्रप्रवर्तक जिन ऋषियों को उत्पन्न किया था वे सब ही सनाढ्य वंश के प्रवर्तक हुए। आजकल जो गोत्र-प्रवर-शाखा-विधायक विचार प्रचलित हैं वे कल्पित होने के कारण मान्य नहीं हैं। शतपथ ब्राह्मण तथा सनन्दन संहिता में असली गोत्र निर्णय विधायक मंत्र हैं। उन पर ही विश्वास करना चाहिए। इस विषय का विस्तृत वर्णन हमने [ सनाढ्यगौरवादर्श ] में किया है ॥ ३७ ॥ यह सनाढ्य वंश भारत भूमि में इस प्रकार विस्तार को प्राप्त हुआ है। ब्रह्मा से प्रचलित होने के कारण यह अजर और अमर है। मरीचि, अत्रि, अंगिरा, क्रतु, प्रचेता, वसिष्ठ, भृगु, नारद, ये आठ ऋषि हमारे पूर्वज हैं। इसीलिए हम स्वतंत्र और प्रधान हैं। किसी के अन्दर हमारा समावेश नहीं है ॥ ३८ ॥

अमरे निजान्ववाये वक्रिमगत्या कलेरुपायाताम् ।
अवनतिमपनेतुमना विख्यातो विजयदेवोऽभूत् ॥३९॥
सुगृहीतनामधेयः सोऽयं सुकृती परम्परायातम् ।
अधिगत्य वेदतत्त्वं धर्मोद्धारे निमग्नचित्तोऽभूत् ॥४०॥
मातस्तत्रभवत्याः कृपया लोकेष्वनुत्तमां कीर्तिम् ।
सम्प्राप्य दारकृत्ये स दत्तचित्तो बभूव सद्वृत्तः ॥४१॥
यौवनसुखमनुभवता वृद्धप्रपितामहेन तेनान्ते ।
वंशोदयाय भाग्यादलभि सूनुः समानरूपगुणः ॥४२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अजर अमर इस सनाढ्य वंश में कलि की वक्रिम गति से आई हुई शिथिलता को दूर करने के लिए हमारे वृद्ध प्रपितामह श्री० पं० विजयदेव जी हुए ॥ ३९ ॥ आपने वंशपरंपरागत वैदिक साहित्य का अवलोकन करके ब्राह्मणत्व की रक्षा करने के लिए अनेक प्रकार का तप किया और अपने धर्म का पालन किया ॥४ ॥ हे मातः ! आपके आशीर्वाद से संसार में उत्तम कीर्त्ति का लाभ करते हुए उन्होंने पितृऋण से उऋण होने के लिए गृहस्थाश्रम में यथासमय प्रवेश किया ॥४१॥ यौवनावस्था में समयोचित सुखों का उपभोग करते हुए उन्होंने हमारे प्रपितामह श्री० पं० जवाहरलालजी को प्राप्त किया ॥४२॥

येन जवादाहरता पूर्वजकीर्तिं परैरभिख्याताम् ।
अन्वर्थमत्र लोके जवाहरेति स्वनाम समकारि ॥४३॥
वंशपरम्परयाऽस्मिन्वंशे तेनापि वंशरत्नेन ।
अधिगत्य जन्म विद्या साफल्यमनायि शङ्करस्तवनैः ॥४४॥
अप्रतिमकीर्तिशाली कविरयमीशानसत्कृपावशतः ।
कालक्रमेण पुत्रं भगीरथाभिख्यमापदप्रतिमम् ॥४५॥
गङ्गामिव भूमितले सितां स्वकीर्तेः परम्परामेषः ।
विस्तार्य सद्गुणौघैराच्छादितवान्पुरातनख्यातिम् ॥४६॥

आपने भी पंडित समाज में कीर्ति को वेग से प्राप्त करके अपना नाम गुणानुरूप बनाया [जवेन-वेगेन-आसमन्तात्-कीर्तिं हरति-आहरति वा यः स जवाहर इत्यन्वर्थमभिधानम् ] ॥४३॥ अन्वर्थनामक श्री० पं० जवाहर लालजी ने अपनी विद्या को सफल करने के लिए श्री शंकर भगवान् के चरित्र से संबंध रखनेवाले अनेक ग्रन्थ बनाये जिनमें [ मार्कण्डेयचरित ] सब से अच्छा था ॥४४॥ शंकर भगवान् के अनन्य भक्त श्री० पं० जवाहर लालजी ने कालक्रम से हमारे पितामह श्री० पं० भगीरथजी को जन्म दिया ॥४५॥ प्रातःस्मरणीय रिंगत्तरंगिणी भगवती भागीरथी के समान निर्मल अपनी कीर्ति को सर्वत्र फैलाकर आपने अपने पूर्वजों से भी अधिक मान प्राप्त किया ॥४६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्याभवन्नमन्दप्रतिभासम्पन्ननिर्मलस्वान्ताः ।
चत्वारस्ते तनया नयावनद्धस्य लोकविख्याताः ॥४७॥
धर्मार्थकाममोक्षैश्चतुर्भिरप्यस्य लोकरत्नस्य ।
गेहे यथावकाशं पुत्रायितमेव शङ्करादेशात् ॥४८॥

आपने भगवान् शङ्कर की आराधना करके वर लाभ प्राप्त किया जिसके प्रतिफल में आप के यहाँ चार पुत्रों ने जन्म लिया ॥४७॥ धर्म, अर्थ, काम, मोक्ष इन चतुर्वर्गों का प्रत्यक्ष फल देने के लिए भगवान् श्री शङ्कर ने वरदान से विवश होकर आपके यहाँ चार पुत्रों के स्वरूप में अवतार लिया ॥ ४८॥

मोक्ष इव तेषु चरमः सकलमनुष्यैरपेक्षितागमनः ।
स बभूव कोऽपि सूनुर्यस्योद्भव एव शर्मणे जगताम् ॥४९॥
माहाभाग्याज्जगतां समुद्भवं प्राप्य यः सनाढ्यकुले ।
वर्णानवर्णमुख्यान्बाल्ये समये दधार शेमुष्याम् ॥५०॥
वर्णैरवर्णनीयं मुनीन्द्रवर्यं समेत्य यं दैवात् ।
लोकेष्ववर्णनीयं यशः स्वभावादलम्भि सद्वर्णैः ॥५१॥
धन्यास्ते भुवि वर्णा वर्णावल्यामवर्णनीयगुणाः ।
यैरस्य दिव्यधाम्नो निजेन योगेन नाम समुदीर्णम् ॥५२॥

मनुष्यमात्रवांछनीय मोक्ष की तरह उन चारों पुत्रों में सब से अन्तिम हमारे पितृचरण श्री० १०८ पं० टीकारामजी हुए जिनका जन्म केवल संसार के कल्याण करने के लिए ही भारत में हुआ ॥४९॥ जगत् के माहाभाग्य से सनाढ्य वंश में जन्म लेकर आपने बाल्यकाल में अवर्णमुख्य वर्णों का क्रमशः अभ्यास किया ।। [अवर्णा मुख्यो येषु ते अवर्णमुख्याः अकारप्रधाना इति भावः] ॥५०॥ वर्णों के द्वारा अवर्णनीयमहिम जिस मुनिवर्य को प्राप्त होकर वर्णों ने भी संसार में अवर्णनीय यश को प्राप्त किया ॥५१॥ उन वर्णों का बार बार धन्यवाद है, जिन्होंने अपने सहयोग से आपका नाम बनाकर संसार में अपना जन्म सफल किया ॥५२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तच्चन्द्रनगरमस्मिँल्लोके धन्यं किमत्र वक्तव्यम् ।
यस्मिन्नसौ गुणाढ्यः सनाढ्यवर्यो जनिं शिवामापत् ॥५३॥
समतीत्य बालभावं भूसुरवर्योचितेन विधिनाऽस्य ।
यज्ञोपवीतदीक्षा सम्पन्नाऽभूत्कुलक्रमानुगता ॥५४॥
आचार्यलब्धदीक्षो धृतोपवीतो गृहीतपालाशः ।
सुगृहीतनामधेयः समेखलोऽयं गुरोर्गृहं प्रापत् ॥५५॥

बदायूं के जिले में गुन्नौर तहसील के इलाके के अन्दर वह "चन्द्रनगर" अत्यन्त धन्यवाद के योग्य है जिसकी पवित्र भूमि में सनाढ्यों में अत्यंत गुणाढ्य आप जैसे महानुभावों ने जन्म लिया ॥५३॥ बाल्यकाल के बीतने पर गर्भाष्टमवत्सर में कुलरीति के अनुसार आपका उपनयन संस्कार हुआ [ गर्भाष्टमेऽब्देकुर्वीत ब्राह्मणस्योपनायनमिति मनुः ] ॥ ५४ ॥ वंशपरंपरागत आचार्य से ब्रह्मचर्य की दीक्षा लेकर आपने मौञ्जी, मेखला, मृगचर्म, पलाशदंड और कमंडलु आदि ब्रह्मचर्योचित सामग्री लेकर गुरु के गृह का मार्ग लिया ॥ ५५ ॥

संस्कारोत्तरकालं गुरोरनुज्ञां शिरस्यवस्थाप्य ।
यः पाणिनीयशास्त्रं समग्रमध्यैष्ट विस्तृतप्रज्ञः ॥५६॥
शेषादितं परस्ताद्युगलकिशोरप्रसादतः प्राप्य ।
वाराणसीमुपेतो यो वेदान्तावगाहनञ्चक्रे ॥५७॥
शान्तिपुरस्थितगुरुवरतारानाथादधीत्य तन्नव्यम् ।
गोतमकाणादमतं यः साहित्यावलोकनं वव्रे ॥५८॥
अङ्गोपाङ्गविलोकनमेवं विधिना समाप्तिमानीय ।
वेदावगाहनार्थे यो यास्कीयं निरुक्तमप्यपठत् ॥५९॥

"पुराकल्प एतदासीत्—संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयत" इस पातञ्जल महाभाष्य के आदेशानुसार आपने सब से प्रथम पाणिनीय व्याकरण पढ़ा ॥५६॥ इसके अनंतर आपने गुरुवर श्री० पं० युगलकिशोरजी से, जो कि "निम्बार्कसम्प्रदाय" के प्रधान आचार्य थे, मथुरा में जाकर महा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भाष्य का अध्ययन किया। यहां से काशी जाकर श्री० विश्वरूप स्वामी जी से वेदांत का अध्ययन किया ॥ ५७ ॥ यहां से चलकर आपने नवद्वीप के शांतिपुर में श्री० तारानाथ तर्कवाचस्पति से नव्य एवं प्राचीन दोनों प्रकार के न्यायशास्त्र का अध्ययन किया ॥ ५८ ॥

पिङ्गलछन्दःसूत्रं काव्यालङ्कारसूत्रमप्येषः।
सर्वानुक्रमसहितं वाराणस्यां विलोकयामास ॥६०॥
निष्कारणः स्वधर्मो भूसुरजानामितीव यो मत्वा।
वेदाध्ययनमनन्तप्रज्ञो लोके यथाक्रमं चक्रे ॥६१॥
इत्थमवाप्तरहस्यः शब्दस्तोमात्मकस्य वेदनिधेः।
स मुनीनामनुगमनं स्वान्तःकरणे निवेशयामास ॥६२॥

इस प्रकार सब से प्रथम वेदांगों का अध्ययन समाप्त करके वैदिक साहित्य में प्रवेश करने के लिए आपने यास्कीय निरुक्त का अध्ययन किया ॥ ५९ ॥ पिंगल-छन्दःसूत्र तथा काव्यालंकार-सूत्र आदि प्राचीन आर्ष ग्रंथों को सर्वानुक्रम के साथ आपने काशी में पढ़ा ॥ ६० ॥ इसके अनंतर [ ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च ] इस पतंजलि के आदेशानुसार आपने वेदों का स्वाध्याय आरंभ किया ॥६१॥ इस प्रकार शब्दस्तोमात्मक वैदिक तत्त्व का रहस्य प्राप्तकर आपने भारतवर्ष में मुनि-वृत्ति से जीवन व्यतीत करना स्वीकार किया ॥ ६२ ॥

मुन्यन्नमात्रभोजी मुनिवरवेशो मुनिप्रणीतज्ञः।
मुनिरिव भूसुरवंशे यो मुनिचरितं प्रवर्तयामास ॥६३॥
कौपीनमात्रवस्त्रो भिक्षालब्धान्नभोजनात्तुष्टः।
गङ्गातटे समस्तं समापयामास यो वयः स्वीयम् ॥६४॥
अपरिग्रहपरिपालनमात्मन्याधाय केवलं लोके।
यो भूसुरप्रदत्तं भोजनमङ्गीचकार नान्येषाम् ॥६५॥

मुन्यन्न का सेवन करते हुए, मुनिवेश से मुनिप्रणीत शास्त्रों का अध्ययन करते करते आपने मुनियों की तरह प्राचीन मुनिचरित्रों का

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भारत में आदर्श उपस्थित किया ॥६३॥ कौपीनमात्र वस्त्र और भिक्षोपलब्ध भोजन से संतुष्ट गंगातट पर प्रायः जीवन व्यतीत करनेवाले आपने अपनी वृत्ति को सत्त्वगुण प्रधान बनाया ॥६४॥ अपरिग्रह व्रत के पालन में दत्त-चित्त होकर आपने केवल ब्राह्मणों के द्वारा प्राप्त हुए अन्न से ही अपना निर्वाह किया। इतर जनों का धान्य तक आपने नहीं लिया ॥६५॥

गोसेवनमपि मुख्यं ब्राह्मणकर्मेति मानसे मत्वा।
यः सर्वदा समन्ते बद्धां गामेव पूजयामास ॥६६॥
नगरोदरगृहवासाद्रागाबद्धं मनः समालोक्य।
यो वृक्षमात्रगेहो वनोदरेष्वेव निर्वृतिं गतवान् ॥६७॥

ब्राह्मणों के लिए गौ का पालन करना अत्यावश्यक समझकर आपने सर्वदा अपने पास एक गौ रक्खी जिसका वे प्रातःकाल उठते ही पूजन करते थे ॥६६॥ नगरों में रहने से मनोवृत्ति का रोकना असंभव समझकर आपने वृक्षों के नीचे रहकर ही जीवन बिताना स्वीकार किया ॥६७॥

आगतजनैः प्रदत्तं यो धनमत्यन्तदीनभावेषु।
मनुजेषु योजयित्वा तत्सार्थक्यं प्रकल्पयामास ॥६८॥
अश्वस्तनिकचरित्रो गङ्गोत्तर्यां तथा कुरुक्षेत्रे।
सर्वस्वमर्पयित्वा यो मज्जनमेव तत्फलं मेने ॥६९॥

आगत सज्जनों के द्वारा प्राप्त हुई संपत्ति को दीन जनों में बांटकर आपने उसको सार्थक कर छोड़ दिया ॥६८॥ अश्वस्तनिक वृत्ति से निर्वाह करते हुए आपने गंगोत्तरी एवं कुरुक्षेत्र में जाकर जो कुछ कालप्राप्त था वह सब ब्राह्मणों को देकर अपनी उदारता का परिचय दिया ॥६९॥

विष्णोरंशभवत्वाद् ब्राह्मणमभ्यर्णमागतं दृष्ट्वा।
तत्पदपद्मसमुत्थं यो रज एव स्वचन्दनीचक्रे ॥७०॥
नयपालदेशभूपप्रदत्तमर्थं प्रयागमागत्य।
दत्वा वनीपकेभ्यो यस्तत्साफल्यमानयामास ॥७१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यमनियमप्रतिपालनदत्तमनस्कं यमादराद्द्रष्टुम् ।
श्रीशिवकुमारमुख्या विद्वद्वर्याः सहस्रशोऽगच्छन् ॥७२॥

ब्राह्मणों को साक्षात् विष्णुस्वरूप समझ कर उनकी चरणधूलि को मस्तक में लगाना आपका परम कर्तव्य था ॥७०॥ प्रयाग में महाराना पद्मजंगबहादुर नैपालनरेश द्वारा प्राप्त हुई अतुल संपत्ति को तुरन्त ब्राह्मणों में बांट कर आपने अपने संतोषी होने का पूर्ण परिचय दिया ॥ ७१ ॥ यम एवं नियमों के पालन में सर्वदा दत्तचित्त आपको देखकर काशी में श्री० शिवकुमार आदि आप के अनेक सहपाठी विस्मित होते थे ॥७२॥

अस्मत्कुलोद्भवानां संस्कृतभाषैव मातृभाषात्वम् ।
यायादिति निजहृदये यो मत्वाऽलं सदाऽवदत्सुरगाम् ॥७३॥
देशावलोकनमिषान्मरुप्रदेशं गतेन येनालम् ।
समकारि सर्वकृत्यं मज्जनपानादि गाङ्गपयसैव ॥७४॥
अद्वैतभावरम्यं वेदप्रतिपाद्यमागमप्रथितम् ।
शैवं मतं यदन्तःकरणे सिद्धान्तरूपतामापत् ॥७५॥
गोकुलदासस्य गृहे मुम्बापुर्यां दिनत्रयं स्थित्वा ।
कविवरगट्टूलालप्रशस्तिपात्रीचकार यः स्वान्तम् ॥७६॥

हमारे वंश में जन्म लेनेवालों की मातृभाषा देववाणी हो, ऐसा समझ कर आपने सर्वदा देववाणी में ही संभाषण करना स्वीकार किया ॥ ७३ ॥ देशाटन की इच्छा से मरुदेश में जाकर आपने जहां कूपोदक भी दुर्लभ था वहां समस्त स्नानादि व्यवहार गंगाजल से ही किया। इस बात को रामगढ़ निवासी सेठ श्री० केशवदेवजी पोद्दार आज भी जानते हैं ॥७४॥ वेदमंत्रों द्वारा प्रतिपादित, वेदान्तदर्शन के द्वारा अनुमोदित, शंकराचार्य-प्रतिष्ठापित, अद्वैततत्त्व का ही आपने सर्वत्र जाकर प्रचार किया ॥७५॥ मुंबई में श्रीयुत गोकुलदास ( भाटिया ) के यहां तीन दिन रह कर आपने श्री० पं० गट्टूलाल जी महाराज के द्वारा विस्तृत कीर्ति प्राप्त की ॥७६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यः पुण्यपत्तनस्थं विद्वद्वृन्दं विजित्य सद्वादे ।
तत्रत्यमानवानां मनांसि जग्राह सच्चरित्रेण ॥७७॥
गङ्गातटे मुहूर्ते ब्राह्मे मूर्धप्रदेशविवरेण ।
यल्लीलासंवरणं पुत्रस्याङ्के बभूव भाग्येन ॥७८॥
आत्मानमात्मजत्वं विम्बप्रतिविम्बभावतो नेतुम् ।
यो यौवने यथावद्भुवि प्रसिद्धां सुबुद्धिमुपयेमे ॥७९॥

पूना नगर में महाराष्ट्र-पंडितों के साथ शास्त्रार्थ में विजय लाभ प्राप्त कर आपने वहां पर सब को अपनी कृपा का पात्र बनाया। पूने में आपसे ( ब्राह्मणत्व देश परक है वा नहीं ? ) इस विषय पर एक मार्के का शास्त्रार्थ हुआ था ॥ ७७ ॥ कर्णवास में गंगा के तट पर ब्राह्ममुहुर्त में माघ शुक्ला एकादशी को ज्येष्ठ पुत्र के अंक में बैठकर ब्रह्मरंध्र से आपने मानवलीला का संवरण किया। विक्रमसंवत् १९५८ में आपका देहावसान हुआ ॥ ७८ ॥ विंबप्रतिविंबभाव से आतमा को आत्मज में प्रविष्ट करने के लिए, "शंभल" ग्राम के समीपवर्ती, सिकंदराबाद में रहने वाले, श्री० पं० तुलसीरामजी की सुपुत्री परमविदुषी श्रीमती सुबुद्धि देवी का आपने पाणिग्रहण किया था। ॥७९॥

गौरीदृशी सती सा सुबुद्धिदेवी यमात्मजं सुषुवे ।
सोऽयं तवाम्ब ! दासस्तव प्रसादेन जीवनं लेभे ॥८०॥
मामात्मजं परस्तात्सहोदरीं मे ममानुजं पश्चात् ।
शान्तिं सुबोधचन्द्रं स धर्मपत्न्यां यथाक्रमं प्राप ॥८१॥
सोऽयं टीकारामाभिधमुनिवर्यः स्वभावसंसिद्धाम् ।
मद्भाग्यवर्णपङ्क्तिं मातुर्गर्भे शुभाक्षरामलिखत् ॥८२॥
प्राक्तनसंस्कारवशात्सनाढ्यवंशे समुद्भवं प्राप्य ।
यद्यन्मया भवत्याः कृपया लब्धं तदस्ति ते पुरतः ॥८३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पातिव्रत्य धर्म के पालन में श्रीमती गौरी का अनुकरण करनेवाली सती साध्वी श्रीमती सुबुद्धि देवी ने जिसको सब से प्रथम जन्म दिया वह यह आप का दास आप की सेवा में उपस्थित है ॥८०॥ हमारे पिता जी ने सब से प्रथम मुझको, मेरे अनंतर मेरी बहन शांतिदेवी को तथा मेरे छोटे भाई पं० सुबोधचन्द्रजी को गृहस्थाश्रम में यथावसर प्राप्त किया ॥ ८१ ॥ जिनका जीवनचरित मैंने आपके समक्ष में उपस्थित किया है वे श्री० पं० टीकाराम जी मेरा नामकरण संस्कार गर्भ ही में कर चुके थे ॥८२॥ प्राक्तन जन्म के प्रबल संस्कारों से पाठकोपाधियुक्त सनाढ्य वंश में जन्म लेकर जो जो मैंने आप के वरदान से प्राप्त किया है वह सब आप की भेंट है ॥ ८३ ॥

[ ग्रन्थकारपरिचयः ]

ऋषिवह्निनन्दसोमैर्विरुद्धगत्या समन्विते वर्षे ।
मज्जन्म चन्द्रनगरे समभून्माघे सिते तृतीयायाम् ॥८४॥
एकाब्दमेव तातो मातुः क्रोडान्निजाङ्कमानीय ।
मां विश्वनाथपुर्यामदर्शयत्तं समस्तभूनाथम् ॥८५॥
अब्दत्रयादतीतं मुम्बापुर्यां स एव मे तातः ।
कविवरगट्टूलालप्रसादपात्रं क्रमेण मामकरोत् ॥८६॥

संवत् १९३७ माघ शुक्ला तृतीया, ४४।५६ मंगलवार, शतभिषा नक्षत्र, १३।२४ परिघयोग, २४।३५ गरकरण में मेरा जन्म "चन्द्रनगर" में हुआ। यह बदायूं जिला, तहसील गुन्नौर, परगना रजपुरा में है ॥८४॥ जब मैं एक वर्ष का हुआ तब मेरे पिता जी ने मुझ को काशी में विश्वनाथ जी का दर्शन करा कर श्री० पं० शिवकुमार जी के यहाँ कुछ दिन रक्खा ॥८५॥ जब मैं तीन वर्ष का हुआ तब मेरे पिता मुझको मुम्बई ले गए थे। वहां पं० गट्टूलाल जी के मकान में मेरा कुछ समय व्यतीत हुआ। मुझे पं० गट्टूलाल जी ने "त्रिवार्षिकः पण्डितः" कह कर कवि होने का वरदान दिया। मेरी मातृभाषा संस्कृत थी इस कारण सभी विद्वान् मुझे देखकर आशीर्वाद देते थे ॥८६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सैकतमेत्य पवित्रं भागीरथ्यास्ततःपरं तातः ।
अक्षरलेखनरीतिं मामङ्गुल्या निबोधयामास ॥८७॥
पञ्चमवर्षारम्भे गङ्गोत्तर्यां हिमालयावसितौ ।
मत्तात एव पूर्वं मामुपवीतेन भूषयामास ॥८८॥
युगलकिशोरगुरुभ्यो व्याकृतिमाद्यावधीत्य समयेन ।
श्रीविष्णुदत्तपादप्रसादलब्धं कवित्वमप्याप्तम् ॥८९॥
लब्धा मान्त्रिकदीक्षा तान्त्रिकदीक्षाऽपि दैवयोगेन ।
कुलदेव्याः पदपङ्कजमभन्तिकायाः कुलक्रमाद् दृष्टम् ॥९०॥

मुंबई से आकर अपने देश में भागीरथी के तट पर पिता जी ने मुझे रेती में अक्षर लिखना सिखाया। इस समय मेरी अवस्था चार वर्ष की थी ॥८७॥ "ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे" इस मनु के आदेशानुसार मेरे पिता जी ने गंगोत्तरी में जाकर मेरा स्वयं उपनयन संस्कार किया। इसके अनंतर कुछ दिन तक मैंने अपने ज्येष्ठ पितृव्य श्री० पं० जीवाराम जी के पास कर्णवास में व्याकरण और वेद पढ़ा ॥८८॥ इसके अनंतर मथुरा में जाकर मैंने श्री० पं० युगलकिशोरजी से अष्टाध्यायी और महाभाष्य पढ़ा और अनूपशहर में श्री० पं० विष्णुदत्तजी से साहित्य का अध्ययन किया ॥८९॥ मैंने मान्त्रिक दीक्षा के अतिरिक्त तान्त्रिक दीक्षा भी अपनी कुल देवी अमंतिका में जाकर गुरुचरणों से प्राप्त की थी। इसी समय पिता जी का स्वर्गवास हुआ। इस समय मेरी अवस्था बाईस वर्ष की थी। पिताजी की आज्ञा पालन करने के लिए इसके अनंतर तीन वर्ष फिर मैंने विद्याभ्यास किया ॥ ९० ॥

नास्तिकतामुखमर्दनदत्तस्वान्तेन नास्तिकग्रन्थान् ।
दृष्ट्वा तत्परिमर्दनमूला बहवो विनिर्मिता ग्रन्थाः ॥९१॥
विजिताः परःसहस्रा नास्तिकवर्याः सनातनं धर्मम् ।
रक्षितुमेव न दर्पाद्वैदिकतत्त्वं हृदन्तरे न्यस्तम् ॥९२॥
धर्मोद्धृतिं विधातुं लोके यद्यन्मया कृतं तत्तत् ।
जानन्ति देवि! सर्वे भारतभूमौ विचक्षणा मनुजाः ॥९३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नास्तिकता का मुख मर्दन करने के लिए मैंने कुछ दिन नास्तिक आर्यसमाजियों के समूह में प्रविष्ट होकर इनका सब भेद ज्ञात किया। अन्त में कुमारिलभट्ट की तरह इनसे अलग होकर इनके खंडन में अनेक ग्रंथ लिखे ॥ ९१ ॥ सनातन धर्म की रक्षा के लिए भारत के प्रत्येक प्रांत में नास्तिक आर्यसमाजियों के साथ पांच सौ से अधिक शास्त्रार्थ किए। मेरा विवाह अनूपशहर में श्री० पं० गंगाप्रसाद जी की सुपुत्री श्रीमती मालती देवी से हुआ। आजतक मैंने छोटे मोटे ६५ ग्रंथ लिखे जिनकी पद्य संख्या एक लक्ष से अधिक है ॥ ६२ ॥ मैंने जो कुछ कार्य किया वह सब अभिमान-रहित होकर केवल सनातन वैदिक धर्म के उद्धार के लिए किया है। इस बात को मेरी मित्रमंडली जानती है ॥९३॥

एवं निवेद्य निजवंशविशेषवृत्तं
मातुःपदाब्जमकरन्दपिपासुरेषः।
तस्याः पुरो निजकृतिं विनिधाय तूर्णं
वक्तव्यभावकथनाद्विरराम देव्याः ॥ ६४ ॥

इस प्रकार अपने वंश का विशेष वृत्तांत उपस्थित करते हुए ग्रंथकार ने अपना यह महाकाव्य भगवती के समक्ष में रखकर वरलाभ प्राप्त करने के लिए सरस्वती के चरणों में अपना सिर झुकाया ॥९४॥

बद्धाञ्जलिं समवलोक्य तथाविधन्तं
वागीश्वरी शिरसि तस्य करं निधाय।
भावाभिराममनसा सह सर्वदेवै-
रङ्गीचकार जगदुद्धृतयेऽस्य काव्यम् ॥६५॥

बद्धांजलिपूर्वक ग्रंथकार को नतमस्तक देख कर सरस्वती ने ग्रंथकार के सिर पर हाथ रखते हुए समस्त देवगणों के मध्य में यह महाकाव्य लोकोपकार के लिए स्वीकृत किया ॥ ६५ ॥

सर्वत्र विस्तृतिमिदं समुपैष्यतीति
दत्वा वरं भगवती कवये नमस्या।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हर्षेण हंसमधिरुह्य मुनीन्द्रवर्यै-
स्तुष्टा जगाम तरसा महदन्तरिक्षम् ॥६६॥

"यह महाकाव्य संसार में सर्वत्र विस्तार को प्राप्त होगा" यह वरदान देकर समस्तजन-वंदनीया भगवती सरस्वती देवी प्रसन्नता के साथ हंस पर चढ़कर आकाश में देखते देखते अंतर्हित हो गई ॥ ६६ ॥

अन्तर्हिते भगवतीनवहंसपत्रे
देवद्रुमोद्गतसुगन्धितपुष्पवृष्टिः ।
काव्यावसानसमयं सह वाद्यघोषै-
रादेशतो दिविसदां प्रकटीचकार ॥६७॥

भगवती के अंतर्हित होने पर आनन्द के साथ देवगणों ने नन्दन बन से वाद्यघोष के साथ साथ दिव्य पुष्पों की वर्षा की जिससे इस महाकाव्य की समाप्ति का समय सब को अवगत हो गया ॥ ६७ ॥

धर्माय काव्यमिदमद्भुतमर्पयित्वा
तस्यावसानसमये कविरप्यमन्दम् ।
देवाधिदेवगिरिजापतिपादपद्मं
सस्मार यत्करुणया वशमेति सर्वम् ॥६८॥

इधर धर्मदेव के चरणों में इस महाकाव्य रूपी अद्भुत उपायन को रख कर ग्रंथकार ने भी देवाधिदेव गिरजापति के चरणों में अपना मन लगाया ॥६८॥

धर्मे निवेश्य हृदयं हृदयेऽपि धर्मं
ये वर्तमानसमये मम काव्यमेतत् ।
मात्सर्यदोषमपहाय विविच्य तत्त्वं
द्रक्ष्यन्ति ते न यमराजमुखं कदाचित् ॥६९॥

जो मनुष्य धर्म में अपना मन लगा कर मन में सर्वदा धर्म का धारण करते हुए इस महाकाव्य का मात्सर्य दोष से मुक्त होकर तात्त्विक दृष्टि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

से पठन पाठन करेंगे वे भगवान् के कृपापात्र बन कर यमराज का मुख कदापि नहीं देखेंगे । यही हमारा ग्रन्थ के अन्त में आशीर्वाद है ॥९९॥

एतावदेवात्र निवेदयित्वा
निवेदनीयं भगवन्निदेशात् ।
प्रसादमाधुर्यगुणावनद्धः
समाप्यते धर्मकथाप्रबन्धः ॥१००॥

भगवान् की आज्ञा से इस महाकाव्य के अन्त में इतना ही कहकर प्रसाद एवं माधुर्य गुण से सम्बद्ध पच्चीस सर्ग और २२७५ पद्य वाला यह धर्मकथाप्रबन्ध समाप्त किया जाता है ॥ १०० ॥

इति श्रीमदखिलानन्दशर्मकृतौ सतिलके श्रीसनातनधर्मविजये महाकाव्ये, सरस्वतीवरलाभो नाम पञ्चविंशतितमः सर्गः

मुमुक्षु भवन वेद वेदाङ्ग पुस्तकालय
वाराणसी ।
आगत क्रमांक 0257
दिनांक 26.15

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

